अथ खलु देवपुत्रा आयुष्मतं सुभूतिमेतदवोचन्–सम्यक्संबुद्धोऽपि मायोपमः स्वप्नोपम इति, सम्यक्संबुद्धत्वमपि मायोपमं स्वप्नोपममिति आर्यसुभूते वदसि? सुभूतिराह–निर्वाणमपि देवपुत्रा मायोपमं स्वप्नोपममिति वदामि, किं पुनरन्यं धर्मम्? देवपुत्रा आहुः–निर्वाणमपि आर्यसुभूते मायोपमं स्वप्नोपममिति वदसि? सुभूतिराह–यद्यपि देवपुत्रा निर्वाणादपि अन्यः कश्चिद्धर्मो विशिष्टतरः स्यात्, तमप्यहं मायोपमं स्वप्नोपममिति वदेयम्। इति हि माया च निर्वाणं च अद्वयमेतदद्वैधीकारमिति । ( p. 196 )

इस उद्धरण से यह स्पष्ट है कि माध्यमिक संप्रदाय में मायातत्त्व का क्या स्थान है। शंकराचार्य-प्रणीत अद्वैत वेदान्त के इतिहासलेखक का यह काम है कि माध्यमिक संप्रदाय के इन तत्त्वों का अद्वैत वेदान्त पर कहाँ तक प्रभाव पड़ा है यह देखे।

माध्यमिक संप्रदाय का यह संक्षिप्त विवरण शून्यता-सिद्धान्त का निर्देश किये बिना समाप्त करना मैं नहीं चाहता। यह शून्यता-तत्त्व अत्यंत सूक्ष्म है और अनेक बार गलत समझा जाता है। बिना उसे ठीक ठीक समझे संसार से मुक्ति असंभव है। कर्म और क्लेश ( वासना ) के उन्मूलन से मुक्ति प्राप्त होती है। कर्म और क्लेश विकल्पों से यानी वस्तुस्वरूप की भ्रान्त धारणा से उद्भूत होते हैं। यह भ्रान्त धारणा प्रपञ्च से उद्भूत होती है। इस प्रपञ्च का निरास शून्यता-तत्त्व के अवबोध से हो जाता है:—

कर्मक्लेशक्षयान्मोक्षः कर्मक्लेशा विकल्पतः।
ते प्रपञ्चात्प्रपञ्चस्तु शून्यतायां निरुध्यते ॥ ( म. शा. १८·५ )

यह शून्यता ही प्रतीत्य-समुत्पाद या वस्तुमात्र का सोपाधिक अस्तित्व है :—

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे।
सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा ॥ ( म. शा. २४·१८ )

और यही अन्त में मध्यम मार्ग को ले जाता है। यह मध्यम मार्ग ही अस्तित्व नास्तित्व की अन्तिम स्थितियों को दूर रखने का उपदेश देता है, क्योंकि जिसका अस्तित्व ही सोपाधिक है वह किसीसे तुल्य नहीं बताया जा सकता :—

प्रतीत्य यद्यद् भवति न हि तावत्तदेव तत्।
न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतम् ॥ ( म. शा. १८·१० )

अन्य शब्दों में जो जो वस्तु हम देखते हैं, शून्य है, क्योंकि उसमें न धर्म का स्वभाव है, न चिह्न है, न लक्षण है। उस पर भी उसे स्वयंप्रकाशित माना जाता है :—

शून्याः सर्वधर्मा निःस्वभावयोगेन। निर्निमित्ताः सर्वधर्मा निर्निमित्तमुपादाय। अप्रणिहिताः सर्वधर्मा अप्रणिधानयोगेन। प्रकृतिप्रभास्वराः सर्वधर्माः प्रज्ञापारमितापरिशुद्धया। (पृ-१३३)

तथापि मुक्तिमार्ग के नाते इस शून्यता के साथ ज्यादा चिपके रहना ठीक नहीं। सब भ्रान्त धारणाएँ निरस्त करने के लिए ही उसका उपयोग करना उचित होगा। यदि हम इसी पर निर्भर रहें, तो हमारी अवस्था असाध्य ही समझिये :—

शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं बुधैः।
येषां तु शून्यता दृष्टिस्तानसाध्यान् बभाषिरे ॥ (म. शा. १३.८)

यही नहीं, अगर शून्यता के स्वरूप को समझने में भ्रांति हो गयी, तो वह मानव को नष्ट कर डालती है, जैसे ठीक रूप से न पकड़ा गया साँप या अपूर्णसाधित मंत्रविद्या साधक के विनाश का कारण बन जाती है:—

विनाशयति दुर्दृष्टा शून्यता मन्दमेधसम्।
सर्पो यथा दुर्गृहीतो विद्या वा दुष्प्रसाधिता ॥ (म. शा. २४.११)

कहा जाता है कि बुद्ध सम्यक् ज्ञान के आविर्भाव के बाद कुछ काल तक अपना पाया हुआ मुक्तिमार्ग दुनिया को समझाते हुए हिचकिचाये, इस विचार से कि दुनिया उसे ठीक ठीक समझ सकेगी या नहीं। (म. शा. २४.१२) नागार्जुन अपने चतुःस्तव में बुद्ध की स्तुति करते हुए कहते हैं:—

सर्वसंकल्पहानाय शून्यतामृतदेशना।
यश्च तस्यामपि ग्राहस्त्वयासाववसादितः ॥

इस तत्त्व की सूक्ष्मता तथा सामान्य जनता—चाहे वह बुद्धानुयायी भी क्यों न हो—की उसे समझ लेने की अक्षमता चंद्रकीर्ति ने निम्न उद्धरण में चतुरता से समझा दी है:—

अत्राहुः—अहो बत हता प्रत्याशा अस्माकम्, ये हि नाम वयं स्वविकल्पविकल्पितातिकठिनकुदर्शनमालुतालताजालावबद्धेषु निर्वाणपुरगाम्यविपरीतमार्गगमनपरिभ्रष्टेषु अनतिक्रान्तसंसाराटवीकान्तारदुर्गेषु कणभक्षाक्षपाददिगम्बरजैमिनिनैयायिकप्रभृतिषु तीर्थकरेषु अविपरीतस्वर्गापवर्गमार्गोपदेशाभिमानिषु स्पृहां परित्यज्य निरवशेषान्यतीर्थमतान्धकारोपघातकं स्वर्गापवर्गानुगाम्यविपरीतमार्गसंप्रकाशकं सद्धर्मदेशनातिपटुतरकिरणव्याप्ताशेषाशामुखं विविधविनेयजनमतिकमलकुड्मलविबोधनतत्परं यथावदवस्थितपदार्थतत्त्वार्थभाजनानाममलैकचक्षुर्भूतं सकलजगच्छरण्यभूतमद्वितीयं दशबलवैशारद्यावेणिकबुद्धधर्मामलमण्डलं महायानमहानयसारथिवरं सप्तबोध्यङ्गोत्तुङ्गतुरंगपदातियोजितं सकलत्रिभुवनजनजातिजरामरणसंसारकान्तारसरिदुच्छोषणतत्परं चतुरसममारारातिसमरशरसंपातविजयिनं सकलजगदसद्ग्राहराहुग्रहविग्रहोद्ग्रहनिरासिनं तथागतसवितारमज्ञानघनगहनान्धकारनिराकरणाय मोक्षार्थिनोऽनुत्तरसम्यक्संबोध्यर्थिनः शरणं प्रतिपन्नाः। तस्य च त्वया

एवं शून्यमुपादानमुपादाता च सर्वशः।
प्रज्ञप्यते च शून्येन कथं शून्यस्तथागतः ॥

इत्यादिना स्वभावतोऽसत्त्वं ब्रुवता भवता हता अस्माकं मोक्षप्रत्याशा अनुत्तरसम्यक्संबोध्यागमाभिलाषः। तदलं भवता तथागतमहादित्यप्रच्छादकेन आकालिकघनघनावलीविसरणेन जगदन्धकारोपमेनेति। उच्यते। अस्माकमेव हता प्रत्याशा भवद्विधेष्वबुधजनेषु, ये हि नाम भवन्तः मोक्षकामतया अन्यतीर्थ्यमतानि परित्यज्य भगवन्तं तथागतमपि अविपरीतशास्तारं प्रतिपद्य परमगम्भीरमनुत्तरं सर्वतीर्थ्यवादासाधारणं नैरात्म्यसिंहनादमसहमानाः

कुरंगमा इव स्वाधिमुक्तिदरिद्रतया विविधकुदृष्टिव्यालमालाकुलं विपर्यस्तजनानुयातं तमेव महाघोरसंसाराटवीकान्तारन्दारकानुगामार्गमवगाहन्ते।....न च वयं सर्वथैव निष्प्रपञ्चानां तथागतानां नास्तित्वं ब्रूमः।....येन त्वभिप्रायेण शून्यत्वादिकमुपदिश्यते, स आत्मपरीक्षातो बोद्धव्यः॥

## ४ नागार्जुन तथा उनकी ग्रंथरचना—

नागार्जुन को बौद्धों के माध्यमिक संप्रदाय का प्रवर्तक ठीक ही माना जाता है। एक अन्य नागार्जुन है, जिसने प्रमुखतः तंत्र तथा वैद्यक (रसायन और धातु) के क्षेत्र में विपुल लेखन किया है। इससे आचार्य नागार्जुन को पृथक् समझना ही चाहिये। **महाव्युत्पत्ति** (१७७·१-२) में स्पष्ट निर्देश मिलता है कि नागार्जुन और नागाह्वय दो भिन्न बौद्ध आचार्य हैं, जो अन्य ३६ आचार्यों के शिरोमणिभूत विराजते हैं। इन सबमें से अनेक आचार्यों से हमें ग्रंथ प्राप्त हुए हैं। हुएन्त्संग ने भी नागार्जुन को धरती को प्रकाशित करनेवाले चार सूर्यों में से एक माना है। बाकी तीन सूर्य हैं अश्वघोष, आर्यदेव और कुमारलात। चीनी परंपरा के अनुसार नागार्जुन को कनिष्क के समकालीन माना जाता है। राजतरंगिणी (११ वीं शताब्दी) कहती है (१·१६८–७७) कि वह हुष्क, जुष्क, एवं कनिष्क के समकालीन थेः—

अथाभवन् स्वनामाङ्कपुरत्रयविधायिनः।
हुष्कजुष्ककनिष्काख्यास्त्रयस्तत्रैव पार्थिवाः॥
प्राज्ये राज्यक्षणे तेषां प्रायः कश्मीरमण्डलम्।
भोज्यमास्ते स्म बौद्धानां प्रव्रज्योर्जिततेजसाम्॥
बोधिसत्त्वश्च देशेऽस्मिन्नेको भूमीश्वरोऽभवत्।
स च नागार्जुनः श्रीमान् षडर्हद्वनसंश्रयी॥
तस्मिन्नवसरे बौद्धा देशे प्रबलतां ययुः।
नागार्जुनेन सुधिया बोधिसत्त्वेन पालिताः॥

माध्यमिक संप्रदाय और उसके अनुयायियों के विषय में अधिक जानकारी प्राप्त करने के लिए देखिये मेरी रचना : Études sur Āryadeva et son Catuḥśataka पैरिस १९२३’।

भारतीय परंपरा भी लगभग समान रूप से उन्हें कनिष्क का समकालीन मानती आयी है। कनिष्क के साथ नागार्जुन की गाढ़ी मित्रता भी दिखाई देती है। नागार्जुन का कनिष्क के नाम लिखा हुआ एक पत्र **सुहृल्लेख** भी तिब्बती अनुवाद में पाया जाता है। इस लिए इतना तो बेखटके माना जा सकता है कि ख्रिस्तोत्तर दूसरी सदी के उत्तरार्धमें (लगभग १७० से २०० ई.) नागार्जुन का जीवन-काल रहा।

कुमारजीवलिखित चीनी अनुवाद में उपलब्ध नागार्जुन की जीवनी के अनुसार (४०५ ई.) उनका जन्म दक्षिणभारत के एक ब्राह्मणकुल में हुआ। वेदों का अध्ययन

करके अन्य ब्राह्मणीय विद्याओं में वह निष्णात हो गये। वह एक सिद्ध मांत्रिक के रूप में भी विख्यात थे। किसी नागराजा से मोतियों का हार उन्हें प्राप्त हुआ था इस बात का उल्लेख बाणभट्ट ने किया है। तिब्बती इतिहास-सामग्री में उन्हें अविच्छिन्न रूप से सिद्धहस्त मांत्रिक माना गया है। उनकी आयु सुदीर्घ ४०० साल की बतायी गयी है। यह सब किंवदन्तियाँ जान पड़ती हैं। ऐसी सामग्री से अधिकृत इतिहास बनाना कठिन है। नेपाल के नौ धर्मों या आगमों का ग्रंथ लंकावतारसूत्र बताता है ( १०·१६४ – १६६ ) :—

निर्वृते सुगते पश्चात्कालोऽतीतो भविष्यति ।
महामते निबोध त्वं यो नेत्रीं धारयिष्यति ॥
दक्षिणापथवेदल्यां भिक्षुः श्रीमान् महायशाः ।
नागाह्वयः स नाम्ना तु सदसत्पक्षदारकः ॥
प्रकाश्य लोके मद्यानं महायानमनुत्तरम् ।
आसाद्य भूमिं मुदितां यास्यतेऽसौ सुखावतीम् ॥

एक महत्त्वपूर्ण बात ऊपर उद्धृत श्लोकों के बारे में यह है कि वे उस ग्रंथ के दसवें यानी अंतिम अध्याय में मिलते हैं। प्रायः दसवें अध्याय में प्रथम नौ अध्यायों के श्लोक इकट्ठा किये जाते हैं। लेकिन ठीक ये श्लोक ही ऐसे है जो पहले नौ अध्यायों में नहीं मिलते। अतः उनकी प्राचीनता तथा सत्यता शंकास्पद है। जो भी हो, इन श्लोकों में नागार्जुन का संबंध दक्षिणापथ से बताया गया है। ‘ वेदली ’ पद का अर्थ अनिश्चित है। उसे भ्रम से विदर्भ मानकर उसको नागार्जुन का जन्मस्थान या निवासस्थान बताया गया है। मेरी धारणा है कि उनका जन्मस्थान खोजने हमें और दक्षिण की तरफ जाना पड़ेगा। नागार्जुनिकोंडा से उसका संबंध जोड़ना सत्य से दूर नहीं होगा। यहाँ हाल ही में बौद्धधर्म के प्राचीन अवशेष खोज में मिले हैं। बौद्धधर्मस्वीकार के बाद वह उत्तर की तरफ कश्मीर तक गये और वहाँ उन्होंने नामवरी भी हासिल की। कहा जाता है कि उन्होंने अपने अंतिम दिन आज के आन्ध्र राज्यांतर्गत श्रीशैल में बिताये।

नागार्जुन के नाम पर ‘ तंजुर ’ और ‘ कंजुर ’ में बहुत सी रचनाएँ बतायी जाती हैं, जिनकी संख्या १२२ से कम नहीं ( देखिये टोहोकु सूची )। यह संख्या तंत्र और वैद्यक ( आचार्य नागार्जुन भाषित अवमेषज कल्प – टोहोकु सं. ४३०८ ) के ग्रंथों को छोड़कर है। इन तंत्र-वैद्यक ग्रंथों में से अधिकांश का कर्तृत्व किसी दूसरे, स्पष्टतया बाद में हुए, नागार्जुन का हो सकता है। हमारा विश्वास है कि दार्शनिक नागार्जुन की निम्नलिखित रचनाएँ निःसंदिग्ध हैं :—

( १ ) ‘ प्रज्ञा ’ या मध्यमकशास्त्र की कारिकाएँ और उसकी टीका अकुतोभय ;
( २ ) विग्रहव्यावर्तनी और उसकी टीका;
( ३ ) युक्तिषष्टिका ;
( ४ ) शून्यतासप्तति, और उसकी टीका ;

(५) महायानविंशिका ;
(६) अक्षरशतक और उसकी व्याख्या ;
(७) प्रतीत्यसमुत्पादहृदय और उसकी टीका;
(८) चतुःस्तव;
(९) प्रज्ञापारमितास्तोत्र;
(१०) भावनाक्रम;
(११) सूत्र-समुच्चय यानी महायान सूत्रों का संग्रह ;
(१२) सुहृल्लेख या आर्य नागार्जुनबोधिसत्त्व सुहृल्लेख ;
(१३) भवसंक्रान्ति ;
(१४) रत्नावली ; और
(१५) वैदल्य-प्रकरण

धर्मसंग्रह नामक रचना, जो बौद्ध पारिभाषिक शब्दों का संग्रह है (अॅनेक्डोटा ऑक्झोनिएँशिया जिल्द–१ भाग ५ में संपादित और जो पुस्तक के अंत के संकल्प में नागार्जुन लिखित बतायी गयी है, इस तत्त्वज्ञ की असली कृति नहीं प्रतीत होती। उनके बाद के किसी और नागार्जुन की हो सकती है, जो कि संभवतः हीनयानी हो।

उपरिनिर्दिष्ट रचनाओं में से कतिपय मूल संस्कृत में उपलब्ध हैं, किन्तु बाकी रचनाएँ तिब्बती और चीनी अनुवादों से ही ज्ञात हैं।

तारानाथ (Geschichte पृ. ७१) कहते हैं कि हीनयानियों ने शतसाहस्रिका प्रज्ञापारमिता का कर्ता नागार्जुन को बताया है, लेकिन यह संभवनीय नहीं माळूम होता। प्रज्ञापारमिता - वाङ्मय — पंचविंशति और अष्टसाहस्रिका जैसी रचनाएँ — पहले ही से विद्यमान था। तिब्बती परंपरा में मध्यमकशास्त्रकारिका के वैकल्पिक नाम 'प्रज्ञा' तथा 'प्रज्ञापारमिता' में जो शब्दसादृश्य है उसीके कारण यह भ्रम संभव दीखता है। वास्तव में नागार्जुनने प्रज्ञापारमिता वाङ्मय तथा अन्य महायानसूत्रों का संहितीकरण अपनी कारिकाओं में किया है जिस प्रकार बादरायण ने उपनिषदों की शिक्षा का शारीरकसूत्रों में।

नागार्जुन या (Klu-sgrub) नागार्जुनगर्भ के नाम पर टोहोकु सूची में निर्दिष्ट १२२ रचनाओं में से महत्त्वपूर्ण और असली रचनाएँ ऊपर की सूची में समाविष्ट हैं। अन्य रचनाएँ अप्रधान तथा अधिकांश तंत्रविषयक हैं।

## ५. नागार्जुन और उनकी शिष्यपरंपरा

आर्यदेव या देव नागार्जुन का खास व्यक्तिगत अंतेवासी बतलाया गया है। उसकी रचनाएँ हैं चतुःशतक, हस्तवालप्रकरण, और कतिपय छोटी रचनाएँ। उनके उत्तराधिकारी टीकाकारों में बुद्धपालित, भव्य या भावविवेक, तथा चंद्रकीर्ति के नाम बताये जा सकते हैं। बुद्धपालित की एक ही रचना मध्यमकशास्त्र की टीका तिब्बती में प्राप्त है। उसकी अपेक्षा भव्य या भावविवेक की रचना अधिक विपुल है। प्रज्ञाप्रदीप नामक मध्यमकशास्त्र

की टीका के अतिरिक्त उसकी माध्यमिक सिद्धान्त-विषयक कई रचनाएँ हैं, जिनके नाम ये हैं; — १. मध्यमकरत्नप्रदीप २. मध्यमकहृदय — तर्कज्वाला टीकासंवलित ३. मध्यमकार्थ-संग्रह ( तीनों तिब्बती अनुवाद में प्राप्त ); ४. करतलरत्न — चीनी अनुवादसे ज्ञात हाल में संस्कृत में रूपान्तरित ( Nanjio क्र-१२३७ ); ५. निकायभेदविभंगव्याख्या, बौद्ध धर्म की १८ शाखाओं का विवरण: और ६ तत्त्वामृतावतार ( ऊपर क्रमांक ४ में दो बार निर्दिष्ट )।

तारानाथ और उनका अनुसरण करते हुए शिएफनर ( पृ. १७४ ) कहते हैं कि देवशर्माने मध्यमकशास्त्र पर सीताभ्युदय नामक टीका लिखी है, जिसमें चन्द्रकीर्ति के मतों का खंडन किया है। मूल संस्कृत रचना अप्राप्य है, और उसका निर्देश तक 'तंजुर' या 'कंजुर' में नहीं मिलता।

**मध्यमकशास्त्र** पर जो टीकाग्रंथ रचे गये हैं उनमें सबसे महत्त्वपूर्ण चंद्रकीर्ति-कृत **प्रसन्नपदा** है। चंद्रकीर्ति माध्यमिकों के 'प्रसंग संप्रदाय' का अनुयायी था। उसका दावा है कि नागार्जुन की स्थापनाओं का आशय सचाई के साथ समझाने का सफल प्रयास उसने **कारिकाओं** की टीका में किया है। बुद्धपालित और भव्य की टीकाओं का उल्लेख उसने किया है, और कई स्थलों में भव्य की मान्यताओं का खंडन भी किया है। उसकी टीका यथार्थ ही **प्रसन्नपदा** है, और शैली की प्रसन्नता की दृष्टि से वह शंकराचार्य के ब्रह्मसूत्रभाष्य की पूर्ववर्ती पथ-निर्देशिका है। ऊपर इस टीकाके कई उद्धरण दिये गये हैं, जिनसे पाठक उसकी विवेचनशैली की झाँकी पा सकते हैं। अपनी स्थापनाओं के पुष्ट्यर्थ उसने महायानसूत्रों से पर्याप्त उद्धरण लिये हैं। भव्य के समान ही उसने माध्यमिक संप्रदाय पर छोटी छोटी पुस्तिकाएँ लिखी हैं:— ( १ ) मध्यमकावतार—पद्यमय षडध्यायी सटीक रचना; ( २ ) मध्यमक-प्रज्ञावतार; ( ३ ) पंचस्कंध प्रकरण। इनके अलावा उसने नागार्जुन कृत युक्तिषष्टिका और शून्यतासप्तति पर तथा आर्यदेवविरचित **चतुःशतक** पर टीकाएँ भी लिखी हैं। **प्रसन्नपदा** तथा चतुःशतक-टीका के कुछ खंडों को छोड़कर बाकी सब रचनाएँ तिब्बती में सुरक्षित हैं।

चंद्रकीर्ति के बाद माध्यमिक संप्रदाय के लेखकों में दो ही नाम उल्लेखनीय हैं— ( १ ) **शिक्षासमुच्चय** तथा **बोधिचर्यावतार** का कर्ता शांतिदेव और ( २ ) बोधिचर्यावतार का टीकाकार प्रज्ञाकरमति।

**प. ल. वैद्य**

पूना
१ जनवरी, १९५९

## ABBREVIATIONS

AK (अ० क०)—*Avadāna-kalpalatā* of Kṣemendra, Bibliotheca Indica edition; our edition in BST Nos. 22-23.

AŚ (अ० श०)—*Avadāna-Śataka* by J. S. Speyer, Bibliotheca Buddhica edition; our edition is BST No. 19.

Aṣṭa (अष्ट०)—*Aṣṭasāhasrikā* Prajñāpāramitā, ed. by Rajendralal Mitra.

BC—*Buddhacarita* of Aśvaghoṣa, edns. by Cowell and Johnstone;.

BCA—*Bodhicaryāvatāra* of Śāntideva, with *Pañjikā* of Prajñākaramati, ed. by Poussin; bare text in Zapiski.

BCP—*Bodhicaryāvatārapañjikā* of Prajñākaramati, ed. by Poussin.

CP—*Cariyāpiṭaka*, PTS edition; also by B. C. Law.

CS—*Catuḥstava* of Nāgārjuna (I. *Nirupama*, II. *Lokātīta*, III. *Acintya, and* IV. *Paramārtha*).

DA (दिव्या०) *Divyāvadāna*, our edition in BST No. 20; also Cowell and Neil's edition.

DBh (द० भू०)—*Daśabhūmikasūtra* ed. by Rahder.

GM—*Gilgit Mss.* ed. by N. Dutt.

GV (गण्ड०)—*Gaṇḍavyūhasūtra*, ed. by Suzuki and Idzumi, Kyoto, Japan, 1949.

J (जा०)—*Jātaka*, ed. by Fausböl.

JM (जा०मा०) *Jātakamālā* of Ārya Śūra, ed. by H. Kern, HOS.; our edition in BST No. 21.

KV (कारण्ड०)—*Kāraṇḍavyūha*, BTS edition.

(लङ्का०)—*Laṅkāvatārasūtra*, ed. by B. Nanjio, Kyoto, Japan, 1923; reprint 1956.

LV (ललित०)—*Lalita-Vistara*, our edition in BST No. 1.

MŚ (म०शा०)—*Madhyamakaśāstra* of Nāgārjuna, our edition in BST No. 10.

MV (म०वृ०)—*Madhyamakavṛtti* called *Prasannapadā* of Candrakīrti, our edition in BST No. 10.

MVastu (म० व०)—*Mahāvastu*, ed. by E. Senart.

MVy (म० व्यु०)—*Mahāvyutpatti* ed. by I. P. Minayeff, Bibliotheca Buddhica.

RP (राष्ट्र०)—*Rāṣṭrapālaparipṛcchā*, ed. by L. Feer, Bibliotheca Buddhica.

ŚS (शिक्षा०)—*Śikṣāsamuccaya* of Śāntideva, ed. by Bendall in Bibliotheca Buddhica; our edition in BST No. 11.

SA (सूत्रा०) *Sūtrālaṁkāra* of Asaṅga, ed. by S. Lévi.

SN—*Saundarananda* of Aśvaghoṣa, edns. by H. P. Shastri and Johnstone.

SR (समाधि)—*Samādhirājasūtra* ed. by N. Dutt, in GM; our edition in BST No. 2.

SDP (सद्धर्म०)—*Saddharmapuṇḍarīkasūtra*, ed. by N. Dutt; also by Kern and Nanjio.

SP (सुवर्ण०)—*Suvarṇaprabhāsasūtra*. ed. by B. Nanjio and H. Idzumi, Kyoto, Japan, 1931; also by J. Nobel.

SV (सुखा०)—*Sukhāvatīvyūha*, ed. by Max Müller.

T—Tibetan translation.

T—(followed by number)—Tohoku Catalogue.

TG (तथा०)—*Tathāgataguhyasūtra* or *Guhyasamāja*, GOS edn.

TS (तत्त्वसं०)—*Tattvasaṁgraha* of Śāntarakṣita, GOS edition.

TTP—*Taisho Tripiṭaka*, Tokyo, 1924-1934.

VCh (वज्र०)—*Vajracchedikā*, ed. by Max Müller.

(N.B.—Most of the works mentioned above are planned to be included in the BUDDHIST SANSKRIT TEXTS Series. The list will be found at the end of the Volume.)

नागार्जुनीयं

# मध्यमकशास्त्रम् ।

## आचार्यचन्द्रकीर्तिविरचितया प्रसन्नपदाख्यव्याख्यया संवलितम् ।

१

### प्रत्ययपरीक्षा नाम प्रथमं प्रकरणम् । B 1

आर्यमञ्जुश्रिये कुमारभूताय नमः ।

योऽन्तद्वयावासविधूतवासः[1] संबुद्धधीसागरलब्धजन्मा ।
सद्धर्मतोयस्य[2] गभीरभावं यथानुबुद्धं कृपया जगाद ॥ १ ॥

यस्य दर्शनतेजांसि परवादिमतेन्धनम् ।
दहन्त्यद्यापि लोकस्य मानसानि तमांसि च ॥ २ ॥ 5

यस्यासमज्ञानवचःशरौघा निघ्नन्ति निःशेषभवारिसेनाम् । B2
त्रिधातुराज्यश्रियमादधाना विनेयलोकस्य सदेवकस्य ॥ ३ ॥
नागार्जुनाय प्रणिपत्य तस्मै तत्कारिकाणां विवृतिं करिष्ये ।
उत्तानसत्प्रक्रियवाक्यनद्धां तर्कानिलाव्याकुलितां प्रसन्नाम् ॥ ४ ॥

तत्र 'न स्वतो नापि परतो न द्वाभ्याम्' (१.३) इत्यादि वक्ष्यमाणं शास्त्रम् । तस्य 10 कानि संबन्धाभिधानप्रयोजनानि इति प्रश्ने, मध्यमकावतारविहितविधिना अद्वयज्ञानालंकृतं महाकरुणोपाय[3]पुरःसरं प्रथमचित्तोत्पादं तथागतज्ञानोत्पत्तिहेतुमादिं कृत्वा यावदाचार्यनागार्जुनस्य B 3 विदिताविपरीतप्रज्ञापारमितानीतेः करुणया परावबोधार्थं शास्त्रप्रणयनम्, इत्येष तावच्छास्त्रस्य संबन्धः—

यैश्छास्ति[4] वः क्लेशरिपूनशेषान्संत्रायते दुर्गतितो भवाच्च । 15
तच्छासनात्त्राणगुणाच्च शास्त्रमेतद्द्वयं चान्यमतेषु नास्ति ॥

इति । स्वयमेव चाचार्यो वक्ष्यमाणसकलशास्त्राभिधेयार्थं सप्रयोजनमुपदर्शयन्, तदविपरीत-संप्रकाशत्वेन माहात्म्यमुद्भाव्य तत्स्वभावाव्यतिरेकवर्तिने परमगुरवे तथागताय शास्त्रप्रणयन-निमित्तकं प्रणामं कर्तुकाम आह—

---

१. Mss. योऽन्तर्दयावास° for योऽन्तद्वयावास° which is confirmed by T. २. T सद्धर्मकोषस्य for सद्धर्मतोयस्य. ३. T om. उपाय°. ४. T om. this stanza.

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम् ।
अनेकार्थमनानार्थमनागममनिर्गमम् ॥

यः प्रतीत्यसमुत्पादम्

B 4 इत्यादि । तदत्रानिरोधाद्यष्टविशेषणविशिष्टः प्रतीत्यसमुत्पादः शास्त्राभिधेयार्थः । सर्वप्रपञ्चोपशम-
5 शिवलक्षणं निर्वाणं शास्त्रस्य प्रयोजनं निर्दिष्टम् ।

तं वन्दे वदतां वरम् ।

इत्यनेन प्रणामः । इत्येष तावच्छ्लोकद्वयस्य समुदायार्थः ॥

अवयवार्थस्तु विभज्यते । तत्र निरुद्धिर्निरोधः । क्षणभङ्गो निरोध इत्युच्यते । उत्पादन-मुत्पादः । आत्मभावोन्मज्जनमित्यर्थः । उच्छित्तिरुच्छेदः । प्रबन्धविच्छित्तिरित्यर्थः । शाश्वतो नित्यः ।
10 सर्वकाले स्थाणुरित्यर्थः । एकश्चासावर्थश्चेत्येकार्थोऽभिन्नार्थः । न पृथगित्यर्थः । नानार्थो भिन्नार्थः । पृथगित्यर्थः । आगतिरागमः, विप्रकृष्टदेशावस्थितानां संनिकृष्टदेशागमनम् । निर्गतिर्निर्गमः,
B 5 संनिकृष्टदेशावस्थितानां विप्रकृष्टदेशगमनम् । एतिर्गत्यर्थः, प्रतिः प्राप्त्यर्थः । उपसर्गवशेन धात्वर्थविपरिणामात् –

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
15 गङ्गासलिलमाधुर्यं सागरेण यथाम्भसा ॥

प्रतीत्यशब्दोऽत्र ल्यबन्तः प्राप्तावपेक्षायां वर्तते । समुत्पूर्वः पदिः प्रादुर्भावार्थ इति समुत्पादशब्दः प्रादुर्भावे वर्तते । ततश्च हेतुप्रत्ययापेक्षो भावानामुत्पादः प्रतीत्यसमुत्पादार्थः ॥

अपरे तु ब्रुवते – इतिर्गमनं विनाशः । इतौ साधव इत्याः । प्रतिर्वीप्सार्थः । इत्येवं तद्धितान्तमित्यशब्दं व्युत्पाद्य प्रति प्रति इत्यानां विनाशिनां समुत्पाद इति वर्णयन्ति । तेषां
B 6 20 " प्रतीत्यसमुत्पादं वो[२] भिक्षवो देशयिष्यामि ", " यः प्रतीत्यसमुत्पादं पश्यति स धर्मं पश्यति " इत्येवमादौ विषये वीप्सार्थस्य संभवात् समाससद्भावाच्च स्याज्ज्यायसी व्युत्पत्तिः । इह तु " चक्षुः प्रतीत्य रूपाणि च उत्पद्यते चक्षुर्विज्ञानम् " इत्येवमादौ विषये साक्षादङ्गीकृतार्थ-विशेषे चक्षुः प्रतीत्येति प्रतीत्यशब्दः एकचक्षुरिन्द्रियहेतुकायामप्येकविज्ञानोत्पत्तावभीष्टायां
B 7 कुतो वीप्सार्थता ? प्राप्त्यर्थस्त्वनङ्गीकृतार्थविशेषेऽपि प्रतीत्यशब्दे संभवति–प्राप्य संभवः, प्रतीत्य
25 समुत्पाद इति । अङ्गीकृतार्थविशेषेऽपि संभवति–चक्षुः प्रतीत्य, चक्षुः प्राप्य, चक्षू रूपं[३] चापेक्ष्येति व्याख्यानात् । तद्धितान्ते चेत्यशब्दे " चक्षुः प्रतीत्य रूपाणि च उत्पद्यते चक्षुर्विज्ञानम् " इत्यत्र प्रतीत्यशब्दस्याव्ययत्वाभावात् समासासद्भावाच्च विभक्तिश्रुतौ सत्यां चक्षुः प्रतीत्य विज्ञानं रूपाणि च इति निपातः स्यात् । न चैतदेवम् । इत्यव्ययस्यैव ल्यबन्तस्य व्युत्पत्तिरभ्युपेया ॥

---

१. Mss. स्थाणुः for स्थास्नुः (?). २. Mss. बोधि for वो which is confirmed by T.
३. Mss. P चक्षुः प्रेक्ष्येति for चक्षू रूपं चापेक्ष्य which is confirmed by T.

यस्तु—" वीप्सार्थत्वात्प्रत्युपसर्गस्य, एतेः प्राप्त्यर्थत्वात्, समुत्पादशब्दस्य च संभवार्थत्वात्, तांस्तान् प्रत्ययान् प्रतीत्य समुत्पादः प्राप्य संभव इत्येके[1]। प्रति प्रति विनाशिनामुत्पादः प्रतीत्यसमुत्पाद इत्यन्ये " —इति परव्याख्यानमनूद्य दूषणमभिधत्ते, तस्य परपक्षानुवादाकौशलत्वमेव तावत्संभाव्यते। किं कारणम्? यो हि प्राप्त्यर्थं प्रतीत्यशब्दं व्याचष्टे, नासौ प्रतिं वीप्सार्थं व्याचष्टे, नाप्येतिं प्राप्त्यर्थम्, किं तर्हि प्रतिं प्राप्त्यर्थम्, समुदितं च प्रतीत्यशब्दं प्राप्तावेव वर्णयति॥ B 8 5

तेन इदानीं प्राप्य संभवः प्रतीत्यसमुत्पाद इत्येवं व्युत्पादितेन प्रतीत्यसमुत्पादशब्देन यदि निरवशेषसंभविपदार्थपरामर्शो विवक्षितः, तदा तां तां हेतुप्रत्ययसामग्रीं प्राप्य संभव प्रतीत्य समुत्पाद इति वीप्सासंबन्धः क्रियते। अथ विशेषपरामर्शः, तदा चक्षुः प्राप्य रूपाणि चेति न वीप्सायाः संबन्ध इति॥ एवं तावदनुवादाकौशलमाचार्यस्य॥

एतद्वा[2] अयुक्तम्। किं च। अयुक्तमेतत् " चक्षुः प्रतीत्य रूपाणि च उत्पद्यते चक्षुर्विज्ञानम्[3] " इति, अत्रार्थद्वयासंभवात् इति यदुक्तं दूषणम्, तदपि नोपपद्यते। किं कारणम्? कथमनेनैव तत्प्राप्तेः संभव इति युक्त्यनुपादानेन प्रतिज्ञामात्रत्वात्। अथायमभिप्रायः स्यात्—अरूपित्वाद्विज्ञानस्य चक्षुषा प्राप्तिर्नास्ति, रूपिणामेव तत्प्राप्तिदर्शनादिति, एतदपि न युक्तम्, 'प्राप्तफलोऽयं भिक्षुः' इत्यत्रापि प्राप्त्यभ्युपगमात्। प्राप्यशब्दस्य च अपेक्ष्यशब्दपर्यायत्वात्। प्राप्त्यर्थस्यैव आचार्यनागार्जुनेन प्रतीत्यशब्दस्य 10 B 9 15

तत्तत्प्राप्य यदुत्पन्नं नोत्पन्नं तत्स्वभावतः।

इत्यभ्युपगमात्। ततो दूषणमपि नोपपद्यते इत्यपरे॥

यच्चापि स्वमतं व्यवस्थापितम्—" किं तर्हि, अस्मिन् सति इदं भवति, अस्योत्पादादिदमुत्पद्यते, इति इदंप्रत्ययतार्थः प्रतीत्यसमुत्पादार्थ इति ", तदपि नोपपद्यते, प्रतीत्यसमुत्पादशब्दयोः प्रत्येकमर्थविशेषानभिधानात्, तद्व्युत्पादस्य च विवक्षितत्वात्[4]॥ B 10 20

अथापि रूढिशब्दं प्रतीत्यसमुत्पादशब्दमभ्युपेत्य अरण्येतिलकादिवदेवमुच्यते, तदपि नोपपन्नम्, अवयवार्थानुगतस्यैव प्रतीत्यसमुत्पादस्य आचार्येण

तत्तत्प्राप्य यदुत्पन्नं नोत्पन्नं तत्स्वभावतः।

इत्यभ्युपगमात्। अथ

अस्मिन्सतीदं भवति ह्रस्वे दीर्घं यथा सति। 25

इति व्याख्यायमानेन ननु तदेवाभ्युपगतं भवति, ह्रस्वं प्रतीत्य, ह्रस्वं प्राप्य, ह्रस्वमपेक्ष्य[5] दीर्घं भवतीति। ततश्च यदेव दूष्यते तदेवाभ्युपगम्यते इति न युज्यते। इत्यलं प्रसङ्गेन॥

---

१. T प्रतीत्यसमुत्पादशब्दं for प्रतीत्यशब्दं. २. T om. एतद्वा अयुक्तम्। किं च. ३. P विज्ञानमित्यत्राह यार्थाभिसंभवादिति वेति यदुक्तम्; C यार्थाभिसंबन्धादिति for विज्ञानमिति अत्रार्थद्वयासंभवात which is confirmed by T. ४. Mss. विवर्जितत्वात् for विवक्षितत्वात् which is based on T. ५. T प्रतीत्य for अपेक्ष्य.

तदेवं हेतुप्रत्ययापेक्षं भावानामुत्पादं परिदीपयता भगवता अहेत्वेकहेतुविषमहेतुसंभूतत्वं स्वपरोभयकृतत्वं च भावानां निषिद्धं भवति, तन्निषेधाच्च सांवृतानां पदार्थानां यथावस्थितं सांवृतं स्वरूपमुद्भावितं भवति। स एवेदानीं सांवृतः प्रतीत्यसमुत्पादः स्वभावेनानुत्पन्नत्वाद् B 11 आर्यज्ञानापेक्षया नास्मिन्निरोधो विद्यते यावन्नास्मिन्निर्गमो विद्यते इत्यनिरोधादिभिरष्टाभिर्विशे-
5 षणैर्विशिष्यते। यथा च निरोधादयो न सन्ति प्रतीत्यसमुत्पादस्य तथा सकलशास्त्रेण प्रतिपादयिष्यति ॥

अनन्तविशेषणसंभवेऽपि प्रतीत्यसमुत्पादस्य अष्टानामेवोपादानमेषां प्राधान्येन विवादाङ्ग-भूतत्वात्। यथावस्थितप्रतीत्यसमुत्पाददर्शने सति आर्याणाम[1]भिधेयादिलक्षणस्य प्रपञ्चस्य सर्वथोपरमात्, प्रपञ्चानामुपशमोऽस्मिन्निति स एव प्रतीत्यसमुत्पादः प्रपञ्चोपशम इत्युच्यते।
10 चित्तचैत्तानां च तस्मिन्नप्रवृत्तौ ज्ञानज्ञेयव्यवहारनिवृत्तौ जातिजरामरणादिनिरवशेषोपद्रवरहितत्वात् शिवः। यथाभिहितविशेषणस्य प्रतीत्यसमुत्पादस्य देशनाक्रियया ईप्सिततमत्वात् कर्मणा निर्देशः ॥

**अनिरोधमनुत्पादमनुच्छेदमशाश्वतम्।**
**अनेकार्थमनानार्थमनागममनिर्गमम् ॥ १ ॥**
15 **यः प्रतीत्यसमुत्पादं प्रपञ्चोपशमं शिवम्।**
**देशयामास संबुद्धस्तं वन्दे वदतां वरम् ॥ २ ॥**

[ मङ्गलश्लोकौ ]

यथोपवर्णितप्रतीत्यसमुत्पादावगमाच्च तथागतस्यैवैकस्याविपरीतार्थवादित्वं पश्यन् सर्वपर-B 12 प्रवादांश्च बालप्रलापानिवावेत्य अतीव प्रसादानुगत आचार्यो भूयो भगवन्तं विशेषयति—वदतां वरमिति ॥

20 अत्र च निरोधस्य पूर्वं प्रतिषेधः उत्पादनिरोधयोः पौर्वापर्यावस्थायाः सिद्ध्यभावं द्योतयितुम्। वक्ष्यति हि—

पूर्वं जातिर्यदि भवेज्जरामरणमुत्तरम्।
निर्जरामरणा जातिर्भवेज्जायेत चामृतः ॥ [ म० शा० ११·३ ]

इति। तस्मान्नायं नियमो य[2]त् पूर्वमुत्पादेन भवितव्यं पश्चान्निरोधेनेति ॥

25 इदानीमनिरोधादिविशिष्टप्रतीत्यसमुत्पादप्रतिपिपादयिषया उत्पादप्रतिषेधेन निरोधादि-प्रतिषेधसौकर्यं मन्यमान आचार्यः प्रथममेवोत्पादप्रतिषेधमारभते। उत्पादो हि परैः परिकल्प्य-मानः स्वतो वा परिकल्प्येत, परतः, उभयतः, अहेतुतो वा परिकल्प्येत। सर्वथा च नोपपद्यत इति निश्चित्याह—

**न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः।**
30 **उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ॥ ३ ॥**

---

१. T अभिधेयाभिधानलक्षणलक्ष्यादिप्रपञ्चानां for अभिधेयादिलक्षणस्य प्रपञ्चस्य. २. T यज्जन्म पूर्वं भवति जरामरणं पश्चात् for यत्पूर्व...निरोधेनेति.

तत्र जात्विति कदाचिदित्यर्थः । क्वचनशब्द आधारवचनः क्वचिच्छब्दपर्यायः । केचन- B 13
शब्द आधेयवचनः केचिच्छब्दपर्यायः । ततश्चैवं संबन्धः— नैव स्वत उत्पन्ना जातु विद्यन्ते
भावाः, क्वचन, केचन । एवं प्रतिज्ञात्रयमपि योज्यम् ॥

ननु च—नैव स्वत उत्पन्ना इत्यवधार्यमाणे परत उत्पन्ना इत्यनिष्टं प्राप्नोति । न
प्राप्नोति । प्रसज्यप्रतिषेधस्य विवक्षितत्वात्, परतोऽप्युत्पादस्य प्रतिषेत्स्यमानत्वात् । यया चोप- 5
पत्त्या स्वत उत्पादो न संभवति, सा—

तस्माद्धि तस्य भवने न गुणोऽस्ति कश्चि-
ज्जातस्य जन्म पुनरेव च नैव युक्तम् ।

[ मध्यमकावतार–६.८ ]

इत्यादिना मध्यमकावतारादिद्वारेणावसेया ॥

आचार्यबुद्धपालितस्त्वाह—न स्वत उत्पद्यन्ते भावाः, तदुत्पादवैयर्थ्यात्, अतिप्रसङ्ग- 10 B 14
दोषाच्च । न हि स्वात्मना विद्यमानानां पदार्थानां पुनरुत्पादे प्रयोजनमस्ति । अथ सन्नपि
जायेत, न कदाचिन्न जायेत इति ॥

अत्रैके दूषणमाहुः— तदयुक्तम्, हेतुदृष्टान्तानभिधानात्परोक्तदोषापरिहाराच्च[१] । प्रसङ्ग- B 15
वाक्यत्वाच्च[२] प्रकृतार्थविपर्ययेण विपरीतार्थसाध्यतद्धर्मव्यक्तौ परस्मादुत्पन्नाभावाजन्मसाफल्यात्
जन्मनिरो( बो ? )धाच्चेति कृतान्तविरोधः स्यात् ॥ 15

सर्वमेतद्दूषणमयुज्यमानं वयं पश्यामः । कथं कृत्वा ? तत्र यत्तावदुक्तं हेतुदृष्टान्तानभि-
धानादिति, तदयुक्तम् । किं कारणम् ? यस्मात्परः स्वत उत्पत्तिमभ्युपगच्छन्[३] पृच्छ्यते—
स्वत इति हेतुत्वेन तदेव चोत्पद्यते इति ? न च विद्यमानस्य पुनरुत्पत्तौ प्रयोजनं
पश्यामः, अनवस्थां च पश्यामः । न च त्वया उत्पन्नस्य पुनरुत्पाद इष्यतेऽनवस्था
चाप्यनिष्टेति । तस्मान्निरुपपत्तिक एव त्वद्वादः स्वाभ्युपगमविरोधश्चेति । किमिति चोदिते परो 20
नाभ्युपैति यतो हेतुदृष्टान्तोपादानसाफल्यं स्यात् ? अथ स्वाभ्युपगमविरोध[४]चोदनयापि परो न
निवर्तते, तदा निर्लज्जतया हेतुदृष्टान्ताभ्यामपि नैव निवर्तेत । न चोन्मत्तकेन सहास्माकं विवाद
इति । तस्मात्सर्वथा[५] प्रियानुमानतामेवात्मनः आचार्यः प्रकटयति अस्थानेऽप्यनुमानं प्रवेशयन्[६] ।
न च माध्यमिकस्य सतः[७] स्वतन्त्रमनुमानं कर्तुं युक्तं पक्षान्तराभ्युपगमाभावात् । तथोक्तमार्यदेवेन— B 16

सदसत्सदसच्चेति यस्य पक्षो न विद्यते । 25
उपालम्भश्चिरेणापि तस्य वक्तुं न शक्यते ॥

( चतुःशतक – १६.२५ )

---

१. T om. दोष. २. Mss. om. च. ३. T om. च. ४. After °गच्छन् Mss. and P add विद्यमानस्य पुनरुत्पादे which T om. ५. Mss. °विरुद्धचोदनयापि for °विरोध°. ६. T om. सर्वथा, ७, Mss. प्रवेशयेत् for प्रवेशयन्. ८. P स्वतः for सतः which is not rendered in T,

विग्रहव्यावर्तन्यां चोक्तम्—

यदि काचन प्रतिज्ञा स्यान्मे तत एव मे भवेद्दोषः ।
नास्ति च मम प्रतिज्ञा तस्मान्नैवास्ति मे दोषः ॥
यदि किंचिदुपलभेयं प्रवर्तयेयं निवर्तयेयं वा ।
5 प्रत्यक्षादिभिरर्थैस्तदभावान्मेऽनुपालम्भः ॥

[ विग्रहव्यावर्तनी—२९-३० ]

इति । यदा चैवं स्वतन्त्रानुमानानभिधायित्वं माध्यमिकस्य, तदा कुतः "नाध्यात्मिकान्यायतनानि स्वत उत्पन्नानि" इति स्वतन्त्रा प्रतिज्ञा यस्यां सांख्याः प्रत्यवस्थाप्यन्ते । कोऽयं प्रतिज्ञार्थः किं कार्यात्मकत्वात्स्वत उत कारणात्मकत्वादिति । किं चातः ? कार्यात्मकाच्चेत् सिद्धसाधनम्, कारणात्मकाच्चेत् विरुद्धार्थता, कारणात्मना विद्यमानस्यैव सर्वस्योत्पत्तिमत उत्पादा-10 दिति । कुतोऽस्माकं विद्यमानत्वादिति हेतुर्यस्य सिद्धसाधनं विरुद्धार्थता वा स्यात्, यस्य सिद्धसाधनस्य यस्याश्च विरुद्धार्थतायाः परिहारार्थं यत्नं करिष्यामः । तस्मात्परोक्तदोषाप्रसङ्गादेव तत्परिहारः आचार्यबुद्धपालितेन न वर्णनीयः ॥

अथापि स्यात्—माध्यमिकानां पक्षहेतुदृष्टान्तानामसिद्धेः स्वतन्त्रानुमानानभिधायित्वात् स्वत उत्पत्तिप्रतिषेधप्रतिज्ञातार्थसाधनं मा भूदुभयसिद्धेन वानुमानेन परप्रतिज्ञानिराकरणम्, 15 परप्रतिज्ञायास्तु स्वत एवानुमानविरोधचोदनया स्वत एव पक्षहेतुदृष्टान्तदोषरहितैः पक्षादिभिर्भवितव्यम् । ततश्च तदनभिधानात् तद्दोषापरिहाराच्च स एव दोष इति । उच्यते । नैतदेवम् । किं कारणम् ? यस्माद् यो हि यमर्थं प्रतिजानीते, तेन स्वनिश्चयवदन्येषां निश्चयोत्पादनेच्छया यया उपपत्त्या असावर्थोऽधिगतः सैवोपपत्तिः परस्मै उपदेष्टव्या । तस्मादेष तावन्न्यायः— यत्परेणैव स्वाभ्युपगतप्रतिज्ञातार्थसाधनमुपादेयम् । न चायं ( चानेन ? ) परं प्रति । हेतुदृष्टान्तासंभवात् 20 प्रतिज्ञानुसारतयैव केवलं स्वप्रतिज्ञातार्थसाधनमुपादत्त इति निरुपपत्तिकपक्षाभ्युपगमात् स्वात्मानमेवायं केवलं विसंवादयन् न शक्नोति परेषां निश्चयमाधातुमिति । इदमेवास्य स्पष्टतरं दूषणं यदुत स्वप्रतिज्ञातार्थसाधनासामर्थ्यमिति किमत्रानुमानबाधोद्भावनया प्रयोजनम् ? अथाप्यवश्यं स्वतोऽनुमानविरोधदोष उद्भावनीयः, सोऽप्युद्भावित एवाचार्यबुद्धपालितेन । कथमिति चेत्, न स्वत उत्पद्यन्ते भावाः, तदुत्पादवैयर्थ्यादिति वचनात्, अत्र हि तदित्यनेन स्वात्मना विद्य-25 मानस्य परामर्शः । कस्मादिति चेत्, तथा हि तस्य संग्रहेणोक्तवाक्यस्यैतद्विवरणवाक्यम्, न हि स्वात्मना विद्यमानानां पुनरुत्पादे प्रयोजनमिति । अनेन च वाक्येन साध्यसाधनधर्मानुगतस्य परप्रसिद्धस्य साधर्म्यदृष्टान्तस्योपादानम् । तत्र स्वात्मना विद्यमानस्येत्यनेन हेतुपरामर्शः । उत्पादवयर्थ्यादित्यनेन साध्यधर्मपरामर्शः ॥ तत्र यथा—अनित्यः शब्दः । कृतकत्वात् । कृतकत्वमनित्यं

---

१. Mss. तदेष for तत एष. २. Mss. कार्यात्मकः स्वतः for कार्यात्मकत्वात्स्वतः. ३. T प्रतिज्ञार्थ° for प्रतिज्ञातार्थ°. ४. Mss. दृष्टान्तापेक्षारहितैः for दृष्टान्तदोषरहितैः. ५. Mss. परस्मात् for परस्मै. ६ Mss. स्वप्रतिज्ञामात्रसारतयैव for प्रतिज्ञानुसारतयैव which is confirmed by T. ७ Mss. स्वत इत्यनेन for तदित्यनेन which is confirmed by T. ८ Mss. confused. Our text is based on T. ९. T कृतकानित्यत्वात् for कृतकत्वात्.

दृष्टं यथा घटः । तथा च कृतकः शब्दः । तस्मात्कृतकत्वादनित्य इति कृतकत्वमत्र उपनयाभिव्यक्तो हेतुः । एवमिहापि—न स्वत उत्पद्यन्ते भावाः, स्वात्मना विद्यमानानां पुनरुत्पादवैयर्थ्यात् । इह हि स्वात्मना विद्यमानं पुरोऽवस्थितं घटादिकं पुनरुत्पादानपेक्षं दृष्टम्, तथा च मृत्पिण्डाद्यवस्थायामपि यदि स्वात्मना विद्यमानं घटादिकमिति मन्यसे, तदापि तस्य स्वात्मना विद्यमानस्य नास्त्युत्पाद इति । एवं स्वात्मना विद्यमानत्वेन उपनयाभिव्यक्तेन पुनरुत्पादप्रतिषेधाव्यभिचारिणा हेतुना स्वत एव सांख्यस्यानुमानविरोधोद्भावनमनुष्ठितमेवेति । तत्किमुच्यते तदयुक्तं हेतुदृष्टान्तानभिधानादिति ? (B 21; 5)

न च केवलं हेतुदृष्टान्तानभिधानं न संभवति, परोक्तदोषापरिहारदोषो न संभवति । कथं कृत्वा ? सांख्या हि नैव अभिव्यक्तरूपस्य पुरोऽवस्थितस्य घटस्य पुनरभिव्यक्तिमिच्छन्ति । तस्यैव च इह दृष्टान्तत्वेनोपादानम्, सिद्धरूपत्वात् । अनभिव्यक्तरूपस्य च शक्तिरूपापन्नस्य उत्पत्तिप्रतिषेधविशिष्टसाध्यत्वात् कुतः सिद्धसाधनपक्षदोषाशङ्का, कुतो वा हेतोर्विरुद्धार्थताशङ्केति । तस्मात्स्वतोऽनुमानविरोधचोदनायामपि यथोपवर्णितदोषाभावात्परोक्तदोषापरिहारासंभव एव । इत्यसंबद्धमेवैतद्दूषणमिति विज्ञेयम् ॥ (10)

घटादिकमित्यादिशब्देन निरवशेषोत्पित्सुपदार्थसंग्रहस्य विवक्षितत्वादनैकान्तिकतापि पटादिभिर्नैव संभवति ॥ (B 22; 15)

अथवा । अयमन्यः प्रयोगमार्गः—पुरुषव्यतिरिक्ताः पदार्थाः स्वत उत्पत्तिवादिनः । तत एव न स्वत उत्पद्यन्ते । स्वात्मना विद्यमानत्वात् । पुरुषवत् । इतीदमुदाहरणमुदाहार्यम् ॥

यद्यपि च अभिव्यक्तिवादिन उत्पादप्रतिषेधो न बाधकः, तथापि अभिव्यक्तावुत्पादशब्दं निपात्य पूर्वं पश्चाच्च अनुपलब्ध्युपलब्धिसाधर्म्येण उत्पादशब्देनाभिव्यक्तेरेवाभिधानादयं प्रतिषेधो न अबाधकः ॥ (20)

कथं पुनरयं यथोक्तार्थाभिधानं विना व्यस्तविचारो लभ्यत इति चेत्, तदुच्यते । अथ वाक्यानि कृतानि, तानि महार्थत्वाद्यथोदितमर्थं संगृह्य प्रवृत्तानि । तानि च व्याख्यायमानानि यथोक्तमर्थात्मानं प्रसूयन्त इति नात्र किंचिदनुपात्तं संभाव्यते ॥ (B 23)

प्रसङ्गविपरीतेन चार्थेन परस्यैव संबन्धो नास्माकम् । स्वप्रतिज्ञाया अभावात् । ततश्च सिद्धान्तविरोधासंभवः । परस्य च यावद्बहवो दोषाः प्रसङ्गविपरीतापत्त्या आपद्यन्ते, तावदस्माभिरभीष्यत एवेति । कुतो नु खलु अविपरीताचार्यनागार्जुनमतानुसारिणः आचार्यबुद्धपालितस्य सावकाशवचनाभिधायित्वम्, यतोऽस्य परोऽवकाशं लभेत ? निःस्वभाववादिना सस्वभावभाववादिनः प्रसङ्गे आप(पा?)द्यमाने कुतः प्रसङ्गविपरीतार्थप्रसङ्गिता ? न हि शब्दाः दाण्डपाशिका इव वक्तारमस्वतन्त्रयन्ति, किं तर्हि सत्यां शक्तौ वक्तुर्विवक्षामनुविधीयन्ते । ततश्च (25; B 24)

---

१. T दोषानभिधानात् for दोषाभावात्. २. Mss. घटादिभिः for पटादिभिः which is confirmed by T. ३. T बाधकः for अबाधकः ४. T and P अर्थवाक्यानि for अथ वाक्यानि.

परप्रतिज्ञाप्रतिषेधमात्रफलत्वात्प्रसङ्गापादनस्य नास्ति प्रसङ्गविपरीतार्थापत्तिः । तथा च आचार्यो भूयसा प्रसङ्गापत्तिमुखेनैव परपक्षं निराकरोति स्म । तद्यथा—

नाकाशं विद्यते किंचित्पूर्वमाकाशलक्षणात् ।
अलक्षणं प्रसज्येत स्यात्पूर्वं यदि लक्षणात् ॥

5 [ म० शा० – ५·१ ]

रूपकारणनिर्मुक्ते रूपे रूपं प्रसज्यते ।
आहेतुकं न चास्त्यर्थः कश्चिदाहेतुकः क्वचित् ॥[1]

[ म० शा० – ४·२ ]

B 25

भावस्तावन्न निर्वाणं जरामरणलक्षणम् ।
प्रसज्येतास्ति भावो हि न जरामरणं विना ॥

[ म० शा० – २४·४ ]

इत्यादिना । अथ अर्थवाक्यत्वादाचार्यवाक्यानां महार्थत्वे सति अनेकप्रयोगनिष्पत्तिहेतुत्वं 10 परिकल्प्यते, आचार्यबुद्धपालितव्याख्यानान्यपि किमिति न तथैव परिकल्प्यन्ते ?

अथ स्यात्— वृत्तिकाराणामेष न्यायः, यत्प्रयोगवाक्यविस्तराभिधानं कर्तव्यमिति, एतदपि नास्ति, विग्रहव्यावर्तन्या[2] वृत्तिं कुर्वताप्याचार्येण प्रयोगवाक्यानभिधानात् ॥

अपि च । आत्मनस्तर्कशास्त्रातिकौशलमात्रमाविश्चिकीर्षया[3] अङ्गीकृतमध्यमकदर्शनस्यापि यत्स्वतन्त्रप्रयोगवाक्याभिधानं तदतितरामनेकदोषसमुदायास्पदमस्य तार्किकस्योपलक्ष्यते । कथं कृत्वा ?

B 26 15 तत्र-यत्तावदेवमुक्तम्—अत्र प्रयोगवाक्यं भवति—न परमार्थत आध्यात्मिकान्यायतनानि स्वत उत्पन्नानि, विद्यमानत्वात्, चैतन्यवदिति । किमर्थं पुनरत्र परमार्थत इति विशेषणमुपादीयते ? लोकसंवृत्याभ्युपगतस्य उत्पादस्य अप्रतिषिध्यमानत्वात्, प्रतिषेधे च अभ्युपेतबाधाप्रसङ्गादिति चेत्, नैतद्युक्तम् । संवृत्यापि स्वत उत्पत्त्यनभ्युपगमात् । यथोक्तं सूत्रे—

20 "स चायं बीजहेतुकोऽङ्कुर उत्पद्यमानो न स्वयंकृतो न परकृतो नोभयकृतो नाप्यहेतुसमुत्पन्नो नेश्वरकालाणुप्रकृतिस्वभावसंभूतः" इति । [ शालिस्तम्बसूत्रे ]

तथा—

बीजस्य सतो यथाङ्कुरो न च यो बीजु स चैव अङ्कुरो ।
न च अन्यु ततो न चैव तदेवमनुच्छेदअशाश्वतधर्मता ॥

25 [ ललितविस्तर – १३·१०२ ]

इहापि वक्ष्यति—

प्रतीत्य यद्यद्भवति न हि तावत्तदेव तत् ।
न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतम् ॥

[ म० शा० – १८·७ ].

इति ॥

---

१ P अहेतुकः for आहेतुकः. २ Mss. विग्रहव्यापत्तिभ्यां for विग्रहव्यावर्तन्या. ३ T °मात्रानिदर्शनेच्छया for °मात्रमाविश्चिकीर्षया.

परमतापेक्षं विशेषणमिति चेत्, तदयुक्तम्। संवृत्यापि तदीयव्यवस्थानभ्युपगमात्। सत्यद्वयाविपरीतदर्शनपरिभ्रष्टा एव हि तीर्थिका यावदुभयथापि निषिध्यन्ते तावद् गुण एव संभाव्यत इति। एवं परमतापेक्षमपि विशेषणाभिधानं न युज्यते॥ B 27

न चापि लोकः स्वतउत्पत्तिं प्रतिपन्नः, यतस्तदपेक्षयापि विशेषणसाफल्यं स्यात्। लोको हि स्वतः परत इत्येवमादिकं विचारमनवतार्य कारणात्कार्यमुत्पद्यते इत्येतावन्मात्रं प्रतिपन्नः। 5 एवमाचार्योऽपि व्यवस्थापयामास। इति सर्वथा विशेषणवैफल्यमेव निश्चीयते॥

अपि च। यदि संवृत्या उत्पत्तिप्रतिषेधनिराचिकीर्षुणा विशेषणमेतदुपादीयते, तदा स्वतोऽसिद्धाधारे पक्षदोषः, आश्रयासिद्धौ वा हेतुदोषः स्यात्। परमार्थतः स्वतश्चक्षुराद्यायतनानामनभ्युपगमात्। संवृत्या चक्षुरादिसद्भावाददोष इति चेत्, परमार्थत इत्येतत्तर्हि कस्य विशेषणम्? सांवृतानां चक्षुरादीनां परमार्थत उत्पत्तिप्रतिषेधाद् उत्पत्तिप्रतिषेधविशेषणे परमार्थग्रहणमिति 10 चेत्, एवं तर्हि एवमेव वक्तव्यं स्यात्—सांवृतानां चक्षुरादीनां परमार्थतो नास्त्युत्पत्तिरिति। B 28 न चैवमुच्यते। उच्यमानेऽपि परैर्वस्तुसतामेव चक्षुरादीनामभ्युपगमात्, प्रज्ञप्तिसतामनभ्युपगमात् परतोऽसिद्धाधारः पक्षदोषः स्यादिति न युक्तमेतत्॥

अथ स्यात्—यथा अनित्यः शब्द इति धर्मधर्मिसामान्यमेव गृह्यते न विशेषः, विशेषग्रहणे हि सति अनुमानानुमेयव्यवहाराभावः स्यात्। तथा हि—यदि चातुर्महाभौतिकः शब्दो 15 गृह्यते, स परस्यासिद्धः। अथाकाशगुणो गृह्यते, स बौद्धस्य स्वतोऽसिद्धः। तथा वैशेषिकस्य शब्दानित्यतां प्रतिजानानस्य यदि कार्यः शब्दो गृह्यते, स परतोऽसिद्धः। अथ व्यङ्ग्यः, स स्वतोऽसिद्धः। एवं यथासंभवं विनाशोऽपि यदि सहेतुकः, स बौद्धस्य स्वतोऽसिद्धः। अथ निर्हेतुकः, स परस्यासिद्ध इति। तस्माद् यथात्र धर्मधर्मिसामान्यमात्रमेव गृह्यते, एवमिहापि धर्मिमात्रमुत्सृष्टविशेषणं ग्रहीष्यत इति चेत्, नैतदेवम्। यस्माद् यदैवोत्पादप्रतिषेधोऽत्र 20 साध्यधर्मोऽभिप्रेतः, तदैव धर्मिणस्तदाधारस्य विपर्यासमात्रासादितात्मभावस्य प्रच्युतिः स्वयमेवानेनाङ्गीकृता। भिन्नौ हि विपर्यासाविपर्यासौ। तद्यदा विपर्यासेन असत्सत्त्वेन गृह्यते, तैमिरिकेणेव केशादि, तदा कुतः सद्भूतपदार्थलेशस्याप्युपलब्धिः? यदा च अविपर्यासादभूतं नाध्यारोपितं वितैमिरिकेणेव केशादि, तदा कुतोऽसद्भूतपदार्थलेशस्याप्युपलब्धिः, येन तदानीं संवृतिः स्यात्? B 29 B 30 अत एवोक्तमाचार्यपादैः— 25

यदि किंचिदुपलभेयं प्रवर्तयेयं निवर्तयेयं वा।
प्रत्यक्षादिभिरर्थैस्तदभावान्मेऽनुपालम्भः॥ इति॥
[वि० व्या० –३०]

यतश्चैवं भिन्नौ विपर्यासाविपर्यासौ, अतो विदुषामविपरीतावस्थायां विपरीतस्यासंभवात्कुतः सांवृतं चक्षुः यस्य धर्मित्वं स्यात्? इति न व्यावर्ततेऽसिद्धाधारे पक्षदोषः, आश्रयासिद्धो वा हेतुदोषः। इत्यपरिहार एवायम्॥

---

१. T om. °प्रतिषेध°. २. T om. स्वतः.

निदर्शनस्यापि नास्ति साम्यम् । तत्र हि शब्दसामान्यमनित्यतासामान्यं च अविवक्षित-विशेषं द्वयोरपि संविद्यते । न त्वेवं चक्षुःसामान्यं शून्यताशून्यतावादिभ्यां संवृत्या अङ्गीकृतं नापि परमार्थतः । इति नास्ति निदर्शनस्य साम्यम् ॥

यश्चायमसिद्धाधारपक्षदोषोद्भावने विधिः, एष एव सत्त्वादित्यस्य हेतोरसिद्धार्थतोद्भावनेऽ-
5 पि योज्यः ॥

B 31 इत्थं चैतदेवम्, यत्स्वयमप्यनेनायं यथोक्तोऽर्थोऽभ्युपगतस्तार्किकेण । सन्त्येवाध्यात्मिका-यतनोत्पादका हेत्वादयः, तथा तथागतेन निर्देशात् । यद्धि यथा तथागतेनास्ति निर्दिष्टं तत्तथा, तद्यथा शान्तं निर्वाणमिति ॥

अस्य परोपक्षिप्तस्य साधनस्येदं दूषणमभिहितमनेन—को हि भवतामभिप्रेतोऽत्र हेत्वर्थः ?
10 संवृत्या तथा तथागतेन निर्देशात्, उत परमार्थत इति ? संवृत्या चेत्, स्वतो हेतोरसिद्धार्थता । परमार्थतश्चेत्,

न सन्नासन्न सदसद्धर्मो निर्वर्तते यदा ।

सदसदुभयात्मककार्यप्रत्ययत्वनिराकरणात्, तदा—

कथं निर्वर्तको हेतुरेवं सति हि युज्यते ॥

[म० शा० – १·७]

15 नैवासौ निर्वर्तको हेतुरिति वाक्यार्थः । ततश्च परमार्थतो निर्वर्त्यनिर्वर्तकत्वासिद्धेः असिद्धार्थता विरुद्धार्थता वा हेतोरिति ॥

यतश्चैवं स्वयमेवामुना न्यायेन हेतोरसिद्धिरङ्गीकृतानेन, तस्मात्सर्वेष्वेवानुमानेषु वस्तु-धर्मोपन्यस्तहेतुकेषु स्वत एव हेत्वादीनामसिद्धत्वात् सर्वाण्येव साधनानि व्याहन्यन्ते । तद्यथा—न परमार्थतः परेभ्यस्तत्प्रत्ययेभ्यः आध्यात्मिकायतनजन्म, परत्वात्, तद्यथा पटस्य[2] । अथवा—न परे
B 32 20 परमार्थेन विवक्षिताः चक्षुराद्याध्यात्मिकायतननिर्वर्तकाः प्रत्यया इति प्रतीयन्ते, परत्वात्, तद्यथा तन्त्वादय इति । परत्वादिकमत्र स्वत एवासिद्धम् ॥

यथा चानेन—उत्पन्ना एव आध्यात्मिका[3] भावाः, तद्विषयिविशिष्टव्यवहारकरणात्—इत्यस्य पराभिहितस्य हेतोरसिद्धार्थतामुद्भावयिषुणा इदमुक्तम्, अथ समाहितस्य योगिनः प्रज्ञाचक्षुषा भावयाथात्म्यं पश्यतः उत्पादगत्यादयः सन्ति परमार्थत इति साध्यते, तदा तद्विषयिविशिष्टव्यवहार-
25 करणादिति हेतोरसिद्धार्थता[4], गतेरप्युत्पादनिषेधादेव निषेधादिति[5] । एवं स्वकृतसाधनेऽपि—परमार्थतोऽगतं नैव गम्यते, अध्वत्वात्, गताध्ववदिति अध्वत्वहेतोः[6] स्वत एवासिद्धार्थता योज्या ॥

B 33 न परमार्थतः सभागं चक्षू रूपं पश्यति, चक्षुरिन्द्रियत्वात्, तद्यथा तत्सभागम् । तथा—न चक्षुः प्रेक्षते रूपम्, भौतिकत्वात्, रूपवत्[7] । खरस्वभावा न मही, भूतत्वात्, तद्यथानिलः[8], इत्यादिषु हेत्वाद्यसिद्धिः स्वत एव योज्या ॥

---

१. Mss. सत्त्वादिभ्यः स्वहेतोः for सत्त्वादित्यस्य हेतोः which is confirmed T. २. T घटस्य for पटस्य. ३. T आध्यात्मिकायतना for आध्यात्मिका. ४. T असिद्धिं for असिद्धार्थतां. ५. After इति, T adds उक्तम्. ६. Mss. अथ हेतोः for अध्वत्वहेतोः which is confirmed by T. ७. Mss. स्वरूपवत् for रूपवत्. ८. Mss. नलिन for अनिलः.

सत्त्वादिति चायं हेतुः परतोऽनैकान्तिकः । किं सत्त्वात् चैतन्यवन्नाध्यात्मिकान्यायतनानि स्वत उत्पद्यन्ताम्, उताहो घटादिवत् स्वत उत्पद्यन्तामिति घटादीनां साध्यसमत्वान्नानैकान्तिकतेति चेत्, नैतदेवम्, तथानभिधानात् ॥

B 34

ननु च यथा परकीयेष्वनुमानेषु दूषणमुक्तम्, एवं स्वानुमानेष्वपि यथोक्तदूषणप्रसङ्गे सति स एव असिद्धाधारासिद्धहेत्वादिदोषः प्राप्नोति, ततश्च यः उभयोर्दोषः, न तेनैकश्चोद्यो भवतीति सर्वमेतद्दूषणमयुक्तं जायत इति । उच्यते । स्वतन्त्रमनुमानं ब्रुवतामयं दोषो जायते । न वयं स्वतन्त्रमनुमानं प्रयुञ्ज्महे परप्रतिज्ञानिषेधफलत्वादस्मदनुमानानाम् । तथा हि—परः चक्षुः पश्यतीति प्रतिपन्नः । स तत्प्रसिद्धेनैवानुमानेन निराक्रियते—चक्षुषः स्वात्मादर्शनधर्ममिच्छसि, परदर्शनधर्माविनाभावित्वं चाङ्गीकृतम्, तस्माद् यत्र यत्र स्वात्मादर्शनं तत्र तत्र परदर्शनमपि नास्ति, तद्यथा घटे, अस्ति च चक्षुषः स्वात्मादर्शनम्, तस्मात् परदर्शनमप्यस्य नैवास्ति । ततश्च स्वात्मादर्शनविरुद्धं नीलादिपरदर्शनं स्वप्रसिद्धेनैवानुमानेन विरुध्यत इति एतावन्मात्रमस्मदनुमानैरुद्भाव्यत इति कुतोऽस्मत्पक्षे यथोक्तदोषावतारः, यतः समानदोषता स्यात् ?

किं पुनः—अन्यतरप्रसिद्धेनाप्यनुमानेनास्त्यनुमानबाधा । अस्ति, सा च स्वप्रसिद्धेनैव हेतुना, न परप्रसिद्धेन, लोकत एवं दृष्टत्वात् । कदाचिद्धि लोके अर्थिप्रत्यर्थिभ्यां प्रमाणीकृतस्य साक्षिणो वचनेन जयो भवति पराजयो वा, कदाचित् स्ववचनेन । परवचनेन तु न जयो नापि पराजयः । यथा च लोके, तथा न्यायेऽपि । लौकिकस्यैव व्यवहारस्य न्यायशास्त्रे प्रस्तुतत्वात् । अत एव कैश्चिदुक्तम्—न परतः प्रसिद्धिबलादनुमानबाधा, परप्रसिद्धेरेव निराचिकीर्षितत्वादिति । यस्तु मन्यते—य एव उभयनिश्चितवादी, स प्रमाणं दूषणं वा, नान्यतरप्रसिद्धसंदिग्धवाची इति, तेनापि लौकिकीं व्यवस्थामनुरुध्यमानेन अनुमाने यथोक्त एव न्यायोऽभ्युपेयः ॥

B 35

तथा हि नोभयप्रसिद्धेन वा आगमेन बाधा, किं तर्हि स्वप्रसिद्धेनापि ॥

B 36

स्वार्थानुमाने तु सर्वत्र स्वप्रसिद्धिरेव गरीयसी, नोभयप्रसिद्धिः । अत एव तर्कलक्षणाभिधानं निष्प्रयोजनम्, यथास्वप्रसिद्धया उपपत्त्या बुद्धैस्तदनभिज्ञविनेयजनानुग्रहात् । इत्यलं प्रसङ्गेन । प्रकृतमेव व्याख्यास्यामः ॥

परतोऽपि नोत्पद्यन्ते भावाः । पराभावादेव । एतच्च—

न हि स्वभावो भावानां प्रत्ययादिषु विद्यते ।

[ म० शा० – १·५ ]

इत्यत्र प्रतिपादयिष्यति । ततश्च पराभावादेव नापि परत उत्पद्यन्ते । अपि च—

अन्यत्प्रतीत्य यदि नाम परोऽभविष्य—
जायेत तर्हि बहुलः शिखिनोऽन्धकारः ।

---

१. Mss. प्रयुञ्जामहे for प्रयुञ्ज्महे. २. Mss. यथा for तथा.

सर्वस्य जन्म च भवेत्खलु सर्वतश्च
तुल्यं परत्वमखिलेऽजनकेऽपि यस्मात् ॥

[मध्यमकावतार – ६.१४]

इत्यादिना [मध्यमकावतारात्] परत उत्पत्तिप्रतिषेधोऽवसेयः ॥

आचार्यबुद्धपालितस्तु व्याचष्टे – न परत उत्पद्यन्ते भावाः, सर्वतः सर्वसंभवप्रसङ्गात् ।

B 37 5 आचार्यभावविवेको दूषणमाह – तदत्र प्रसङ्गवाक्यत्वात् साध्यसाधनविपर्ययं कृत्वा, स्वतः उभयतः अहेतुतो वा उत्पद्यन्ते भावाः, कुतश्चित्कस्यचिदुत्पत्तेः, इति प्राक्पक्षविरोधः । अन्यथा[1] सर्वतः सर्वसंभवप्रसङ्गात् इत्यस्य साधनदूषणानन्तःपातित्वादसंगतार्थमेतत् [इति] । एतदप्यसंगतार्थम् । पूर्वमेव प्रतिपादितत्वाद् दूषणान्तःपातित्वाच्च परप्रतिज्ञातार्थदूषणेनेति यत्किंचिदेतदिति न पुनर्यत्न आस्थीयते ॥

B 38 10 द्वाभ्यामपि नोपजायन्ते भावाः, उभयपक्षाभिहितदोषप्रसङ्गात् प्रत्येकमुत्पादासामर्थ्याच्च । वक्ष्यति हि –

स्यादुभाभ्यां कृतं दुःखं स्यादेकैककृतं यदि । इति ॥

[म० शा० – १२.९]

अहेतुतोऽपि नोत्पद्यन्ते –

15 हेतावसति कार्यं च कारणं च न विद्यते ।

[म० शा० – ८.४]

इति वक्ष्यमाणदोषप्रसङ्गात्,

गृह्येत नैव च जगद्यदि हेतुशून्यं
स्याद्यद्वदेव गगनोत्पलवर्णगन्धौ ॥

[मध्यमकावतार – ६.९९]

इत्यादिदोषप्रसङ्गाच्च ॥

20 आचार्यबुद्धपालितस्त्वाह – अहेतुतो नोत्पद्यन्ते भावाः, सदा च सर्वतश्च सर्वसंभव-

B 39 प्रसङ्गात् । अत्राचार्यभावविवेको दूषणमाह – अत्रापि प्रसङ्गवाक्यत्वात् यदि विपरीतसाध्यसाधनव्यक्तिवाक्यार्थ इष्यते, तदा एतदुक्तं भवति – हेतुत उत्पद्यन्ते भावाः, कदाचित् कुतश्चित् कस्यचिदुत्पत्तेः, आरम्भसाफल्याच्च[2] । सेयं व्याख्या न युक्ता प्रागुक्तदोषादिति । तदेतदयुक्तम्, पूर्वोदितपरिहारादित्यपरे ॥

25 यच्चापि ईश्वरादीनामुपसंग्रहार्थम्, तदापि न युक्तम् । ईश्वरादीनां स्वपरोभयपक्षेषु यथाभ्युपगममन्तर्भावादिति ॥

तस्मात् प्रसाधितमेतन्नास्त्युत्पाद इति । उत्पादासंभवाच्च सिद्धोऽनुत्पादादिविशिष्टः प्रतीत्यसमुत्पाद इति ॥

---

१. T अन्यथापि for अन्यथा. २. Mss. आरम्भसद्भावात् or °संभवात् for आरम्भसाफल्याच्च which is confirmed by T.

अत्राह—यद्येवमनुत्पादादिविशिष्टः प्रतीत्यसमुत्पादो व्यवस्थितो भवद्भिः, यत्तर्हि भगवतोक्तम्—अविद्याप्रत्ययाः संस्काराः .... अविद्यानिरोधात्संस्कारनिरोध इति, तथा—

अनित्याश्च ते (बत ?) संस्कारा उत्पादव्ययधर्मिणः ।
उत्पद्य हि निरुध्यन्ते तेषां व्युपशमः सुखः ॥

तथा—उत्पादाद्वा तथागतानामनुत्पादाद्वा तथागतानां स्थितैवैषा धर्माणां धर्मता, एको धर्मः 5 B 40 सत्त्वस्थितये यदुत चत्वार आहाराः, द्वौ धर्मौ लोकं पालयतो ह्रीश्चापत्राप्यं चेत्यादि, तथा—परलोकादिहागमनमिहलोकाच्च परलोकगमनमिति, एवं निरोधादिविशिष्टः प्रतीत्यसमुत्पादो देशितो भगवता, स कथं न नि( वि? )रुध्यत इति ? यत ऐवं निरोधादयः प्रतीत्यसमुत्पादस्योपलभ्यन्ते, अत एवेदं मध्यमकशास्त्रं प्रणीतमाचार्येण नेयनीतार्थसूत्रान्तविभागोपदर्शनार्थम् । तत्र य एते B 41 प्रतीत्यसमुत्पादस्योत्पादादय[1] उक्ताः, न ते विगताविद्यातिमिरानास्रवविषयस्वभावापेक्षया, किं तर्हि 10 अविद्यातिमिरोपहतमतिनयनज्ञानविषयापेक्षया ॥

तत्त्वदर्शनापेक्षया तूक्तं भगवता—एतद्धि भिक्षवः परमं सत्यं यदुत अमोषधर्म निर्वाणम्, सर्वसंस्काराश्च मृषा मोषधर्माणः इति[2] । तथा—नास्त्यत्र तथता वा अवितथता वा । मोषधर्मकमप्येतत्, प्रलोपधर्मकमप्येतत्[3], मृषाप्येतत्, मायेयं बाललापिनी इति । तथा—

फेनपिण्डोपमं रूपं वेदना बुद्बुदोपमा । 15
मरीचिसदृशी संज्ञा संस्काराः कदलीनिभाः ।
मायोपमं च विज्ञानमुक्तमादित्यबन्धुना ॥ इति ॥
एवं धर्मान् वीक्षमाणो भिक्षुरारब्धवीर्यवान् । B 42
दिवा वा यदि वा रात्रौ संप्रजानन् प्रतिस्मृतः ।
प्रतिविध्येत्पदं[4] शान्तं संस्कारोपशमं शिवम् ॥ इति ॥ 20

निरात्मकत्वाच्च धर्माणामित्यादि ॥

यस्यैवं देशनाभिप्रायानभिज्ञतया संदेहः स्यात्—का ह्यत्र देशना तत्त्वार्था, का नु खलु आभिप्रायिकीति, यश्चापि मन्दबुद्धितया नेयार्थां देशनां नीतार्थामवगच्छति, तयोरुभयोरपि विनेयजनयोः आचार्यो युक्त्यागमाभ्यां संशयमिथ्याज्ञानापाकरणार्थं शास्त्रमिदमारब्धवान् ॥

तत्र 'न स्वतः' [म० शा० १·३] इत्यादिना युक्तिरुपवर्णिता ॥ 25

तन्मृषा मोषधर्म यद्भगवानित्यभाषत ।
सर्वे च मोषधर्माणः संस्कारास्तेन ते मृषा ॥
[म० शा०—१३·१]

पूर्वा प्रज्ञायते कोटिर्नेत्युवाच महामुनिः ।
संसारोऽनवराग्रो हि नास्त्यादिर्नापि पश्चिमम् ॥
[म० शा०—११·१]

---

१. Mss. एवाह or एव हि for एवं. २. Mss. इत्यादि for इति. ३. T om. प्रलोपधर्मकमेतत्. ४. Mss. प्रतिबिम्बे पदे for प्रतिविध्येत्पदं which is confirmed by T.

B 43 कात्यायनाववादे च अस्ति नास्तीति चोभयम्।
प्रतिषिद्धं भगवता भावाभावविभाविना ॥

[म० शा० – १५·७]

इत्यादिना आगमो वर्णितः ॥

उक्तं च आर्याक्षयमतिसूत्रे –

5 कतमे सूत्रान्ता नेयार्थाः कतमे नीतार्थाः ? ये सूत्रान्ता मार्गावताराय निर्दिष्टाः, इम उच्यन्ते नेयार्थाः। ये सूत्रान्ताः फलावताराय निर्दिष्टाः, इम उच्यन्ते नेयार्थाः[1]। यावद् ये सूत्रान्ताः शून्यतानिमित्ताप्रणिहितानभिसंस्काराजातानुत्पादाभावनिरात्मनिःसत्त्वनिर्जीवनिःपुद्गलास्वामिकविमोक्षमुखा निर्दिष्टाः त उच्यन्ते नीतार्थाः। इयमुच्यते भदन्त शारद्वतीपुत्र नीतार्थसूत्रान्तप्रतिशरणता, न नेयार्थसूत्रान्तप्रतिशरणता इति ॥

B 44 10 तथा च आर्यसमाधिराजसूत्रे –

नीतार्थसूत्रान्तविशेष जानति
यथोपदिष्टा सुगतेन शून्यता।
यस्मिन् पुनः पुद्गलसत्त्वपूरुषा[2]
नेयार्थतो[3] जानति सर्वधर्मान् ॥

[समाधिराज – ७·५]

15 तस्मादुत्पादादिदेशनां मृषार्थां प्रतिपादयितुं प्रतीत्यसमुत्पादानुदर्शनमारब्धवानाचार्यः ॥

ननु च–उत्पादादीनामभावे सति यदि सर्वधर्माणां मृषात्वप्रतिपादनार्थमिदमारब्धवानाचार्यः, नन्वेवं सति यन्मृषा न तदस्तीति न सन्त्यकुशलानि कर्माणि, तदभावान्न सन्ति दुर्गतयः, न सन्ति कुशलानि कर्माणि, तदभावान्न सन्ति सुगतयः, सुगतिदुर्गत्यसंभवाच्च नास्ति संसारः, इति सर्वारम्भवैयर्थ्यमेव स्यात्। उच्यते। संवृतिसत्यव्यपेक्षया लोकस्य इदंसत्याभिनिवेशस्य प्रतिपक्षभावेन 20 मृषार्थता भावानां प्रतिपाद्यतेऽस्माभिः। नैव त्वार्याः कृतकार्याः किंचिदुपलभन्ते यन्मृषा अमृषा वा स्यादिति। अपि च। येन हि सर्वधर्माणां मृषात्वं[4] परिज्ञातं किं तस्य कर्माणि सन्ति, संसारो वा अस्ति ? B 45 न चाप्यसौ कस्यचिद्धर्मस्य अस्तित्वं नास्तित्वं वोपलभते। यथोक्तं भगवता आर्यरत्नकूटसूत्रे–

चित्तं हि काश्यप परिगवेष्यमाणं न लभ्यते। यन्न लभ्यते तन्नोपलभ्यते। यन्नोपलभ्यते तन्नैव अतीतं न अनागतं न प्रत्युत्पन्नम्। यन्नैवातीतं नानागतं न प्रत्युत्पन्नम्, तस्य नास्ति स्वभावः। 25 यस्य नास्ति स्वभावः, तस्य नास्त्युत्पादः। यस्य नास्त्युत्पादः, तस्य नास्ति निरोधः ॥ इति विस्तरः ॥

---

१. The copyist seems to have abridged the text which according to T will be येषु सूत्रान्तेषु आत्मसत्त्वजीवपोषपुरुषपुद्गलमनुजमनुष्यकारकवेदका नानाशब्दैराख्यायन्ते, येषु चास्वामिकं सस्वामिकत्वेन निर्दिष्टम्, ते नेयार्थाः. २. °पूरुषो for °पूरुषा. ३. नेयार्थतो जानति सर्वधर्मान् for the line ४. T मृषार्थता for मृषात्वं.

यस्तु विपर्यासोऽनुगमान्मृषात्वं नावगच्छति, प्रतीत्य भावानां स्वभावमभिनिविशते, स धर्मेष्विदंसत्याभिनिवेशादभिनिविष्टः सन् कर्माण्यपि करोति, संसारेऽपि संसरति, विपर्यासावस्थितत्वान्न भव्यो निर्वाणमधिगन्तुम् ॥

किं पुनः—मृषास्वभावा अपि पदार्थाः संक्लेशव्यवदाननिबन्धनं भवन्ति । तद्यथा मायायुवतिस्तत्स्वभावानभिज्ञानाम्, तथागतनिर्मितश्च उपचितकुशलमूलानाम्। उक्तं हि दृढाध्याशयपरिपृच्छासूत्रे— 5 B 46

तद्यथा कुलपुत्र मायाकारनाटके प्रत्युपस्थिते मायाकारनिर्मितां स्त्रियं दृष्ट्वा कश्चिद्रागपरीतचेताः पर्षच्छारद्यभयेन उत्थायासनादपक्रामेत्, सोऽपक्रम्य तामेव स्त्रियमशुभतो मनसिकुर्यात्, अनित्यतो दुःखतः शून्यतोऽनात्मतो मनसिकुर्यात् । इति विस्तरः ॥

विनये च— 10

यन्त्रकारकारिता यन्त्रयुवतिः सद्भूतयुवतिशून्या सद्भूतयुवतिरूपेण प्रतिभासते, तस्य च चित्रकारस्य कामरागास्पदीभूता । तथा मृषास्वभावा अपि भावा बालानां संक्लेशव्यवदाननिबन्धनं भवन्ति ॥

तथा आर्यरत्नकूटसूत्रे— B 47

अथ खलु तानि पञ्चमात्राणि भिक्षुशतानि भगवतो धर्मदेशनामनवतरन्त्यनवगाहमानान्यनधिमुच्यमानानि उत्थायासनेभ्यः प्रक्रान्तानि । अथ भगवान् [तस्यां वेलायां] येन मार्गेणैते भिक्षवो गच्छन्ति स्म, तस्मिन् मार्गे द्वौ भिक्षू निर्मिमीते स्म ॥ 15

अथ तानि पञ्च भिक्षुशतानि येन [मार्गेण] तौ द्वौ भिक्षू [निर्मितकौ] तेनोपसंक्रामन्ति स्म । उपसंक्रम्य ताववोचन्—कुत्रायुष्मन्तौ गमिष्यथः? निर्मितकाववोचताम्—गमिष्याव आवामरण्यायतनेषु, तत्र ध्यानसुखस्पर्शविहारैर्विहरिष्यावः । यं हि भगवान् धर्मं देशयति, तमावां नावतरावो नावगाहावहे नाधिमुच्यामहे उत्त्रस्यावः संत्रासमापद्यावहे । अथ तानि पञ्च भिक्षुशतान्येतदवोचन्—वयमप्यायुष्मन्तो भगवतो धर्मदेशनां नावतरामो नावगाहामहे नाधिमुच्यामहे उत्त्रस्यामः संत्रस्यामः संत्रासमापद्यामहे । तेन वयमरण्यायतनेषु ध्यानसुखस्पर्शविहारैर्विहरिष्यामः । निर्मितकाववोचताम्—तेन हि आयुष्मन्तः संगास्यामो न विवदिष्यामः । अविवादपरमा हि श्रमणस्य धर्माः । .... कस्यायुष्मन्तः प्रहाणाय प्रतिपन्नाः? तान्यवोचन्—रागद्वेषमोहानां प्रहाणाय वयं प्रतिपन्नाः । निर्मितकाववोचताम्—किं पुनरायुष्मतां संविद्यन्ते रागद्वेषमोहा यान् क्षपयिष्यथ? तान्यवोचन्—न तेऽध्यात्मं न बहिर्धा नोभयमन्तरेणोपलभ्यन्ते, नापि तेऽपरिकल्पिता उत्पद्यन्ते । निर्मितकाववोचताम्—तेन हि आयुष्मन्तो मा कल्पयत, [मा विकल्पयत]। यदा चायुष्मन्तो न कल्पयिष्यथ न विकल्पयिष्यथ, तदा न रंक्ष्यथ न विरंक्ष्यथ। यश्च न रक्तो न विरक्तः, स शान्त इत्युच्यते । शीलमायुष्मन्तो न संसरति न परिनिर्वाति । समाधिः प्रज्ञा विमुक्तिर्विमुक्तिज्ञानदर्शन- 20 25 B 48

---

१. C विपर्यासाभ्युपगमात् for °नुगमान्मृ°. २. T प्रतीत्य भावानां स्वभावं परिकल्प्य अभिनिविशते for प्रतीत्य °... °निविशते. ३. T om. °व्यवदान°.

मायुष्मन्तो न संसरति न परिनिर्वाति। एभिश्चायुष्मन्तो धर्मैर्निर्वाणं सूच्यते। एते च धर्माः शून्याः प्रकृतिविविक्ताः। प्रजहीतैतामायुष्मन्तः संज्ञां यदुत परिनिर्वाणमिति। मा च संज्ञायां संज्ञां कार्ष्ट, मा च संज्ञायां संज्ञां परिज्ञासिष्ट। यो हि संज्ञायां संज्ञां परिजानाति, संज्ञा बन्धनमेवास्य तद्भवति। संज्ञावेदयितनिरोधसमापत्तिमायुष्मन्तः समापद्यध्वम्। संज्ञावेदयितनिरोधसमापत्तिसमापन्नस्य 5 भिक्षोर्नास्त्युत्तरीकरणीयमिति वदावः॥

अथ तेषां पञ्चानां भिक्षुशतानामनुपादायाश्रवेभ्यश्चित्तानि विमुक्तान्यभूवन्। तानि विमुक्तचित्तानि येन भगवांस्तेनोपसंक्रान्तानि। उपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्यैकान्ते न्यसीदन्॥

B 49 अथायुष्मान् सुभूतिस्तान् भिक्षूनेतदवोचत्—कुत्रायुष्मन्तो गताः कुतो वागताः? तेऽवोचन्—न क्वचिद्गमनाय न कुतश्चिदागमनाय भदन्त सुभूते भगवता धर्मो देशितः। 10 आह—को नामायुष्मतां शास्ता? आहुः—यो नोत्पन्नो न परिनिर्वास्यति। आह—कथं युष्माभिर्धर्मः श्रुतः? आहुः—न बन्धनाय न मोक्षाय। आह—केन यूयं विनीताः? आहुः—यस्य न कायो न चित्तम्। आह—कथं यूयं प्रयुक्ताः? आहुः—नाविद्याप्रहाणाय न विद्योत्पादनाय। आह—कस्य यूयं श्रावकाः? आहुः—येन न प्राप्तं नाभिसंबुद्धम्। आह—के युष्माकं सब्रह्मचारिणः? आहुः—ये त्रैधातुके नोपविचरन्ति। आह—कियच्चिरेणायुष्मन्तः परिनिर्वास्यन्ति? 15 आहुः—यदा तथागतनिर्मिताः परिनिर्वास्यन्ति। आह—कृतं युष्माभिः करणीयम्? आहुः—अहंकारममकारपरिज्ञानतः। आह—क्षीणा युष्माकं क्लेशाः? आहुः—अत्यन्तक्षयात्सर्वधर्माणाम्। आह—धर्षितो युष्माभिर्मारः? आहुः—स्कन्धमारानुपलम्भात्। आह—धर्षितो युष्माभिर्मारः? आहुः—स्कन्धमारानुपलम्भात्। आह—परिचरितो युष्माभिः शास्ता? आहुः—न कायेन न वाचा न मनसा। आह—विशोधिता युष्माभिर्दक्षिणीयभूमिः? आहुः—अग्राहतोऽप्रतिग्राहतः। आह—20 उत्तीर्णो युष्माभिः संसारः? आहुः—अनुच्छेदतोऽशाश्वततः। आह—प्रतिपन्ना युष्माभिर्दक्षिणीयभूमिः? आहुः—सर्वग्राहविनिर्मुक्तितः। आह—किंगामिन आयुष्मन्तः? आहुः—B 50 यंगामिनस्तथागतनिर्मिताः। इति ह्यायुष्मतः सुभूतेः परिपृच्छतस्तेषां भिक्षूणां प्रतिविसर्जयतां तस्यां पर्षदि अष्टानां भिक्षुशतानामनुपादायाश्रवेभ्यश्चित्तानि विमुक्तानि, द्वात्रिंशतश्च प्राणिसहस्राणां विरजो विगतमलं धर्मचक्षुर्विशुद्धम्। इति॥

25 इत्येवं मृषास्वभावाभ्यां तथागतनिर्मिताभ्यां भिक्षुभ्यां पञ्चानां भिक्षुशतानां व्यवदाननिबन्धनं कृतमिति॥

उक्तं च आर्यवज्रमण्डायां धारण्याम्—

तद्यथा मञ्जुश्रीः काण्डं च प्रतीत्य मथनीं च प्रतीत्य पुरुषस्य हस्तव्यायामं च प्रतीत्य धूमः प्रादुर्भवतीति अग्निरभिनिर्वर्तते। स चाग्निसंतापो न काण्डसंनिश्रितो न मथनीसंनिश्रितो न पुरुषहस्तव्यायामसंनिश्रितः। एवमेव मञ्जुश्रीः असद्विपर्यासमोहितस्य पुरुषपुद्गलस्य उत्पद्यते रागपरिदाहो द्वेषपरिदाहो मोहपरिदाहः। स च परिदाहो नाध्यात्मं न बहिर्धा नोभयमन्तरेण स्थितः॥

अपि तु मञ्जुश्रीः यदुच्यते मोह इति, तत्केन कारणेनोच्यते मोह इति? अत्यन्तमुक्तो हि मञ्जुश्रीः सर्वधर्मैर्मोहस्तेनोच्यते मोह इति। तथा नरकमुखा मञ्जुश्रीः सर्वधर्मा इदं धारणीपदम्।

आह – कथं भगवन्निदं धारणीपदम्? आह – नरका मञ्जुश्रीः बालपृथग्जनैरसद्विपर्यासविठपिताः स्वविकल्पसंभूताः। आह – कुत्र भगवन्नरकाः समवसरन्ति? भगवानाह – आकाशसमवसरणा मञ्जुश्रीः नरकाः। तत्किं मन्यसे मञ्जुश्रीः स्वविकल्पसंभूता नरका उत स्वभावसंभूताः? आह – स्वविकल्पेनैव भगवन् सर्वबालपृथग्जना नरकतिर्यग्योनियमलोकं संजानन्ति। ते च असत्समारोपेण दुःखां वेदनां वेदयन्ति दुःखमनुभवन्ति त्रिष्वप्यपायेषु॥ B 51 5

यथा चाहं भगवन् नरकान् पश्यामि तथा नारकं दुःखम्। तद्यथा भगवन् कश्चिदेव पुरुषः सुप्तः स्वप्नान्तरगतो नरकगतमात्मानं संजानीते। स तत्र क्वथितायां[१] संप्रज्वलितायामनेकपौरुषायां लोहकुम्भ्यां[२] प्रक्षिप्तमात्मानं संजानीयात्। स तत्र खरां कटुकां तीव्रां दुःखां वेदनां वेदयेत्। स तत्र मानसं परिदाहं संजानीयात् उत्त्रसेत् संत्रासमापद्येत। स तत्र प्रतिबुद्धः समानः – अहो दुःखम्, अहो दुःखम्, इति क्रन्देत् शोचेत् परिदेवेत्। अथ तस्य मित्रज्ञातिसालोहिताः परिपृच्छेयुः–केन तत्ते दुःखमिति। स तान् मित्रज्ञातिसालोहितानेवं वदेत्[३] – नैरयिकं दुःखमनुभूतम्। स तानाक्रोशेत् परिभाषेत् – अहं च नाम नैरयिकं दुःखमनुभवामि। यूयं च मे उत्तरि परिपृच्छथ केनैतत्तव दुःखमिति। अथ ते मित्रज्ञातिसालोहितास्तं पुरुषमेवं वदेयुः– मा भैर्भोः पुरुष। सुप्तो हि त्वम्। न त्वमितो गृहात् क्वचिन्निर्गतः। तस्य पुनरपि स्मृतिरुत्पद्यते – सुप्तोऽहमभूवम्। वितथमेतन्मया परिकल्पितमिति[४]। स पुनरपि सौमनस्यं प्रतिलभते॥ 10 B 52 15

तद्यथा भगवन् स पुरुषोऽसत्समारोपेण सुप्तः स्वप्नान्तरगतो नरकगतमात्मानं संजानीयात्, एवमेव भगवन् सर्वबालपृथग्जना असद्रागपर्यवनद्धाः स्त्रीनिमित्तं कल्पयन्ति। ते स्त्रीनिमित्तं कल्पयित्वा ताभिः सार्धं रममाणमात्मानं संजानन्ति। तस्य बालपृथजनस्यैवं भवति–अहं पुरुषः, इयं स्त्री, ममैषा स्त्री। तस्य तेन च्छन्दरागपर्यवस्थितेन चित्तेन भोगपर्येष्टिं[५] चित्तं क्रामयन्ति। स ततोनिदानं कलहविग्रहविवादं संजनयति। तस्य प्रदुष्टेन्द्रियस्य वैरं संजायते। स तेन संज्ञाविपर्यासेन कालगतः समानो बहूनि कल्पसहस्राणि नरकेषु दुःखां वेदनां वेदयमानमात्मानं संजानाति॥ 20

तद्यथा भगवन् तस्य पुरुषस्य मित्रज्ञातिसालोहिता एवं वदन्ति–मा भैः, मा भैः, भो पुरुष। सुप्तो हि त्वम्। न त्वमितो गृहात् कुतश्चिन्निर्गतः इति। एवमेव बुद्धा भगवन्तश्चतुर्विपर्यासविपर्यस्तानां सत्त्वानामेवं धर्मं देशयन्ति–नात्र स्त्री न पुरुषो न सत्त्वो न जीवो न पुरुषो न पुद्गलः। वितथा इमे सर्वधर्माः। असन्त इमे सर्वधर्माः। विठपिता इमे सर्वधर्माः। मायोपमा इमे सर्वधर्माः। स्वप्नोपमा इमे सर्वधर्माः। निर्मितोपमा इमे सर्वधर्माः। उदकचन्द्रोपमा इमे सर्वधर्माः। इति विस्तरः। ते इमां तथागतस्य धर्मदेशनां श्रुत्वा विगतरागान् सर्वधर्मान् पश्यन्ति। विगतमोहान् सर्वधर्मान् पश्यन्ति अस्वभावाननावरणान्। ते आकाशस्थितेन चेतसा कालं[६] कुर्वन्ति। ते कालगताः[७] समाना निरुपधिशेषे निर्वाणधातौ परिनिर्वान्ति। एवमहं भगवन् नरकान् पश्यामि। इति॥ 25 B 53

१. P कथितायां for क्वथितायां. २. C लोहकुण्ड्यां for °कुम्भ्यां. ३. Mss. वेदयेत् for वदेत् which is confirmed by T. ४. Mss. परिकल्पितमनुभूतमिति for परिकल्पितमिति which is confirmed by T. ५. Mss. भोगपर्यस्ति for °पर्येष्टिं which is confirmed by T. ६. T मरणकालं for कालं. ७. T कालं कृत्वा समनन्तरं for कालगताः समानाः.

उक्तं च आर्योपालिपरिपृच्छायाम्—

भय दर्शित नैरयिकं मे
सत्त्वसहस्र सवेजित नैके ।
न च विद्यति कश्चिह सत्त्व
5 यो च्युतु गच्छति घोरमपायम् ॥

न च कारकु कारण सन्ति
येहि कृता असितोमरशस्त्राः ।
कल्पवशेन तु पश्यति तत्र
कायि पतन्ति अपायित शस्त्राः ॥

B 54 10 चित्रमनोरम सज्जितपुष्पाः
स्वर्णविमान जलन्ति मनोज्ञाः ।
तेष्वपि कारकु नास्तिह कश्चि
तेऽपि च स्थापित कल्पवशेन ॥

कल्पवशेन विकल्पितु लोकः
15 संज्ञगहेण विकल्पितु बालः[1] ।
सो च गहो अगहो असभूतो
मायमरीचिसमा हि विकल्पाः ॥

तदेवमेतेऽस्वभावा भावाः स्वविपर्यासविठपिता बालानां संक्लेशहेतवो भवन्ति संसारे इति स्थितम् ॥

20 यथा च मृषास्वभावानां पदार्थानां संक्लेशव्यवदानहेतुत्वं तथा मध्यमकावताराद्विस्तरेणावसेयम् ॥

अत्राह—यदि स्वतः परतः उभयतोऽहेतुतश्च नास्ति भावानामुत्पादः, तत्र कथमविद्याप्रत्ययाः संस्कारा इत्युक्तं भगवता ? उच्यते । संवृतिरेव न तत्त्वम् ॥

किं संवृतेर्व्यवस्थानं वक्तव्यम् ? इदंप्रत्ययतामात्रेण संवृतेः सिद्धिरभ्युपगम्यते । न तु
B 55 25 पक्षचतुष्टयाभ्युपगमेन सस्वभाववादप्रसङ्गात्, तस्य चायुक्तत्वात् । इदंप्रत्ययतामात्राभ्युपगमे हि सति हेतुफलयोरन्योन्यापेक्षत्वान्नास्ति स्वाभाविकी सिद्धिरिति नास्ति सस्वभाववादः । अत एवोक्तम्—

स्वयं कृतं परकृतं द्वाभ्यां कृतमहेतुकम् ।
तार्किकैरिष्यते दुःखं त्वया तूक्तं प्रतीत्यजम् ॥

[ लोकातीतस्तव – ९ ]

---

1. Mss. वासः for बालः.

इहापि वक्ष्यति-

प्रतीत्य कारकः कर्म तं प्रतीत्य च कारकम्।
कर्म प्रवर्तते नान्यत्पश्यामः सिद्धिकारणम्॥ इति॥

[म० शा० -८.१२]

भगवताप्येतावन्मात्रमेवोक्तम्-

तत्रायं धर्मसंकेतो यदुतास्मिन् सतीदं भवति, अस्योत्पादादिदमुत्पद्यते, यदुत अविद्याप्रत्ययाः संस्काराः, संस्कारप्रत्ययं विज्ञानमित्यादि॥ 5

अत्र केचित्परिचोदयन्ति-अनुत्पन्ना भावा इति किमयं प्रमाणजो निश्चय उताप्रमाणजः? तत्र यदि प्रमाणज इष्यते, तदेदं वक्तव्यम्-कति प्रमाणानि किंलक्षणानि किंविषयाणि, किं स्वत उत्पन्नानि किं परत उभयतोऽहेतुतो वेति। अथाप्रमाणजः, स न युक्तः, प्रमाणाधीनत्वात्प्रमेयाधिगमस्य। अनधिगतो ह्यर्थो न विना प्रमाणैरधिगन्तुं शक्यत इति प्रमाणाभावादर्थाधिगमाभावे 10 सति कुतोऽयं सम्यग्निश्चय इति न युक्तमेतदनिष्पन्ना भावा इति। यतो वायं निश्चयो भवतोऽनुत्पन्ना भावा इति भविष्यति, तत एव ममापि सर्वभावाः सन्तीति। यथा चायं ते निश्चयः-अनुत्पन्नाः सर्वधर्मा इति, तथैव ममापि सर्वभावोत्पत्तिर्भविष्यति। अथ ते नास्ति निश्चयोऽनुत्पन्नाः B 56 सर्वभावा इति, तदा स्वयमनिश्चितस्य परप्रत्यायनासंभवाच्छास्त्रारम्भवैयर्थ्यमेवेति सन्त्यप्रतिषिद्धाः[1] सर्वभावा इति॥ 15

उच्यते। यदि कश्चिन्निश्चयो नामास्माकं स्यात्, स प्रमाणजो वा स्यादप्रमाणजो वा। न त्वस्ति। किं कारणम्? इहानिश्चयसंभवे सति स्यात्तत्प्रतिपक्षस्तदपेक्षो निश्चयः। यदा त्वनिश्चय एव तावदस्माकं नास्ति, तदा कुतस्तद्विरुद्धाविरुद्धो[2] निश्चयः स्यात् संबन्ध्यन्तरनिरपेक्षत्वात्, खरविषाणस्य ह्रस्वदीर्घतावत्। यदा चैवं निश्चयस्याभावः, तदा कस्य प्रसिद्ध्यर्थं प्रमाणानि B 57 परिकल्पयिष्यामः? कुतो वैषां संख्या लक्षणं विषयो वा भविष्यति-स्वतः परत उभयतोऽहेतुतो 20 वा समुत्पत्तिरिति सर्वमेतन्न वक्तव्यमस्माभिः॥

यद्येवं निश्चयो नास्ति सर्वतः, कथं पुनरिदं निश्चितरूपं वाक्यमुपलभ्यते भवताम्-न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतो भावा भवन्तीति? उच्यते। निश्चितमिदं वाक्यं लोकस्य स्वप्रसिद्धयैवोपपत्त्या, नार्याणाम्। किं खलु आर्याणामुपपत्तिर्नास्ति? केनैतदुक्तमस्ति वा नास्ति वेति। परमार्थो ह्यार्याणां[3] तूष्णींभावः। ततः कुतस्तत्र प्रपञ्चसंभवो यदुपपत्तिरनुपपत्तिर्वा स्यात्? 25

यदि ह्यार्या उपपत्तिं न वर्णयन्ति, केन खल्विदानीं परमार्थं लोकं बोधयिष्यन्ति? न खल्वार्या लोकसंव्यवहारेणोपपत्तिं वर्णयन्ति, किं तु लोकत एव या प्रसिद्धोपपत्तिः, तां परावबोधार्थमभ्युपेत्य तयैव लोकं बोधयन्ति। यथैव हि विद्यमानामपि शरीराशुचितां विपर्यासानुगता रागिणो नोपलभन्ते, शुभाकारं चाभूतमध्यारोप्य परिक्लिश्यन्ते, तेषां वैराग्यार्थं तथागतनिर्मितो

१. Mss. अप्रसिद्धाः for अप्रतिषिद्धाः २. T तद्विरुद्धो for तद्विरुद्धाविरुद्धो. ३ Mss. आर्यैः for आर्याणां.

देवो वा शुभसंज्ञया प्राक् प्रच्छादितान् कायदोषानुपवर्णयेत्—सन्त्यस्मिन् काये केशा इत्यादिना।
B 58 ते च तस्याः शुभसंज्ञाया विमुक्ता[1] वैराग्यमासादयेयुः। एवमिहाप्यार्यैः सर्वथाप्यनुपलभ्यमानात्मकं भावानामविद्यातिमिरोपहतमतिनयनतया विपरीतं स्वभावमध्यारोप्य क्वचिच्च कंचिद्विशेषमतितरां परिक्लिश्यन्ति पृथग्जनाः। तानिदानीमार्याः तत्प्रसिद्ध्यैवोपपत्त्या परिबोधयन्ति। यथा विद्यमानस्य
5 घटस्य[2] न मृदादिभ्य उत्पाद इत्यभ्युपेतम्, एवमुत्पादात्पूर्वं विद्यमानस्य विद्यमानत्वान्नास्त्युत्पाद इत्यवसीयताम्। यथा च परभूतेभ्यो ज्वालाङ्गारादिभ्योऽङ्कुरस्योत्पत्तिर्नास्ति इति अभ्युपेतम्, एवं विवक्षितेभ्योऽपि बीजादिभ्यो नास्तीत्यवसीयताम्॥

अथापि स्यात्—अनुभव एषोऽस्माकमिति, एतदप्ययुक्तम्। यस्मादनुभव एष मृषा, अनुभवत्वात्, तैमिरिकद्विचन्द्राद्यनुभववदिति। ततश्चानुभवस्यापि साध्यसमत्वात्तेन प्रत्यवस्थानं
10 न युक्तमिति[3]। तस्मादनुत्पन्ना भावा इत्येवं तावद्विपरीतस्वरूपाध्यारोपप्रतिपक्षेण प्रथमप्रकरणारम्भः। इदानीं क्वचिद्यः कश्चिद्विशेषोऽध्यारोपितः, तद्विशेषापाकरणार्थं शेषप्रकरणारम्भः, गन्तृगन्तव्यगमनादिकोऽपि निरवशेषो विशेषो नास्ति प्रतीत्यसमुत्पादस्येति प्रतिपादनार्थम्॥

अथ स्यात्—एष एव प्रमाणप्रमेयव्यवहारो लौकिकोऽस्माभिः शास्त्रेणानुवर्णित
B 59 इति, तदनुवर्णनस्य तर्हि फलं वाच्यम्। कुतार्किकैः स नाशितो विपरीतलक्षणाभिधानेन, तस्या-
15 स्माभिः सम्यग्लक्षणमुक्तमिति चेत्, एतदप्ययुक्तम्। यदि हि कुतार्किकैर्विपरीतलक्षणप्रणयनात्कृतं लक्ष्यवैपरीत्यं लोकस्य स्यात्, तदर्थं प्रयत्नसाफल्यं स्यात्। न चैतदेवम्। इति व्यर्थ एवायं प्रयत्न इति॥

अपि च। यदि प्रमाणाधीनः प्रमेयाधिगमः, तानि प्रमाणानि केन परिच्छिद्यन्त इत्यादिना विग्रहव्यावर्तन्यां विहितो दोषः। तदपरिहारात् सम्यग्लक्षणद्योतकत्वमपि नास्ति॥
20 किं च। यदि स्वसामान्यलक्षणद्वयानुरोधेन प्रमाणद्वयमुक्तं यस्य तल्लक्षणद्वयम्, किं तल्लक्ष्यमस्ति अथ नास्ति? यद्यस्ति, तदा तदपरं प्रमेयमस्तीति कथं प्रमाणद्वयम्? अथ नास्ति लक्ष्यम्[4], तदा लक्षणमपि निराश्रयं नास्तीति कथं प्रमाणद्वयम्? वक्ष्यति हि—

लक्षणासंप्रवृत्तौ च न लक्ष्यमुपपद्यते।
लक्ष्यस्यानुपपत्तौ च लक्षणस्याप्यसंभवः॥ इति॥

[म० शा०–५·४]

B 60 25 अथ स्यात्—न लक्ष्यतेऽनेनेति लक्षणम्, किं तर्हि 'कृत्यल्युटो बहुलम्' [पा०–३·३·११३] इति कर्मणि ल्युटं कृत्वा लक्ष्यते तदिति लक्षणम्। एवमपि तेनैतस्य[5] लक्ष्यमाणत्वासंभवाद्येनैतल्लक्ष्यते, तस्य करणस्य कर्मणोऽर्थान्तरत्वात् स एव दोषः॥

अथ स्यात्—ज्ञानस्य करणत्वात्तस्य च स्वलक्षणान्तर्भावादयमदोष इति, उच्यते। इह भावानामन्यासाधारणमात्मीयं यत्स्वरूपं तत्स्वलक्षणम्, तद्यथा पृथिव्याः काठिन्यं वेदनाया विषयानुभवो विज्ञानस्य विषयप्रतिविज्ञप्तिः। तेन हि तल्लक्ष्यत[6] इति कृत्वा प्रसिद्धानुगतं च

१. Mss. संज्ञाया विषमा for °संज्ञाया विमुक्ताः which is based on T. २. T om. घटस्य. ३. After इति, T adds : तत्प्रसिद्ध्येवोपपत्त्या बोधयन्ति. ४. Mss. लक्षणं for लक्ष्यं which is confirmed by T. ५ T तेनैव for तेनैतस्य. ६ Mss. तद्वा न लक्ष्यते for तल्लक्ष्यते.

व्युत्पत्तिमवधूय कर्मसाधनमभ्युपगच्छति। विज्ञानस्य च करणभावं प्रतिपद्यमानेनेत्युक्तं भवति स्वलक्षणस्यैव कर्मता स्वलक्षणान्तरस्य करणभावश्चेति। तत्र यदि विज्ञानस्वलक्षणं करणम्, तस्य व्यतिरिक्तेन कर्मणा भवितव्यमिति स एव दोषः॥ B 61

अथ स्यात्–यत्पृथिव्यादिगतं काठिन्यादिकं विज्ञानगम्यं तत्तस्य कर्मास्त्येव, तच्च स्वलक्षणाव्यतिरिक्तमिति। एवं तर्हि विज्ञानस्वलक्षणस्य कर्मत्वाभावात्प्रमेयत्वं न स्यात्, कर्मरूपस्यैव 5 स्वलक्षणस्य प्रमेयत्वात्। ततश्च द्विविधं प्रमेयं स्वलक्षणं सामान्यलक्षणं च इत्येतद्विशेष्य वक्तव्यम्–किंचित्स्वलक्षणं प्रमेयं यल्लक्ष्यत इत्येवं व्यपदिश्यते, किंचिदप्रमेयं[1] यल्लक्ष्यतेऽनेनेति व्यपदिश्यत इति। अथ तदपि कर्मसाधनं तदा तस्यान्येन करणेन भवितव्यम्। ज्ञानान्तरस्य करणभावपरिकल्पनायामनवस्थादोषश्चापद्यते॥

अथ मन्यसे–स्वसंवित्तिरस्ति, ततस्तया स्वसंवित्त्या ग्रहणात्कर्मतायां सत्यामस्त्येव 10 प्रमेयान्तर्भाव इति, उच्यते। विस्तरेण मध्यमकावतारे स्वसंवित्तिनिषेधात् स्वलक्षणं स्वलक्षणान्तरेण लक्ष्यते, तदपि स्वसंवित्त्या इति न युज्यते। अपि च। तदपि नाम ज्ञानं स्वलक्षणव्यतिरेकेणासिद्धेरसंभवाल्लक्ष्याभावे निराश्रयलक्षणप्रवृत्त्यसंभवात् सर्वथा नास्तीति कुतः स्वसंवित्तिः? तथा चोक्तमार्यरत्नचूडपरिपृच्छायाम्– B 62

स चित्तमसमनुपश्यन् चित्तधारां पर्येषते कुतश्चित्तस्योत्पत्तिरिति। तस्यैवं भवति– 15 आलम्बने सति चित्तमुत्पद्यते। तत्किमन्यदालम्बनमन्यच्चित्तम्, अथ यदेवालम्बनं तदेव चित्तम्? यदि तावदन्यदालम्बनमन्यच्चित्तम्, तदा द्विचित्तता भविष्यति। अथ यदेवालम्बनं तदेव चित्तम्, तत्कथं चित्तेन चित्तं समनुपश्यति? न च चित्तं चित्तं समनुपश्यति। तद्यथापि नाम तयैवासिधारया सैवासिधारा न शक्यते छेत्तुम्, न तेनैवाङ्गुल्यग्रेण तदेवाङ्गुल्यग्रं शक्यते स्प्रष्टुम्, एवमेव न तेनैव चित्तेन तदेव चित्तं शक्यं द्रष्टुम्। तस्यैवं 20 योनिशः प्रयुक्तस्य या चित्तस्यानवस्थानता अनुच्छेदाशाश्वतता न कूटस्थता नाहेतुकी न प्रत्ययविरुद्धा न ततो नान्यतो न सैव नान्या। तां चित्तधारां चित्तलतां चित्तधर्मतां चित्तानवस्थिततां चित्ताप्रचारतां चित्तादृश्यतां चित्तस्वलक्षणतां तथा जानाति तथा पश्यति यथा तथतां न च निरोधयति। तां च चित्तविवेकतां तथा प्रजानाति तथा पश्यति। इयं कुलपुत्र [ बोधिसत्त्वस्य ] चित्ते चित्तानुपश्यना स्मृत्युपस्थानमिति॥ B 63 25

तदेवं नास्ति स्वसंवित्तिः। तदभावात् किं केन लक्ष्यते?

किं च। भेदेन वा तल्लक्षणं लक्ष्यात्स्यादभेदेन वा? तत्र यदि तावद् भेदेन, तदा लक्ष्याद् भिन्नत्वादलक्षणवल्लक्षणमपि न लक्षणम्। लक्षणाच्च भिन्नत्वादलक्ष्यवल्लक्ष्यमपि न लक्ष्यम्। तथा लक्ष्याद्भिन्नत्वाल्लक्षणस्य लक्षणनिरपेक्षं लक्ष्यं स्यात्। ततश्च न तल्लक्ष्यं लक्षणनिरपेक्षत्वात् खपुष्पवत्। अथाभिन्ने लक्ष्यलक्षणे, तदा लक्षणादव्यतिरिक्तत्वाल्लक्षणस्वात्म- B 64

---

1 Mss. प्रमेयं for अप्रमेयं which is confirmed by T.

वद्विहीयते लक्ष्यस्य लक्ष्यता । लक्ष्याच्चाव्यतिरिक्तत्वाल्लक्ष्यस्वात्मवल्लक्षणमपि न लक्षणस्वभावम् । यथा चोक्तम्—

लक्ष्याल्लक्षणमन्यच्चेत्स्यात्तल्लक्ष्यमलक्षणम् ।
तयोरभावोऽनन्यत्वे विस्पष्टं कथितं त्वया ॥ इति ॥

[लोकातीतस्तव-११]

5 न च विना तत्त्वान्यत्वेन लक्ष्यलक्षणसिद्धौ अन्या गतिरस्ति । तथा च वक्ष्यति—

एकीभावेन वा सिद्धिर्नानाभावेन वा ययोः ।
न विद्यते, तयोः सिद्धिः कथं नु खलु विद्यते ॥ इति ॥

[म० शा० - २·२१]

अथवोच्यते—अवाच्यतया सिद्धिर्भविष्यतीति चेत्, नैतदेवम् । अवाच्यता हि नाम परस्परविभागपरिज्ञानाभावे सति भवति । यत्र च विभागपरिज्ञानं नास्ति, तत्र इदं लक्षणम्, 10 इदं लक्ष्यम्, इति विशेषतः परिच्छेदासंभवे सति द्वयोरप्यभाव एवेति । तस्मादवाच्यतयापि नास्ति सिद्धिः ॥

अपि च । यदि ज्ञानं करणं विषयस्य परिच्छेदे, कः कर्ता ? न च कर्तारमन्तरेणास्ति B 65 करणादीनां संभवः[1] छिदिक्रियायामिव । अथ चित्तस्य तत्र कर्तृत्वं परिकल्प्यते, तदपि न युक्तम्, यस्मादर्थमात्रदर्शनं चित्तस्य व्यापारः, अर्थविशेषदर्शनं चैतसानाम्,

15 तत्रार्थदृष्टिर्विज्ञानं तद्विशेषे तु चैतसाः ।

इत्यभ्युपगमात् । एकस्यां हि प्रधानक्रियायां साध्यायां यथास्वं गुणक्रियानिर्वृत्तिद्वारेणाङ्गीभावोपगमात् करणादीनां करणादित्वम् । न चेह ज्ञानविज्ञानयोरेका प्रधानक्रिया, किं तर्हि, अर्थमात्रपरिच्छित्तिर्विज्ञानस्य प्रधानक्रिया, ज्ञानस्य तु अर्थविशेषपरिच्छेद इति नास्ति ज्ञानस्य करणत्वं नापि चित्तस्य कर्तृत्वम् । ततश्च स एव दोषः ॥

20 अथ स्यात्—अनात्मानः सर्वधर्मा इत्यागमात् कर्तुः सर्वथाभावात् कर्तारमन्तरेणापि विद्यत एव क्रियादिव्यवहार इति, एतदपि नास्ति । आगमस्य सम्यगर्थानवधारणात् । एतदेवोक्तं मध्यमकावतारे ॥

B 66 अथापि स्यात्—यथा शिलापुत्रकस्य शरीरम्, राहोः शिरः, इति शरीरशिरोव्यतिरिक्तविशेषणासंभवेऽपि विशेषणविशेष्यभावोऽस्ति, एवं पृथिव्याः स्वलक्षणमिति 25 स्वलक्षणव्यतिरिक्तपृथिव्यसंभवेऽपि भविष्यतीति, नैतदेवम् । अतुल्यत्वात् । शरीरशिरःशब्दयोर्हि बुद्ध्यादिपाण्यादिवत्सहभाविपदार्थान्तरसापेक्षताप्रवृत्तौ शरीरशिरःशब्दमात्रालम्बनो बुद्ध्युपजननः सहचारिपदार्थान्तरसाकाङ्क्ष एव वर्तते, कस्य शरीरम्, कस्य शिर इति । इतरोऽपि विशेषणान्तरसंबन्धनिराचिकीर्षया शिलापुत्रकराहुविशेषणध्वनिना लौकिकसंकेतानुविधायिना प्रतिकर्तुः काङ्क्षामपहन्तीति युक्तम् । इह तु काठिन्यादिव्यतिरिक्तपृथिव्याद्यसंभवे सति न युक्तो विशेषणविशेष्यभावः ।

---

1 Mss. संभेदः for संभवः.

तीर्थिकैर्व्यतिरिक्तलक्ष्याभ्युपगमात्तदनुरोधेन विशेषणाभिधानमदुष्टमिति चेत्, नैतदेवम् । न हि तीर्थिकपरिकल्पिता युक्तिविधुराः पदार्थाः स्वसमयेऽभ्युपगन्तुं न्याय्याः, प्रमाणान्तरादेरप्यभ्युगमप्रसङ्गात् । अपि च । पुद्गलादिप्रज्ञप्तिवत् सशरीरोपादानस्य शिलापुत्रकस्योपादातुर्लौकिकव्यवहाराङ्गभूतस्य विशेषणस्याविचारप्रसिद्धस्य सद्भावात्, शिरउपादानस्य च राहोरुपादातुः सद्भावादयुक्तमेतन्निदर्शनम् । शरीरशिरोव्यतिरिक्तस्यार्थान्तरस्यासिद्धेस्तन्मात्रस्योपलम्भात् सिद्धमेव 5 निदर्शनमिति चेत्, नैतदेवम् । लौकिके व्यवहारे इत्थं विचाराप्रवृत्तेरविचारतश्च लौकिकपदार्थानामस्तित्वात् । यथैव हि रूपादिव्यतिरेकेण विचार्यमाण आत्मा न संभवति, अपि च लोकसंवृत्या स्कन्धानुपादाय अस्यास्तित्वम्, एवं राहुशिलापुत्रकयोरपीति नास्ति निदर्शनसिद्धिः ॥

B 67

एवं पृथिव्यादीनां यद्यपि काठिन्यादिव्यतिरिक्तं विचार्यमाणं लक्ष्यं नास्ति, लक्ष्यव्यतिरेकेण च लक्षणं निराश्रयम्, तथापि संवृतिरेवेति परस्परापेक्षया तयोः सिद्धया सिद्धिं व्यव- 10 स्थापयांबभूवुराचार्याः । अवश्यं चैतदेवमभ्युपेयम् । अन्यथा हि संवृतिरुपपत्त्या न वियुज्येत, तदेव तत्त्वमेव स्यान्न संवृतिः । न च उपपत्त्या विचार्यमाणानां शिलापुत्रकादीमेवासंभवः, किं तर्हि वक्ष्यमाणया युक्त्या रूपवेदनादीनामपि नास्ति संभव इति तेषामपि संवृत्या शिलापुत्रकादिवन्नास्तित्वमास्थेयं स्यात्[1] । न चैतदेवमित्यसदेतत्[1] ॥

B 68

अथ स्यात्—किमनया सूक्ष्मेक्षिकया ? नैव हि वयं सर्वप्रमाणप्रमेयव्यवहारं सत्यमित्या- 15 चक्ष्महे, किं तु लोकप्रसिद्धिरेषा अमुना न्यायेन व्यवस्थाप्यत इति । उच्यते । वयमप्येवं ब्रूमः— किमनया सूक्ष्मेक्षिकया लौकिकव्यवहारेऽवतारिक( त ? )या ? तिष्ठतु तावदेषा विपर्यासमात्रासादितात्मभावसत्ताका संवृतिः मुमुक्षूणां मोक्षावाहककुशलमूलोपचयहेतुः, यावन्न तत्त्वाधिगम इति । भवांस्तु एतां संवृतिपरमार्थसत्यविभागदुर्विदग्धबुद्धितया क्वचिदुपपत्तिमवतार्य अन्यायतो नाशयति । सोऽहं संवृतिसत्यव्यवस्थावैचक्षण्याल्लौकिक एव पक्षे स्थित्वा संवृत्येकदेशनिराकरणोपक्षिप्तोपपत्त्य- 20 न्तरमुपपत्त्यन्तरेण विनिवर्तयन् लोकवृद्ध इव लोकाचारात्परिभ्रश्यमानं भवन्तमेव निवर्तयामि न तु संवृतिम् । तस्माद् यदि लौकिको व्यवहारः, तदा अवश्यं लक्षणवल्लक्ष्येणापि भवितव्यम् । ततश्च स एव दोषः । अथ परमार्थः, तदा लक्ष्याभावाल्लक्षणद्वयमपि नास्तीति कुतः प्रमाणद्वयम् ?

B 69

अथ शब्दानामेवं क्रियाकारकसंबन्धपूर्विका व्युत्पत्तिर्नाङ्गीक्रियते, तदिदमतिकष्टम् । तैरेव क्रियाकारकसंबन्धप्रवृत्तैः शब्दैर्भवान् व्यवहरति, शब्दार्थं क्रियाकरणादिकं[2] च नेच्छतीति अहो 25 बत इच्छामात्रप्रतिबद्धप्रवृत्तितो ( वृत्तिः ? ) भवतः ।

यदा चैवं प्रमेयद्वयमव्यवस्थितं तदा स्वसामान्यलक्षणाविषयत्वेन आगमादीनां प्रमाणान्तरत्वम् । किं च घटः प्रत्यक्ष इत्येवमादिकस्य लौकिकव्यवहारस्यासंग्रहादनार्यव्यवहाराभ्युपगमाच्च अव्यापिता लक्षणस्येति न युक्तमेतत् ॥

---

१. Mss. °पुत्रक इवास्तित्वं for °पुत्रकादिवन्नास्तित्वं which is confirmed by T. २. After °देतत्, T adds : एतदप्युपादाय प्रज्ञप्तिव्यवस्थानं विस्तरेण मध्यमकावतारे निर्दिष्टमिति तत एवावसेयम्. ३. T क्रियाकारकादिशब्दार्थं for क्रियाकरणादिकं.

B 70 अथ स्यात्—घटोपादाननीलादयः प्रत्यक्षाः प्रत्यक्षप्रमाणपरिच्छेद्यत्वात् । ततश्च यथैव कारणे कार्योपचारं कृत्वा बुद्धानां सुख उत्पाद इति व्यपदिश्यते, एवं प्रत्यक्षनीलादिनिमित्तकोऽपि घटः कार्ये कारणोपचारं कृत्वा प्रत्यक्ष इति व्यपदिश्यते। नैवंविषये उपचारो युक्तः। उत्पादो हि लोके सुखव्यतिरेकेणोपलब्धः, स च संस्कृतलक्षणस्वभावत्वादनेकदुष्कर-5 शतहेतुत्वादसुख एव, स सुख इति व्यपदिश्यमानः असंबद्ध एवेत्येवंविषये युक्त उपचारः। घटः प्रत्यक्ष इत्यत्र तु—न हि घटो नाम कश्चिद्योऽप्रत्यक्षः पृथगुपलब्धो यस्योपचारात्प्रत्यक्षत्वं स्यात्। नीलादिव्यतिरिक्तस्य घटस्याभावादौपचारिकं प्रत्यक्षत्वमिति चेत्, एवमपि सुतरामुपचारो न युक्तः, उपचर्यमाणस्याश्रयस्याभावात्। न हि खरविषाणे तैक्ष्ण्यमुपचर्यते। अपि च। लोकव्यवहाराङ्गभूतो घटो यदि नीलादिव्यतिरिक्तो नास्तीति कृत्वा तस्यौपचारिकं प्रत्यक्षत्वं परिकल्प्यते, 10 नन्वेवं सति पृथिव्यादिव्यतिरेकेण नीलादिकमपि नास्तीति नीलादेरस्यौपचारिकं प्रत्यक्षत्वं कल्प्यताम्। यथोक्तम्—

B 71 रूपादिव्यतिरेकेण यथा कुम्भो न विद्यते।
वाय्वादिव्यतिरेकेण तथा रूपं न विद्यते ॥ इति।

[चतुःशतक–१४·१४]

तस्मादेवमादिकस्य लोकव्यवहारस्य लक्षणेनासंग्रहादव्यापितैव लक्षणस्येति। तत्त्वविदपेक्षया हि—

15 प्रत्यक्षत्वं घटादीनां नीलादीनां च नेष्यते।

लोकसंवृत्या त्वभ्युपगन्तव्यमेव प्रत्यक्षत्वं घटादीनाम्। यथोक्तं शतके—

सर्व एव घटोऽदृष्टो रूपे दृष्टे हि जायते।
ब्रूयात्कस्तत्त्वविन्नाम घटः प्रत्यक्ष इत्यपि ॥
एतेनैव विचारेण सुगन्धि मधुरं मृदु।
20 प्रतिषेधयितव्यानि सर्वाण्युत्तमबुद्धिना ॥ इति।

[चतुःशतक–१३·१–२]

अपि च। अपरोक्षार्थवाचित्वात्प्रत्यक्षशब्दस्य साक्षादभिमुखोऽर्थः प्रत्यक्षः, प्रतिगतमक्षमस्मिन्निति कृत्वा घटनीलादीनामपरोक्षाणां प्रत्यक्षत्वं सिद्धं भवति। तत्परिच्छेदकस्य ज्ञानस्य तृणतुषाग्निवत् प्रत्यक्षकारणत्वात् प्रत्यक्षत्वं व्यपदिश्यते। यस्तु अक्षमक्षं प्रति वर्तत इति प्रत्यक्षशब्दं व्युत्पादयति, तस्य ज्ञानस्येन्द्रियाविषयत्वाद् विषयविषयत्वाच्च न युक्ता व्युत्पत्तिः। 25 प्रतिविषयं तु स्यात् प्रत्यर्थमिति वा ॥

B 72 (margin)

अथ स्यात्—यथा उभयाधीनायामपि विज्ञानप्रवृत्तौ आश्रयस्य पटुमन्दतानुविधानाद् विज्ञानानां तद्विकारविकारित्वादाश्रयेणैव व्यपदेशो भवति चक्षुर्विज्ञानमिति, एवं यद्यपि अर्थमर्थं प्रति वर्तते, तथापि अक्षमक्षमाश्रित्य वर्तमानं विज्ञानमाश्रयेण[1] व्यपदेशात् प्रत्यक्षमिति भविष्यति। दृष्टो हि असाधारणेन व्यपदेशो भेरीशब्दो यवाङ्कुर इति। नैतत्पूर्वेण तुल्यम्। तत्र हि विषयेण

1. Mss. आश्रयस्य for आश्रयेण which is confirmed by T.

विज्ञाने व्यपदिश्यमाने रूपविज्ञानमित्येवमादिना विज्ञानषट्कस्य भेदो नोपदर्शितः स्यात्, मनोविज्ञानस्य चक्षुरादिविज्ञानैः सहैकविषयप्रवृत्तत्वात् । तथा[1] हि नीलादिविज्ञानषट्के विज्ञानमित्युक्ते साकाङ्क्ष एव प्रत्ययाज्जायते किमेतद्रूपीन्द्रियजं विज्ञानमाहोस्विन्मानसमिति । आश्रयेण तु व्यपदेशे मनोविज्ञानस्य चक्षुरादिविज्ञानविषये प्रवृत्तिसंभवेऽपि परस्परभेदः सिद्धो भवति । इह तु प्रमाणलक्षणविवक्षया कल्पनापोढमात्रस्य प्रत्यक्षत्वाभ्युपगमे सति विकल्पादेव तद्विशेषत्वाभिमतत्वा[2]दसाधारणकारणेन व्यपदेशे सति न किंचित् प्रयोजनमुपलक्ष्यते । प्रमेयपरतन्त्रायां च प्रमाणसंख्याप्रवृत्तौ प्रमेयाकारानुकारितामात्रतया च समासादितात्मभावसत्ताकयोः प्रमाणयोः स्वरूपस्य व्यवस्थापनान्नेन्द्रियेण व्यपदेशः किंचिदुपकरोतीति सर्वथा विषयेणैव व्यपदेशो न्याय्यः ॥

लोके प्रत्यक्षशब्दस्य प्रसिद्धत्वाद्विवक्षितेऽर्थे प्रत्यर्थशब्दस्याप्रसिद्धत्वादाश्रयेणैव व्युत्पत्तिराश्रीयत इति चेत्, उच्यते । अस्त्ययं प्रत्यक्षशब्दो लोके प्रसिद्धः । स तु यथा लोके, तथा अस्माभिरुच्यत एव । यथास्थितलौकिकपदार्थतिरस्कारेण तु तद्व्युत्पादे क्रियमाणे प्रसिद्धशब्दतिरस्कारः प्रसिद्धः[3] स्यात्, ततश्च प्रत्यक्षमित्येवं[4] न स्यात् । एकस्य च चक्षुर्विज्ञानस्य एकेन्द्रियक्षणाश्रयस्य प्रत्यक्षत्वं न स्याद् वीप्सार्थाभावात्, एकैकस्य च प्रत्यक्षत्वाभावे बहूनामपि न स्यात् ॥

कल्पनापोढस्यैव च ज्ञानस्य प्रत्यक्षत्वाभ्युपगमात्, तेन च लोकस्य संव्यवहाराभावात्, लौकिकस्य च प्रमाणप्रमेयव्यवहारस्य व्याख्यातुमिष्टत्वाद् व्यर्थैव प्रत्यक्षप्रमाणकल्पना संजायते । चक्षुर्विज्ञानसामङ्गी नीलं जानाति नो तु नीलमिति चागमस्य प्रत्यक्षलक्षणाभिधानार्थस्याप्रस्तुतत्वात्; पञ्चानामिन्द्रियविज्ञानानां जडत्वप्रतिपादकत्वाच्च नागमादपि कल्पनापोढस्यैव विज्ञानस्य प्रत्यक्षत्वमिति न युक्तमेतत् । तस्माल्लोके यदि लक्ष्यं यदि वा स्वलक्षणं सामान्यलक्षणं वा, सर्वमेव साक्षादुपलभ्यमानत्वादपरोक्षम्, अतः प्रत्यक्षं व्यवस्थाप्यते तद्विषयेण ज्ञानेन सह । द्विचन्द्रादीनां तु अतैमिरिकज्ञानापेक्षया अप्रत्यक्षत्वम्, तैमिरिकाद्यपेक्षया तु प्रत्यक्षत्वमेव ॥

परोक्षविषयं तु ज्ञानं साध्याव्यभिचारिलिङ्गोत्पन्नमनुमानम् ॥
साक्षादतीन्द्रियार्थविदामाप्तानां यद्वचनं स आगमः ॥
सादृश्यादननुभूतार्थाधिगम उपमानं गौरिव गवय इति यथा ॥
तदेवं प्रमाणचतुष्टयाल्लोकस्यार्थाधिगमो व्यवस्थाप्यते ॥

तानि च परस्परापेक्षया सिध्यन्ति—सत्सु प्रमाणेषु प्रमेयार्थाः, सत्सु प्रमेयेष्वर्थेषु प्रमाणानि । नो तु खलु स्वाभाविकी प्रमाणप्रमेययोः सिद्धिरिति । तस्माल्लौकिकमेवास्तु यथादृष्टमित्यलं प्रसङ्गेन । प्रस्तुतमेव व्याख्यास्यामः । लौकिक एव दर्शने स्थित्वा बुद्धानां भगवतां धर्मदेशना ॥ ३ ॥

अत्राहुः स्वयूथ्याः — यदिदमुक्तं न स्वत उत्पद्यन्ते भावा इति, तद्युक्तम्, स्वत उत्पत्तिवैयर्थ्यात् । यच्चोक्तं न द्वाभ्यामिति, तदपि युक्तम्, एकांशवैकल्यात्[5] । अहेतुपक्षस्तु

१. Mss. तदा for तथा. २. C तद्विशेषस्याभि° for तद्विशेषत्वाभि°. ३ T om. प्रसिद्धः. ४. Mss. प्रत्यर्थमित्येवं स्यात् for प्रत्यक्षमित्येवं न स्यात् which is confirmed by T. ५. Mss. एकांशद्दावेः ( नेः ? ).

एकान्तनिकृष्ट इति तत्प्रतिषेधोऽपि युक्तः। यत्तु खल्विदमुच्यते नापि परत इति, तदयुक्तम्, यस्मात्परभूता एव भगवता भावानामुत्पादका निर्दिष्टाः।

**चत्वारः प्रत्यया हेतुश्चालम्बनमनन्तरम्।**
**तथैवाधिपतेयं च प्रत्ययो नास्ति पञ्चमः॥ ४॥**

B 77 5 तत्र निर्वर्तको हेतुरिति लक्षणात्, यो हि यस्य निर्वर्तको बीजभावेनावस्थितः, स तस्य हेतुप्रत्ययः। उत्पद्यमानो धर्मो येनालम्बनेनोत्पद्यते, स तस्यालम्बनप्रत्ययः। कारणस्यानन्तरो निरोधः कार्यस्योत्पत्तिप्रत्ययः, तद्यथा बीजस्यानन्तरो निरोधोऽङ्कुरस्योत्पादप्रत्ययः। यस्मिन् सति यद्भवति तत्तस्याधिपतेयमिति। त एते चत्वारः प्रत्ययाः। ये चान्ये पुरोजातसहजातपश्चाज्जातादयः, ते एतेष्वेव अन्तर्भूताः। ईश्वरादयस्तु प्रत्यया एव न संभवन्तीति, अत एवावधारयति — प्रत्ययो नास्ति पञ्चम 10 इति। तस्मादेभ्यः परभूतेभ्यो भावानामुत्पत्तिरस्ति परत उत्पत्तिरिति॥ ४॥

अत्रोच्यते — नैव हि भावानां परभूतेभ्यः प्रत्ययेभ्य उत्पत्तिरिति। यस्मात् —

B 78 **न हि स्वभावो भावानां प्रत्ययादिषु विद्यते।**
**अविद्यमाने स्वभावे परभावो न विद्यते॥ ५॥**

इति। यदि हि हेत्वादिषु परभूतेषु प्रत्ययेषु समस्तेषु व्यस्तेषु व्यस्तसमस्तेषु हेतुप्रत्यय- 15 सामग्र्या[1] अन्यत्र वा क्वचिद् भावानां कार्याणामुत्पादात्पूर्वं सत्त्वं स्यात्, स्यात्तेभ्य उत्पादः। न चैवं यदुत्पादात्पूर्वं संभवः स्यात्। यदि स्यात्, गृह्येत च, उत्पादवैयर्थ्यं च स्यात्। तस्मान्न चास्ति भावानां प्रत्ययादिषु स्वभावः। अविद्यमाने च स्वभावे नास्ति परभावः। भवनं भाव उत्पादः, परेभ्य उत्पादः परभावः, स न विद्यते। तस्मादयुक्तमेतत् परभूतेभ्यो भावानामुत्पत्तिरिति॥

20 अथवा भावानां कार्याणामङ्कुरादीनां बीजादिषु प्रत्ययेषु सत्त्वविकृतरूपेषु नास्ति स्वभावो निर्हेतुकत्वप्रसङ्गात्॥

तत्किमपेक्षं परत्वं प्रत्ययादीनाम्? विद्यमानयोरेव हि मैत्रोपग्राहकयोः परस्परापेक्षं परत्वम्? न चैवं बीजाङ्कुरयोर्यौगपद्यम्। तस्मादविद्यमाने स्वभावे कार्याणां परभावः परत्वं बीजादीनां नास्तीति परव्यपदेशाभावादेव न परत उत्पाद इति। तस्मादागमाभिप्रायानभिज्ञतैव परस्य। न 25 हि तथागता युक्तिविरुद्धं वाक्यमुदाहरन्ति। आगमस्य चाभिप्रायः प्रागेवोपवर्णितः॥ ५॥

B 79 तदेवं प्रत्ययेभ्य उत्पादवादिनि प्रतिषिद्धे क्रियात उत्पादवादी मन्यते — न चक्षूरूपादयः प्रत्ययाः साक्षाद्विज्ञानं जनयन्ति। विज्ञानजनिक्रियानिष्पादकत्वात्तु प्रत्यया उच्यन्ते। सा च क्रिया[2] विज्ञानं जनयति। तस्मात्प्रत्ययवती विज्ञानजनिक्रिया विज्ञानजनिका, न प्रत्ययाः। यथा पचिक्रिया ओदनस्येति। उच्यते —

**क्रिया न प्रत्ययवती**

यदि क्रिया काचित् स्यात्, सा चक्षुरादिभिः प्रत्ययैः प्रत्ययवती विज्ञानं जनयेत्। न

---

१. Mss. °सामग्र्यां for °सामग्र्या which is confirmed by T. २. Mss. भावक्रिया for क्रिया which is comfirmed by T.

त्वस्ति । कथं कृत्वा ? इह क्रियेयमिष्यमाणा जाते वा विज्ञाने इष्यते, अजाते वा जायमाने वा ? तत्र जाते न युक्ता । क्रिया हि भावनिष्पादिका । भावश्चेन्निष्पन्नः, किमस्य क्रियया ?

जातस्य जन्म पुनरेव च नैव युक्तम् ।

[ मध्यमकावतार-६.८ ]

इत्यादिना च मध्यमकावतारे प्रतिपादितमेतत् । अजातेऽपि न युक्ता,

कर्त्रा विना जनिरियं न च युक्तरूपा ।  5

[ मध्यमकावतार-६.१९ ]

इत्यादिवचनात् । जायमानेऽपि भावे क्रिया न संभवति, जाताजातव्यतिरेकेण जायमानाभावात् ।  B 80
यथोक्तम्—

जायमानार्धजातत्वाज्जायमानो न जायते ।

अथ वा जायमानत्वं सर्वस्यैव प्रसज्यते ॥ इति ।

[ चतुःशतक-१५.१६ ]

यतश्चैवं त्रिषु कालेषु जनिक्रियाया असंभवः, तस्मान्नास्ति सा । अत एवाह—क्रिया न  10
प्रत्ययवती इति ।

विशेषणं नास्ति विना विशेषम् ।

[ मध्यमकावतार-६.५७ ]

इत्यादिना प्रतिपादितमेतन्मध्यमकावतारे । न हि वन्ध्यापुत्रो गोमानित्युच्यते ॥

यद्येवम्, अप्रत्ययवती तर्हि भविष्यतीति, एतदप्ययुक्तमित्याह —

**नाप्रत्ययवती क्रिया ।**  15

यदा प्रत्ययवती नास्ति, तदा कथमप्रत्ययवती निर्हेतुका स्यात् ? न हि तन्तुमयः पटो न युक्त इति वीरणमयोऽभ्युपगम्यते । तस्मात्क्रिया न भावजनिका ॥

अत्राह — यद्येवं क्रियाया असंभवः, प्रत्ययास्तर्हि जनका भविष्यन्ति भावानामिति । उच्यते —

**प्रत्यया नाक्रियावन्तः**  20

यदा क्रिया नास्ति, तदा क्रियारहिता अक्रियावन्तो निर्हेतुकाः प्रत्ययाः कथं जनकाः ? अथ क्रियावन्त एव जनका इति, उच्यते —

**क्रियावन्तश्च सन्त्युत ॥ ६ ॥**  B 81

नेति प्रकृतेनाभिसंबन्धः । उतशब्दोऽवधारणे । तत्र क्रियाया अभाव उक्तः, कथं क्रियावत्त्वं प्रत्ययानामिति ? यथा च विज्ञानजनिक्रियोक्ता, एवं परिक्रियादयोऽपि भावा उक्ता  25
वेदितव्या इति नास्ति क्रियातोऽपि समुत्पत्तिर्भावानामिति भवत्युत्पादाभिधानमर्थशून्यम् ॥ ६ ॥

अत्राह — किं न एतेन क्रियावन्तः प्रत्यया इत्यादिविचारेण ? यस्माच्चक्षुरादीन् प्रतीत्य प्रत्ययान् विज्ञानादयो भावा जायन्ते, तस्माच्चक्षुरादीनां प्रत्ययत्वं तेभ्यश्चोत्पादो विज्ञानादीनामिति । एतदप्ययुक्तमित्याह —

**उत्पद्यते प्रतीत्येमानितीमे प्रत्ययाः किल ।**
**यावन्नोत्पद्यत इमे तावन्नाप्रत्ययाः कथम् ॥ ७ ॥**

यदि चक्षुरादीन् प्रत्ययान् प्रतीत्य विज्ञानमुत्पद्यते इति अस्य इमे प्रत्यया उच्यन्ते, ननु यावत्तद्विज्ञानाख्यं कार्यं नोत्पद्यते तावदिमे चक्षुरादयः कथं नाप्रत्ययाः ? अप्रत्यया एवेत्यभिप्रायः । 5 न चाप्रत्ययेभ्य उत्पत्तिः सिकताभ्य इव तैलस्य ।

B 82 अथ मतम्—पूर्वमप्रत्ययाः सन्तः किंचिदन्यं प्रत्ययमपेक्ष्य प्रत्ययत्वं प्रतिपद्यन्त इति, एतदप्ययुक्तम् । यत् तत् प्रत्ययान्तरमप्रत्ययस्य तस्य प्रत्ययत्वेन कल्प्यते, तदपि प्रत्ययत्वे सति अस्य प्रत्ययो भवति । तत्राप्येषैव चिन्तनेति न युक्तमेतत् ॥ ७ ॥

किं च । इह इमे चक्षुरादयो विज्ञानस्य प्रत्ययाः कल्प्यमानाः सतो वा अस्य कल्प्येरन्, 10 असतो वा ? सर्वथा च न युज्यते इत्याह—

**नैवासतो नैव सतः प्रत्ययोऽर्थस्य युज्यते ।**

कस्मादित्याह—

**असतः प्रत्ययः कस्य सतश्च प्रत्ययेन किम् ॥ ८ ॥**

असतो ह्यर्थस्य अविद्यमानस्य कथं प्रत्ययः स्यात् ? भविष्यता व्यपदेशो भविष्यतीति चेत्, 15 नैवम्—

भविष्यता चेद्व्यपदेश इष्टः
शक्तिं विना नास्ति हि भावितास्य ।
[ मध्यमकावतार – ६.५८ ]

इत्यादिनोक्तदोषत्वात् । सतोऽपि विद्यमानस्य लब्धजन्मनो निष्फलैव प्रत्ययकल्पना ॥ ॥

B 83 एवं समस्तानां प्रत्ययानां कार्योत्पादनासामर्थ्येन अप्रत्ययत्वमुद्भाव्य अतः परं व्यस्ताना- 20 मप्रत्ययत्वं प्रतिपाद्यते ॥

अत्राह—यद्यप्येवं प्रत्ययानामसंभवः, तथापि अस्त्येव लक्षणोपदेशात्प्रत्ययप्रसिद्धिः । तत्र निर्वर्तको हेतुरिति लक्षणमुच्यते हेतुप्रत्ययस्य । न चाविद्यमानस्य लक्षणोपदेशो युक्तो वन्ध्यासुतस्येवेति । उच्यते । स्याद्धेतुप्रत्ययो यदि तस्य लक्षणं स्यात् । यस्मात्—

**न सन्नासन्न सदसन् धर्मो निर्वर्तते यदा ।**
25 **कथं निर्वर्तको हेतुरेवं सति हि युज्यते ॥ ९ ॥**

तत्र निर्वर्तक उत्पादकः । यदि निर्वर्त्यो धर्मो निर्वर्तेत, तमुत्पादको हेतुरुत्पादयेत् । न तु निर्वर्तते, सदसदुभयरूपस्य निर्वर्त्यस्याभावात् । तत्र सन्न निर्वर्तते विद्यमानत्वात् । असन्नपि, अविद्यमानत्वात् । सदसन्नपि, परस्परविरुद्धस्यैकार्थस्याभावात्, उभयपक्षाभिहितदोषत्वाच्च । यत एवं कार्यस्योत्पत्तिर्नास्ति, हेतुप्रत्ययोऽप्यतो नास्ति । ततश्च यदुक्तं लक्षणसंभवाद्विद्यते हेतुप्रत्यय इति, तदेवं सति न युज्यते ॥ ९ ॥

---

1. T om. तस्य.

इदानीमालम्बनप्रत्ययनिषेधार्थमाह –

**अनालम्बन एवायं सन्[1] धर्म उपदिश्यते ।**
**अथानालम्बने धर्मे कुत आलम्बनं पुनः ॥ १० ॥**  B 84

इह सालम्बनधर्माः कतमे ? सर्वचित्तचैत्ता इत्यागमात् । चित्तचैत्ता येनालम्बनेनोत्पद्यन्ते यथायोगं रूपादिना, स तेषामालम्बनप्रत्ययः । अयं च विद्यमानानां वा परिकल्प्येत अविद्यमानानां 5 वा । तत्र विद्यमानानां नार्थस्तदालम्बनप्रत्ययेन । धर्मस्य हि उत्पत्त्यर्थमालम्बनं परिकल्प्यते, स चालम्बनात्पूर्वं विद्यमान एवेति । अथैवमनालम्बने धर्मे स्वात्मना प्रसिद्धे किमस्य आलम्बनयोगेन परिकल्पितेन, इत्यनालम्बन एवायं सन् विद्यमानो धर्मः चित्तादिकः केवलं सालम्बन इत्युच्यते भवद्भिः स्वमनीषिकया, न त्वस्य आलम्बनेन कश्चित्संबन्धोऽस्ति । अथाविद्यमानस्यालम्बनं परिकल्प्यते, तदपि न युक्तम्, अनालम्बन एवायमित्यादि । अविद्यमानस्य 10 हि नास्ति आलम्बनेन योगः ॥

अनालम्बन एवायं सन् धर्म उपदिश्यते ।  B 85

भवद्भिः सालम्बन इति वाक्यशेषः ।

अथानालम्बने धर्मे कुत आलम्बनं पुनः ॥

अथशब्दः प्रश्ने । कुत इति हेतौ । तेनायमर्थः—अथैवमनालम्बने धर्मेऽसति अविद्यमाने 15 भूयः कुत आलम्बनम् ? आलम्बनकाभावादालम्बनस्याप्यभाव इत्यभिप्रायः । कथं तर्हि सालम्बनाश्चित्तचैत्ताः ? सांवृतमेतल्लक्षणं न पारमार्थिकमित्यदोषः ॥ १० ॥

इदानीं समनन्तरप्रत्ययनिषेधार्थमाह –

**अनुत्पन्नेषु धर्मेषु निरोधो नोपपद्यते ।**
**नानन्तरमतो युक्तं निरुद्धे प्रत्ययश्च कः ॥ ११ ॥**  20

तत्र पश्चिमे श्लोकस्यार्धे पादव्यत्ययो द्रष्टव्यः, चशब्दश्च भिन्नक्रमो निरुद्धे चेति ।  B 86 तेनैवं पाठः—निरुद्धे च प्रत्ययः कः ? नानन्तरमतो युक्तम् इति । श्लोकबन्धार्थं त्वेवमुक्तम् ॥

तत्र कारणस्यानन्तरो निरोधः कार्यस्योत्पादप्रत्ययः समनन्तरप्रत्ययलक्षणम् । अत्र विचार्यते—अनुत्पन्नेषु धर्मेषु कार्यभूतेष्वङ्कुरादिषु निरोधो नोपपद्यते कारणस्य बीजादेः । यदैतदेवम्, तदा कारणस्य निरोधाभावादङ्कुरस्य कः समनन्तरप्रत्ययः ? अथानुत्पन्नेऽपि कार्ये बीजनिरोध इष्यते, 25 एवं सति निरुद्धे बीजे अभावीभूते अङ्कुरस्य कः प्रत्ययः ? को वा बीजनिरोधस्य प्रत्यय इति । उभयमेतदहेतुकमित्याह—निरुद्धे च कः प्रत्यय इति । चशब्दोऽनुत्पन्नशब्दापेक्षः । तेन अनुत्पन्ने चाङ्कुरे बीजादीनां निरोधे इष्यमाणेऽप्युभयमेतदहेतुकमापद्यत इति नानन्तरमतो युक्तम् । अथ वा । न स्वतो नापि परत इत्यादिना उत्पादो निषिद्धः, तमभिसंधायाह –

अनुत्पन्नेषु धर्मेषु निरोधो नोपपद्यते ।

---

1. Mss. स धर्म for सन् धर्म.

नानन्तरमतो युक्तम् इति ।

अपि च ।

निरुद्धे प्रत्ययश्च कः ।।

इत्यत्र पूर्वकमेव व्याख्यानम् ।। ११ ।।

5 इदानीमधिपतिप्रत्ययस्वरूपनिषेधार्थमाह — बीजादीनां[1]

**भावानां निःस्वभावानां न सत्ता विद्यते यतः ।**
**सतीदमस्मिन् भवतीत्येतन्नैवोपपद्यते ।। १२ ।।**

B 87 इह यस्मिन् सति यद्भवति, तत्तस्य आधिपतेयमित्यधिपतिप्रत्ययलक्षणम् । भावानां च प्रतीत्यसमुत्पन्नत्वात् स्वभावाभावे कुतस्तद् यदस्मिन्निति कारणत्वेन व्यपदिश्यते, कुतस्तद् 10 यदिदमिति कार्यत्वेन ? तस्मान्नास्ति लक्षणतोऽपि प्रत्ययसिद्धिः ।। १२[2] ।।

अत्राह—तन्त्वादिभ्यः पटादिकमुपलभ्य पटादेस्तन्त्वादयः प्रत्यया इति । उच्यते । पटादिफलप्रवृत्तिरेव स्वरूपतो[3] नास्ति, कुतः प्रत्ययानां प्रत्ययत्वं सेत्स्यति ? यथा च पटादिफलप्रवृत्तिरसती, तथा प्रतिपादयन्नाह—

**न च व्यस्तसमस्तेषु प्रत्ययेष्वस्ति तत्फलम् ।**
15 **प्रत्ययेभ्यः कथं तच्च भवेन्न प्रत्ययेषु यत् ।। १३ ।।**

तत्र व्यस्तेषु तन्तुतुरीवेमतसरशलाकादिषु प्रत्ययेषु पटो नास्ति, तत्रानुपलभ्यमानत्वात्, कारणबहुत्वाच्च कार्यबहुत्वप्रसङ्गात् । समुदितेष्वपि तन्त्वादिषु नास्ति पटः, प्रत्येकमवयवेष्वविद्यमानत्वात्, एकस्य कार्यस्य खण्डश उत्पत्तिप्रसङ्गात् । तस्मात्फलाभावान्न सन्ति प्रत्ययाः स्वभावत[4] इति ।। १३ ।।

20 **अथासदपि तत्तेभ्यः प्रत्ययेभ्यः प्रवर्तते ।**

B 88 इत्यभिप्रायः स्यात्—

**अप्रत्ययेभ्योऽपि कस्मात्फलं[5] नाभिप्रवर्तते ।। १४ ।।**

अप्रत्ययेष्वपि नास्ति फलमिति । अप्रत्ययेभ्योऽपि वीरणादिभ्यः कस्मान्नाभिप्रवर्तते पट इति नास्ति फलप्रवृत्तिः स्वरूपतः[6] ।। १४ ।।

25 अत्राह — यदि अन्यत् फलं स्यादन्ये च प्रत्ययाः, तदा किं प्रत्ययेषु फलमस्ति नास्तीति चिन्ता स्यात् । नास्ति तु व्यतिरिक्तं फलम् , किं तर्हि प्रत्ययमयमेवेति ? उच्यते —

**फलं च प्रत्ययमयं प्रत्ययाश्चास्वयंमयाः ।**
**फलमस्वमयेभ्यो यत्तत्प्रत्ययमयं कथम् ।। १५ ।।**

यदि प्रत्ययमयं प्रत्ययविकारः फलमिति व्यवस्थाप्यते, तदयुक्तम् । यस्मात्तेऽपि प्रत्यया अस्वयंमया अप्रत्ययस्वभावा इत्यर्थः । तन्तुमयो हि पट इत्युच्यते । स्यात् पटो यदि तन्तव एव

---

१. T om. °स्वरूप°. २. T adds बीजादीनां which Mss. om. ३. T om. स्वरूपतो. ४. T om. स्वभावतः ५. P कस्मान्नाभिवर्प्रतते फलं for कस्मात्फलं नाभिप्रवर्तते. ६. T om. स्वरूपतः

स्वभावसिद्धाः स्युः । ते हि अंशुमया अंशुविकारा न स्वभावसिद्धाः[1] । ततश्च तेभ्योऽस्वयंमयेभ्योऽस्वभावेभ्यो यत्फलं पटाख्यम्, तत्कथं तन्तुमयं भविष्यति ? यथोक्तम्— B 89

पटः कारणतः सिद्धः सिद्धं कारणमन्यतः[2] ।
सिद्धिर्यस्य स्वतो नास्ति तदन्यज्जनयेत्कथम् ॥ इति ॥ १५ ॥

[ शून्यतासप्तति ] 5

**तस्मान्न प्रत्ययमयं**

फलं संविद्यते । अप्रत्ययमयं तर्हि अस्तु –

**नाप्रत्ययमयं फलम् ।**

**संविद्यते**

इति तन्तुमयो यदा पटो नास्ति, तदा कथं वीरणमयः स्या ? 10

अत्राह—मा भूत्फलम्, प्रत्ययाप्रत्ययनियमस्तु विद्यते । तथा च भवान् ब्रवीति—यदि असत् फलं प्रत्ययेभ्यः प्रवर्तते, अप्रत्ययेभ्योऽपि कस्मान्नाभिप्रवर्तते इति । न चासति फले पटकटाख्ये तन्तुवीरणानां प्रत्ययानां प्रत्ययत्वं युक्तम्, अतः फलमप्यस्तीति । उच्यते । स्यात्फलं यदि प्रत्ययाप्रत्यया एव स्युः । सति हि फले इमेऽस्य प्रत्यया इमेऽप्रत्यया इति स्यात् । तच्च विचार्यमाणं नास्तीति— 15

**फलाभावात्प्रत्ययाप्रत्ययाः कुतः ॥ १६ ॥**

प्रत्ययाश्च अप्रत्ययाश्चेति समासः ॥ तस्मान्नास्ति भावानां स्वभावतः समुत्पत्तिरिति । यथोक्तमार्यरत्नाकरसूत्रे – B 90

शून्यविद्य न हि विद्यते क्वचि
अन्तरीक्षि शकुनस्य वा पदम् । 20
यो न विद्यति सभावतः क्वचि
सो न जातु परहेतु भेष्यति ॥

यस्य नैव हि सभावु लभ्यति
सोऽस्वभावु परपच्चयः कथम् ।
अस्वभावु परु किं जनीष्यति 25
एष हेतु सुगतेन देशितः ॥

सर्व धर्म अचला दृढं स्थिता
निर्विकार निरुपद्रवाः शिवाः ।
अन्तरीक्षपथतुल्यऽजानका
तत्र मुह्यति जगं अजानकम् ॥

---

१. P अंशमया अंशविकारा for अंशुमया अंशुविकारा. २. T om. स्वभावतः.

शैलपर्वत यथा अकम्पिया
एवं धर्म अविकम्पियाः सदा ।
नो च्यवति न पि चोपपद्यु
B 91 एवं धर्मत[1] जिनेन देशिता ॥ इत्यादि ।

5 तथा—

यो न पि जायति ना चुपपद्यी
नो च्यवते न पि जीर्यति धर्मः ।
तं जिनु देशयती नरसिंहः
तत्र निवेशयि सत्त्वशतानि ॥

10 यस्य सभावु न विद्यति कश्चि
नो परभावतु केनचि लब्धः ।
नान्तरतो न पि बाहिरतो वा
लभ्यति तत्र निवेशयि नाथः ॥

शान्त गती कथिता सुगतेन
15 नो च गति उपलभ्यति काचि ।
तत्र च वोहरसी गतिमुक्तो
मुक्तकु मोचयमी बहुसत्त्वान् ॥ इति विस्तरः ॥ १६ ॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
प्रत्ययपरीक्षा नाम प्रथमं प्रकरणम् ॥

---

1. P धर्मण for धर्मत.

## २

## गतागतपरीक्षा द्वितीयं प्रकरणम् ।

अत्राह—यद्यपि उत्पादप्रतिषेधात्प्रतीत्यसमुत्पादस्य अनिरोधादिविशेषणसिद्धिः, तथापि अनागमानिर्गमप्रतीत्यसमुत्पादसिद्धये लोकप्रसिद्धगमनागमनक्रियाप्रतिषेधार्थं किंचिदुपपत्त्यन्तर-मुच्यतामिति । उच्यते । यदि गमनं नाम स्यान्नियतं तद्गते वा अध्वजाते परिकल्प्येत अगते गम्यमाने वा । सर्वथा च न युज्यते इत्याह — B 92

**गतं न गम्यते तावदगतं नैव गम्यते ।**
**गतागतविनिर्मुक्तं गम्यमानं न गम्यते ॥ १ ॥** 5

तत्र उपरतगमिक्रियमध्वजातं गतमित्युच्यते । आविश्यमानं गमिक्रियया वर्तमानं गम्यत इत्युच्यते । यद्गतमुपरतगमिक्रियं तद्वर्तमानगमिक्रियायोगवाचिना गम्यते इत्यनेन शब्देनोच्य-मानमसंबद्धमिति कृत्वा गतं तावद् गम्यत इति न युज्यते । तावच्छब्देन च प्रतिषेधक्रमं दर्शयति ॥ 10

अगतमपि न गम्यते । अगतं हि अनुपजातगमिक्रियमनागतमुच्यते, गम्यत इति च वर्तमानम् । अतोऽनागतवर्तमानयोरत्यन्तभेदादगतमपि गम्यत इति न युज्यते । यदि अगतं कथं गम्यते, अथ गम्यते न तदगतमिति ॥ B 93

गम्यमानेऽपि नास्ति गमनम्, यस्मात्—

गतागतविनिर्मुक्तं गम्यमानं न गम्यते । 15

इह हि गन्ता यं देशमतिक्रान्तः स तस्य देशो गतः, यं च नातिक्रान्तः सोऽस्या-नागतः । न च गतागतव्यतिरेकेण तृतीयमपरमध्वजातं पश्यामो गम्यमानं नाम । यतश्चैवं गम्यमानं न गम्यते, गम्यत इति न प्रज्ञायते, तस्मान्नास्ति गम्यमानम् । अतो न तद् गमिक्रियया आविश्यते न गम्यत इति नास्ति गम्यमानेऽपि गमनम् ॥

अथ स्यात्—गन्तुर्गच्छतो यश्चरणाक्रान्तो देशः, स गम्यमानः स्यादिति । नैवम्, 20 चरणयोरपि परमाणुसांघातत्वात् । अङ्गुल्यग्रावस्थितस्य परमाणोर्यः पूर्वो देशः, स तस्य गतेऽन्तर्गतः । पार्ष्ण्यवस्थितस्य चरमपरमाणोर्य उत्तरो देशः, स तस्य अगतेऽन्तर्गतः । न च परमाणुव्यतिरेकेण चरणमस्ति । तस्मान्नास्ति गतागतव्यतिरेकेण गम्यमानम् । यथा चैवं चरणे विचारः, एवं परमाणूनामपि पूर्वापरदिग्भागसंबन्धेन विचारः कार्य इति । अथार्धगतं गम्यमानम्, उक्तमुत्तरं जायमानविचारेण । तस्माद्गम्यमानं न गम्यते इति सिद्धम् ॥ १ ॥ 25

तत्राह—गम्यत एव गम्यमानम् । इह हि—

**चेष्टा यत्र गतिस्तत्र गम्यमाने च सा यतः ।**
**न गते नागते चेष्टा गम्यमाने गतिस्ततः ॥ २ ॥**

---

१. P वर्तमानगमिक्रियया for गमिक्रियया वर्तमानं as in Mss. २. Mss. अगतमिति for अगतमपि.

B 94 तत्र चेष्टा चरणोत्क्षेपपरिक्षेपलक्षणा। यतो व्रजतो गन्तुर्यत्र देशे चेष्टा गतिः तत्रैव देशे। सा च चेष्टा न गतेऽध्वनि संभवति नाप्यगते, किं तु गम्यमान एव। ततश्च गम्यमाने गतिः। यत्र हि गतिरुपलभ्यते तद्गम्यमानम्, तच्च गमिक्रियया आविश्यते। तस्माद् गम्यमानमेव गम्यते इति। एकोऽत्र गमिर्ज्ञानार्थः, अपरश्च देशान्तरसंप्राप्त्यर्थ इति ॥ २ ॥

5 एवमपि परिकल्प्यमाने गम्यमानं न गम्यत इत्याह –

**गम्यमानस्य गमनं कथं नामोपपत्स्यते।**
**गम्यमाने द्विगमनं यदा नैवोपपद्यते ॥ ३ ॥**

इह हि गमिक्रियायोगादेव गम्यमानव्यपदेशमिच्छति भवान्, तच्च इति गम्यत ब्रवीति। एका चात्र गमिक्रिया, तया गम्यमानव्यपदेशो भवतु काममध्वनः। गम्यत इति भूयः क्रियासंबन्धो 10 गम्यमानस्य न युज्यत इति

गम्यमानस्य गमनं कथं नामोपपत्स्यते।

कारणमाह –

गम्यमाने द्विगमनं यदा नैवोपपद्यते ॥ इति ॥

गम्यमानमिति गम्यत इत्यर्थः। द्विगतं गमनं द्विगमनम्[2]। एकस्या गमिक्रियाया गम्यमान-

B 95 15 मित्यत्रोपयुक्तत्वाद् द्वितीयाया अभावाच्च, गम्यत इत्ययं व्यपदेशो विना गमनेन यदा नैवोपपद्यते, तदा गम्यमानं गम्यत इति परिपूर्णो वाक्यार्थो नास्तीत्यभिप्रायः। गम्यमानमित्येतावन्मात्रमेव संभवति द्वितीयक्रियाभावात्, न तु गम्यत इति ॥ ३ ॥

अथ गम्यते इत्यत्रैव गमिक्रियासंबन्ध इष्यते, एवं सति गम्यमानव्यपदेशो नास्ति क्रियासंबन्ध इति न परिपूर्णता वाक्यार्थस्येत्याह –

20 **गम्यमानस्य गमनं यस्य तस्य प्रसज्यते।**
**ऋते गतेर्गम्यमानं गम्यमानं हि गम्यते ॥ ४ ॥**

यस्य वादिनो गम्यमानस्य गमनमिति पक्षः, गम्यमाने संज्ञाभूते गमिक्रियाशून्ये यो गमिक्रियामाधेयभूतामिच्छति, तस्य पक्षे ऋते गतेर्गम्यमानमिति प्रसज्यते, गतिरहितं गमनं स्यात्। यस्मादस्य गम्यमानं हि गम्यते। हि शब्दो यस्मादर्थे। यस्माद् गतिरहितमेव गम्यमानं सत् तस्य 25 वादिनो गम्यते, गम्यत इत्यत्र क्रियोपयोगात्, तस्माद् गतिरहितं गमनं प्रसज्यते ॥ ४ ॥

अथ उभयत्रापि क्रियासंबन्ध इष्यते गम्यमाने गम्यते इत्यत्र च, एवमपि –

**गम्यमानस्य गमने प्रसक्तं गमनद्वयम्।**
**येन तद्गम्यमानं च यच्चात्र गमनं पुनः ॥ ५ ॥**

B 96 येन गमनेन योगाद्गम्यमानव्यपदेशं प्रतिलभतेऽध्वा, तदेकं गमनम्। तत्र गम्यमानेऽधिकरणभूते[3] द्वितीयं गमनं येन सोऽध्वा गम्यते। एतद्गमनद्वयं गम्यमानस्य गमने सति प्रसक्तम् ॥ ५ ॥

---

१. T गम्यमानं ह्यगमनं for गम्यमाने द्विगमनं. २. T अगमनं गमनरहितं for द्विगतं गमनं द्विगमनम्। एकस्या गमिक्रियाया. ३. T गमनाश्रयभूते for अधिकरणभूते.

भवतु गमनद्वयम्, को दोष इति चेत्, अयं दोषः। यस्मात्—

**द्वौ गन्तारौ प्रसज्येते प्रसक्ते गमनद्वये।**

किं पुनः कारणं गन्तृद्वयप्रसङ्गे इत्याह—

**गन्तारं हि तिरस्कृत्य गमनं नोपपद्यते॥ ६॥**

यस्मादवश्यं क्रिया स्वसाधनमपेक्षते कर्म कर्तारं वा। गमिक्रिया चैवं कर्तर्यवस्थिता, 5 अतो गन्तारमपेक्षते। नास्ति च एकस्मिन्नेव गच्छति देवदत्ते द्वितीयः कर्तेति। अतः कर्तृद्वयाभावान्नास्ति गमनद्वयम्। ततश्च गम्यमानं गम्यत इति नोपपद्यते॥

अथ स्यात्—यदायं देवदत्तः स्थितः, स[१] न भाषते? पश्यति न? तदैको[२]ऽनेकक्रियो दृष्टः, एवमेकस्मिन् गन्तरि क्रियाद्वयं भविष्यति इति। नैवम्। शक्तिर्हि कारको न द्रव्यम्। क्रियाभेदाच्च तत्साधनस्यापि शक्तेः सिद्ध एव भेदः। न हि स्थितिक्रियया वक्ता स्यात्। द्रव्यमेकमिति चेत्, भवतु 10 एवम्, न तु द्रव्यं कारकः[३], किं तर्हि शक्तिः, सा च भिद्यत एव। अपि च। सदृशक्रियाद्वयकारकत्वं नैकदेशिकस्य दृष्टम्, अतो नैकस्य गन्तुर्गमनद्वयम्॥ ६॥ B 97

अत्राह—यद्यप्येवं तथापि गन्तरि देवदत्ते गमनमुपलभ्यते देवदत्तो गच्छतीति व्यपदेशात्। ततश्च विद्यत एव गमनं गमनाश्रयगन्तृसद्भावात्। उच्यते। स्यादेवं यदि गमनाश्रयो गन्ता स्यात्, न[४] त्वस्ति। कथमित्याह— 15

**गन्तारं चेत्तिरस्कृत्य गमनं नोपपद्यते।**
**गमनेऽसति गन्ताथ कुत एव भविष्यति॥ ७॥**

गन्तारमन्तरेण निराश्रयं गमनमसदित्युक्तम्, ततश्च गन्तारं चेत्तिरस्कृत्य प्रत्याख्याय गमनं नास्ति, असति गमने कुतो निर्हेतुको गन्ता? अतो नास्ति गमनम्॥ ७॥

अत्राह—विद्यत एव गमनम्, तद्वतस्तेन व्यपदेशात्। इह गन्ता गमनेन युक्तः, 20 तद्योगाच्च गच्छति। यदि गमनं न स्यात्, गमनवतो देवदत्तस्य गच्छतीति व्यपदेशो न स्यात्, दण्डाभावे दण्डिव्यपदेशाभाववत्। उच्यते। स्याद्गमनम्, यदि गच्छतीत्येवं व्यपदेशः स्यात्। यस्मात्—

**गन्ता न गच्छति तावदगन्ता नैव गच्छति।**
**अन्यो गन्तुरगन्तुश्च कस्तृतीयो हि गच्छति॥ ८॥** 25

इह गच्छतीति गन्ता, स तावन्न गच्छति, यथा च न गच्छति तथोत्तरेण श्लोकत्रयेण प्रतिपादयिष्यति। अगन्तापि न गच्छति। अगन्ता हि नाम यो गमिक्रियारहितः। गच्छतीति च गमिक्रियायोगप्रवृत्तः शब्दः। यद्यसावगन्ता, कथं गच्छति? अथ गच्छति, नासौ अगन्ता इति। तदुभयव्यतिरिक्तो गच्छतीति चेन्नैवम्। को हि गन्तुरगन्तुर्विनिर्मुक्तस्तृतीयोऽस्ति यो गच्छतीति कल्प्येत? तस्मान्नास्ति गमनम्॥ ८॥ B 98

---

१. P स ननु भाषते ननु पश्यति ननु for स न भाषते पश्यति न?; T om. २. T तदैकः कर्ता for तदैको. ३. Mss. कारकम् for कारकः. ४. Mss. om. न त्वस्ति though rendered in T.

अत्राह — नागन्ता गच्छति नाप्युभयरहितः, किं तर्हि गन्तैव गच्छतीति । एतदप्यसत् । किं कारणम् ? यस्मात् —

**गन्ता तावद्गच्छतीति कथमेवोपपत्स्यते ।**
**गमनेन विना गन्ता यदा नैवोपपद्यते ॥ ९ ॥**

5 गन्ता गच्छतीत्यत्र वाक्ये एकैव गमिक्रिया, तया च गच्छतीति व्यपदिश्यते । गन्तेति तु व्यपदेशे नास्ति द्वितीया गमिक्रिया इति । गमनेन विना गन्ता, अगच्छन् गन्तेति यदा न संभवति, तदा गन्ता गच्छतीति न युज्यते । कामं गच्छतीत्यस्तु, गन्तेति तु न संभवतीति तदयुक्तम् ॥ ९ ॥

अथ गतियोगात्सगतिक एव गन्ता, तथापि द्वितीयगमिक्रियाभावाद्गच्छतीतिं व्यपदेशो 10 न स्यादित्याह —

**पक्षो गन्ता गच्छतीति यस्य तस्य प्रसज्यते ।**
**गमनेन विना गन्ता गन्तुर्गमनमिच्छतः ॥ १० ॥**

B 99 यस्य वादिनो गमिक्रियायोगादेव गन्तेति पक्षः, तस्य गन्तुर्गमनमिच्छतः सगमनगन्तृव्यपदेशाद्गमनेन विना गन्ता गच्छतीति स्यात्, द्वितीयगमिक्रियाभावात् । अतो[1] गन्ता गच्छतीति 15 न युज्यते । गच्छतीत्येतस्यार्थे गन्तेति शब्दो गमनेन विना गन्तेत्यत्र वाक्ये ॥ १० ॥

अथ उभयत्रापि गतियोग इष्यते गन्ता गच्छतीति, एवमपि —

**गमने द्वे प्रसज्येते गन्ता यद्युत गच्छति ।**
**गन्तेति चोच्यते येन गन्ता सन् यच्च गच्छति ॥ ११ ॥**

येन गमनेन योगाद् गन्तेत्युच्यते व्यपदिश्यते तदेकं गमनम् । गन्ता भवन् यच्च 20 गच्छति, यां च गतिक्रियां करोति, तदेतद्गमनद्वयं प्रसक्तम् । अतो गन्तृद्वयप्रसङ्ग इति पूर्ववद् दूषणं वक्तव्यम् । तस्मान्नास्ति गच्छतीति व्यपदेशः ॥

अत्राह — यद्यप्येवम्, तथापि देवदत्तो गच्छतीति व्यपदेशसद्भावाद्गमनस्तीति । नैवम् । यस्माद्देवदत्ताश्रयैवैषा[2] चिन्ता किमसौ गन्ता सन् गच्छति, उत अगन्ता गच्छति, तद्व्यतिरिक्तो वेति । सर्वथा च नोपपद्यत इति यत्किंचिदेतत् ॥

B 100 25 अत्राह — विद्यत एव गमनम्, तदारम्भसद्भावात् । इह देवदत्तः स्थित्युपमर्देन गमनमारभते । न च अविद्यमानकूर्मरोमप्रावारादिकमारभते[3] । उच्यते । स्याद्गमनं यदि तदारम्भे एव स्यात् । यस्मात् —

**गते नारभ्यते गन्तुं गतं नारभ्यतेऽगते ।**
**नारभ्यते गम्यमाने गन्तुमारभ्यते कुह ॥ १२ ॥**

---

१. C अतो ग यन्ता गच्छतीति न युज्यते । गच्छतीति न युज्यते । गच्छतीति एतस्यार्थे; Paris Ms. om. गन्ता. २. Mss. °श्रयैव नैव चिन्ता ; P °श्रयैवैषैव for °श्रयैवैषा. ३. Mss. °प्रवार्यो° or °प्रचार्यो°.

यदि गमनारम्भो भवेत्, तद् गते वाध्वन्यारभ्येत, अगते वा गम्यमाने वा । तत्र गते गमनं नारभ्यते, तद्धि नाम उपरतगमिक्रियम् । यदि तत्र गमनमारभ्येत, तद् गतमित्येवं न स्याद् अतीतवर्तमानयोर्विरोधात् । अगतेऽपि गमनं नारभ्यते, अनागतवर्तमानयोर्विरोधात् । नापि गम्यमाने, तदभावात् क्रियाद्वयप्रसङ्गात् कर्तृद्वयप्रसङ्गाच्च । तदेवं सर्वत्र गमनारम्भमपश्यन्नाह– गन्तुमारभ्यते कुहेति ॥ १२ ॥  5

यथा च गमनं न संभवति तथा प्रतिपादयन्नाह–

**न[1] पूर्वं गमनारम्भाद्गम्यमानं न वा गतम् ।**
**यत्रारभ्येत गमनमगते गमनं कुतः ॥ १३ ॥**

इह देवदत्तो यदावस्थित आस्ते, स तदा गमनं नारभते । तस्य गमनारम्भात्पूर्वं न गम्यमानमध्वजातमस्ति, न च गतं यत्र गमनमारभ्येत । तस्माद् गतगम्यमानाभावादेनयोर्न गमनारम्भः ॥  10  B 101

अथ स्यात्–यद्यपि गमनारम्भात्पूर्वं न गतं न गम्यमानं तथाप्यगतमस्ति, तत्र गमनारम्भः स्यादिति । उच्यते । अगते गमनं कुतः । अनुपजातगमिक्रियमनारब्धगमिक्रियमगतम् । तत्र गमनारम्भ इत्यसंबद्धमेतदित्याह–अगते गमनं कुतः इति ॥ १३ ॥

यद्यपि गतागतगम्यमानेषु गमनारम्भो नास्ति, गतागतगम्यमानानि तु सन्ति । न चासति गमने एतानि युज्यन्त इति । उच्यते । स्याद् गमनं यद्येतान्येव स्युः । सति हि गमिक्रियाप्रारम्भे यत्रोपरता गमिक्रिया तद् गतमिति परिकल्प्येत, यत्र वर्तमाना तद् गम्यमानम्, यत्राजाता तदगतमिति । यदा तु गमिक्रियाप्रारम्भ एव नास्ति, तदा–  15

**गतं किं गम्यमानं किमगतं किं विकल्प्यते ।**
**अदृश्यमान आरम्भे गमनस्यैव सर्वथा ॥ १४ ॥**  20

प्रारम्भेऽनुपलभ्यमाने किं मिथ्याध्वत्रयं परिकल्प्यते, कुतो वा तद्व्यपदेशकारणं गमनमित्ययुक्तमेतत् ॥ १४ ॥

अत्राह–विद्यत एव गमनं तत्प्रतिपक्षसद्भावात् । यस्य च प्रतिपक्षोऽस्ति, तदस्ति, आलोकान्धकारवत् पारावारवत् संशयनिश्चयवच्च । अस्ति च गमनस्य प्रतिपक्षः स्थानमिति । उच्यते । स्याद् गमनं यदि तत्प्रतिपक्षः स्थानं स्यात् । कथमिहेदं स्थानं गन्तुरगन्तुस्तदन्यस्य वा परिकल्प्येत ? सर्वथा च न युज्यत इत्याह–  25

**गन्ता न तिष्ठति तावदगन्ता नैव तिष्ठति ।**
**अन्यो गन्तुरगन्तुश्च कस्तृतीयोऽथ तिष्ठति ॥ १५ ॥**

यथा गन्ता न तिष्ठति तथोत्तरेण श्लोकेनाख्यास्यति । अगन्तापि न तिष्ठति, स हि तिष्ठत्येव, तस्य किमपरया स्थित्या प्रयोजनम् ? अगन्तापि न तिष्ठति ? स हि तिष्ठत्येव, तस्य  30  B 102

---

[1]. Mss. अगस्ति (?) for न पूर्वं which T confirms.

किमपरया स्थित्या प्रयोजनम् ? एकया स्थित्या अगन्ता अपरया तिष्ठतीति स्थितिद्वयप्रसङ्गात् स्थातृद्वयप्रसङ्ग इति पूर्ववद्दोषः । गन्त्रगन्तृरहितश्चान्यो नास्ति ॥ १५ ॥

अत्राह—नागन्ता तिष्ठति, नापि गन्तुरगन्तुश्चान्यः, किं तर्हि गन्तैव तिष्ठतीति । नैवम् । यस्मात्—

5 **गन्ता तावत्तिष्ठतीति कथमेवोपपत्स्यते ।**
**गमनेन विना गन्ता यदा नैवोपपद्यते ॥ १६ ॥**

यदायं तिष्ठतीत्युच्यते, तदा स्थितिविरोधि गमनमस्य नास्ति, विना च गमनं गन्तृव्यपदेशो नास्ति । अतो गन्ता तिष्ठतीति नोपपद्यते ॥ १६ ॥

अत्राह—विद्यत एव गमनम्, तन्निवृत्तिसद्भावात् । इह गतेर्निवर्तमानः स्थितिमारभते ।
10 गमनाभावे तु न ततो निवर्तेत । उच्यते । स्याद् गमनं यदि तन्निवृत्तिरेव स्यात् । [ न[1] त्वस्ति ] यस्मात्—

**न[2] तिष्ठति गम्यमानान्न गतान्नागतादपि ।**

तत्र गन्ता गतादध्वनो न निवर्तते गत्यभावात् । अगतादपि, गत्यभावादेव । गम्यमानादपि न निवर्तते तदनुपलब्धेः गमिक्रियाभावाच्च । तस्मान्न गतिनिवृत्तिः ॥

B 103 15 अत्राह—यदि गमनप्रतिद्वन्द्विस्थित्यभावाद्गतिरसती, एवं तर्हि गमनप्रसिद्धये स्थितिं साधयामः, तत्सिद्धौ गमनसिद्धिः । तस्माद्विद्यत एव स्थानं प्रतिद्वन्द्विसद्भावात्, स्थितेर्हि प्रतिद्वन्द्वि गमनम्, तदस्ति, ततश्च स्थितिरपि, प्रतिद्वन्द्विसद्भावात् । एतदप्ययुक्तम् । यस्मात्—

**गमनं संप्रवृत्तिश्च निवृत्तिश्च गतेः समा ॥ १७ ॥**

अत्र हि यद्गमनं स्थितिसिद्धये वर्णितं तद्गत्या समं गतिदूषणेन तुल्यमित्यर्थः । यथा
20 गन्ता न तिष्ठति तावदित्यादिना गतिप्रसिद्धये स्थितेर्हेतुत्वेनोपात्ताया दूषणमुक्तम्, एवमिहापि स्थितिप्रसिद्धये गमनस्य हेतुत्वेनोपात्तस्य स्थाता न गच्छति तावदित्यादिना श्लोकद्वय[3]पाठपरिवर्तेन दूषणं वक्तव्यमिति नास्ति गमनम्, तदभावात्प्रतिद्वन्द्विनी स्थितिरपीति । एवं तावद् गमनं गत्या तुल्यं प्रत्याख्येयम् ॥

अथ स्यात्—विद्यत एव स्थानं तदारम्भसद्भावात् । इह गत्युपमर्देन स्थानमारभ्यते,
25 कथं तन्न स्यात् ? उच्यते । संप्रवृत्तिश्च गतेः समा वाच्या । तत्र यथा पूर्वं गते नारभ्यते गन्तुमित्यादिना ( २·१२ ) गमनारम्भो निषिद्धः, एवमिहापि —

स्थिते[4] नारभ्यते स्थातुं स्थातुं नारभ्यतेऽस्थिते ।
नारभ्यते स्थीयमाने स्थातुमारभ्यते कुह ॥

---

1. Mss. om. न त्वस्ति but T supports it. २. According to T and Com. we should have न निवर्तते for न तिष्ठति, but the latter is selected probably for metrical reasons. ३. स्थाता न गच्छति तावदस्थाता नैव गच्छति । अन्यः स्थातुरस्थातुश्च कस्तृतीयोऽथ गच्छति ॥ स्थाता तावद्गच्छतीति कथमेवोपपत्स्यते । स्थानेन विना स्थाता यदा नैवोपपद्यते ॥ ४. This stanza and the following are obtained merely by पाठपरिवर्त as those in the previous note are. They are not counted as constituting part of the text of Kārikās as the Tibetan version of the *Mūla-Madhyamaka.* indicates.

इत्यादिना श्लोकत्रयपरिवर्तेन स्थानसंप्रवृत्तिरपि गतेः समा । स्थाननिवृत्तिरपि गतिनिवृत्त्या समा प्रत्याख्येया । यथा गतिनिषेधे — B 104

न[1] तिष्ठति गम्यमानान्न गतान्नागतादपि ।

इति गतेर्दूषणमुक्तम्, एवं स्थितिनिषेधेऽपि

न[1] गच्छति स्थीयमानान्न स्थितान्नास्थितादपि । 5

इति गत्या तुल्यं दूषणमिति नास्ति स्थितिः । तदभावात्कुतो गतिप्रतिपक्षस्थितिसद्भाववादिनां गतेः सिद्धिरिति ॥ १७ ॥

अपि च । यदि गमनं स्यात्, गन्तृव्यतिरेकेण वा स्यादव्यतिरेकेण वा ? सर्वथा च विचार्यमाणं न संभवतीत्याह —

**यदेव गमनं गन्ता स एवेति न युज्यते ।** 10
**अन्य एव पुनर्गन्ता गतेरिति न युज्यते ॥ १८ ॥**

कथं पुनर्न युज्यत इत्याह —

**यदेव गमनं गन्ता स एव हि भवेद्यदि ।**
**एकीभावः प्रसज्येत कर्तुः कर्मण एव च ॥ १९ ॥**

येयं गमिक्रिया, सा यदि गन्तुरव्यतिरिक्ता नान्या स्यात्, तदा कर्तुः क्रियायाश्चैकत्वं 15 स्यात् । ततश्च इयं क्रिया, अयं कर्ता, इति विशेषो न स्यात् । न च छिदिक्रियायाः छेत्तुश्च एकत्वम् । अतो यदेव गमनं स एव गन्तेति न युज्यते ॥ १९ ॥

अन्यत्वमपि गन्तृगमनयोर्यथा नास्ति तथा प्रतिपादयन्नाह — B 105

**अन्य एव पुनर्गन्ता गतेर्यदि विकल्प्यते ।**
**गमनं स्यादृते गन्तुर्गन्ता स्याद्गमनादृते ॥ २० ॥** 20

यदि हि गन्तृगमनयोरन्यत्वं स्यात्, तदा गमननिरपेक्षो गन्ता स्यात्, गन्तृनिरपेक्षं च गमनं गृह्येत पृथक् सिद्धं घटादिव पटः । न च गन्तुः पृथक्सिद्धं गमनं गृह्यत इति । अन्य एव पुनर्गन्ता गतेरिति न युज्यते इति प्रसाधितमेतत् ॥ २० ॥

तदेवम् —

**एकीभावेन वा सिद्धिर्नानाभावेन वा ययोः ।** 25
**न विद्यते, तयोः सिद्धिः कथं नु खलु विद्यते ॥ २१ ॥**

ययोर्गन्तृगमनयोर्यथोदितन्यायेन एकीभावेन वा नानाभावेन वा नास्ति सिद्धिः, तयोरिदानीं केनान्येन प्रकारेण सिद्धिरस्तु ? अत आह — तयोः सिद्धिः कथं नु खलु विद्यत इति । नास्ति गन्तृगमनयोः सिद्धिरित्यभिप्रायः ॥ २१ ॥

---

1. T seems to support न निवर्तते for न तिष्ठति and न गच्छति.

अत्राह—इह देवदत्तो गन्ता गच्छतीति लोकप्रसिद्धम्। तत्र यथा वक्ता वाचं भाषते, कर्ता क्रियां करोति, इति प्रसिद्धम्, एवं यया गत्या गन्तेत्यभिव्यज्यते तां गच्छतीति न यथोक्तदोषः। तदप्यसत्। यस्मात्—

**गत्या ययोच्यते गन्ता गतिं तां स न गच्छति।**

B 106 5 यया गत्या देवदत्तो गन्तेत्यभिव्यजते, स[1] गन्ता सन् तां तावन्न गच्छति, न प्राप्नोति, यदि वा न करोतीत्यर्थः।

**यस्मान्न गतिपूर्वोऽस्ति**

गतेः पूर्वो गतिपूर्वः। यदि गन्ता गतेः पूर्वं सिद्धः स्यात्, स तां गच्छेत्। कथम्? यस्मात्—

10 **कैश्चित्[2]किंचिद्धि गच्छति॥ २२॥**

कश्चिद्देवदत्तः किंचिदर्थान्तरभूतं ग्रामं नगरं वा गच्छतीति दृष्टम्। न चैवं यया गत्या गन्तेत्युच्यते, तस्याः पूर्वं सिद्धरूपो गतिनिरपेक्षो गन्ता नाम अस्ति यस्तां गच्छेत्॥ २२॥

अथ मन्यसे—यया गत्या गन्तेत्यभिव्यज्यते, तामेव असौ न गच्छति, किं तर्हि ततोऽन्यामिति। एतदप्यसत्। यस्मात्—

15 **गत्या ययोच्यते गन्ता ततोऽन्यां स न गच्छति।**
**गती द्वे नोपपद्येते यस्मादेके प्रगच्छति॥ २३॥**

B 107 यया गत्या गन्ता अभिव्यज्यते, ततोऽन्यामपि स गन्ता सन् न गच्छति, गतिद्वयप्रसङ्गात्। यया गत्या गन्ता अभिव्यज्यते, गन्ता सन् यां चापरां गच्छतीत्येतद् गतिद्वयं प्रसक्तम्। न च एकस्मिन् गन्तरि गतिद्वयम्। इत्ययुक्तमेतत्। एतेन वक्ता वाचं भाषते, 20 कर्ता क्रियां करोति, इति प्रत्युक्तम्[3]॥ २३॥

तदेवम्—

**सद्भूतो गमनं गन्ता त्रिप्रकारं न गच्छति।**
**नासद्भूतोऽपि गमनं त्रिप्रकारं स गच्छति॥ २४॥**
**गमनं सदसद्भूतस्त्रिप्रकारं न गच्छति।**

25 तत्र गम्यत इति गमनमिहोच्यते। तत्र सद्भूतो गन्ता यो गमिक्रियायुक्तः। असद्भूतो गन्ता यो गमिक्रियारहितः। सदसद्भूतो य उभयपक्षीयरूपः। एवं गमनमपि त्रिप्रकारं गमिक्रियासंबन्धेन वेदितव्यम्। तत्र सद्भूतो गन्ता सद्भूतमसद्भूतं सदसद्भूतं त्रिप्रकारं गमनं न गच्छति। एतच्च कर्मकारकपरीक्षायामाख्यास्यते। एवमसद्भूतोऽपि गन्ता त्रिप्रकारं गमनं न गच्छति। सदसद्भूतोऽपीति तत्रैव प्रतिपादयिष्यति। यतश्चैवं गन्तृगन्तव्यगमनानि विचार्यमाणानि 30 न सन्ति,

**तस्माद्गतिश्च गन्ता च गन्तव्यं च न विद्यते॥ २५॥**

---

१. T seems fo have : स तां न गच्छति न प्राप्नोति for स गन्ता सन्... प्राप्नोति. २. Mss. कंचित् for कश्चित्. ३. Paris Ms. प्रयुक्तम्; C प्रत्ययुक्तम् for प्रत्युक्तम् which is supported by T.

यथोक्तमार्याक्षयमतिनिर्देशसूत्रे— B 108

अगतिरिति भदन्त शारद्वतीपुत्र संकर्षणपदमेतत्। गतिरिति भदन्त शारद्वतीपुत्र निष्कर्षणपदमेतत्। यत्र न संकर्षणपदं न निष्कर्षणपदं तदार्याणां पदम्। अपदयोगेन अनागतिरगतिश्चार्याणां गतिरिति॥

यदि बीजमेवाङ्कुरे संक्रमति, बीजमेव तत्स्यान्न यदङ्कुरः शाश्वतदोषप्रसङ्गश्च। 5 अथाङ्कुरोऽन्यत आगच्छति, अहेतुकदोषप्रसङ्गः स्यात्। न चाहेतुकस्योत्पत्तिः खरविषाणस्येव॥

अत एवाह भगवान्—

बीजस्य सतो यथाङ्कुरो न च यो बीजु स चैव अङ्कुरो।
न च अन्यु ततो न चैव तदेवमनुच्छेद अशाश्वत धर्मता॥ इति॥
मुद्रात्प्रतिमुद्र दृश्यते मुद्रसंक्रान्ति न चोपलभ्यते। 10
न च तत्र न चैव सान्यतो एवं संस्कारनुच्छेदशाश्वताः॥ इति च॥

[ललितविस्तर—१३·१०२, १०४]

तथा—

आदर्शपृष्ठे तथ तैलपात्रे निरीक्षते नारिमुखं अलंकृतम्।
सो तत्र रागं जनयित्व बालो[1] प्रधावितो कामि गवेषमाणो॥ 15 B 109
मुखस्य संक्रान्ति यदा न विद्यते बिम्बे मुखं नैव कदाचि लभ्यते।
मूढो[2] यथा सो जनयेत रागं तथोपमान् जानथ सर्वधर्मान्॥

[समाधिराजसूत्र—९·९–१०]

तथा [ आर्यसमाधिराजसूत्रेऽपि ]—

तहि कालि सो दशबलो अनघो
जिनु भाषते इमु समाधिवरम्। 20
सुपिनोपमा भवगती सकला
न हि कश्चि जायति न चो म्रियते॥
न च सत्त्वु लभ्यति न जीवु नरो
इमि धर्म फेनकदलीसदृशाः।
मायोपमा गगनविद्युसमा 25
दकचन्द्रसंनिभ मरीचिसमाः॥
न च अस्मि लोकि मृतु कश्चि नरो B 110
परलोक संक्रमति गच्छति वा।
न च कर्म नश्यति कदाचि कृतं
फलु[3] देति कृष्ण शुभ संसरतो॥

१ Mss. बाला for बालो. २ T मूढा यथैते जनयन्ति रागं for मूढो यथा सो जनयेत रागं. ३ Mss. फल देन्ति; T फलविपाक for फलु देति.

न च शाश्वतं न च उच्छेद पुनो[1]
न च कर्मसंचयु न चापि स्थितिः ।
न च सोऽपि कृत्व पुनरास्पृशति
न च अन्यु कृत्व पुन वेदयते ॥
5 न च संक्रमो न च पुनागमनं
न च सर्वमस्ति न च नास्ति पुनः ।
न च दृष्टे[2] स्थानगतिशुद्धिरिहो[3]
न च सत्त्वचार[4] सुपशान्तगति ॥
B 111 सुपिनोपमं हि त्रिभवं वशिकं
10 लघु[5] भग्नमनित्येन मायसमम् ।
न च आगतं न च इहोपगतं
शून्यानिमित्त सद संततियो ॥
अनुत्पाद शान्त अनिमित्तपदं
सुगतान गोचर जिनान गुणा ।
15 बल धारणी दशबलान बलं
बुद्धान इयं वृषभिता परमा ॥
B 112 वरशुक्लधर्मगुणसंनिचयो
गुणज्ञानधारणिबलं परमम् ।
ऋद्धीविकुर्वणविधिः परमो
वरपञ्चभिज्ञप्रतिलाभनयैः[6] ॥

[समाधिराजसूत्र - २९.१३-१९]

इति विस्तरः ॥

20 इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
गतागतपरीक्षा नाम द्वितीयं प्रकरणम् ॥

---

१ T om. पुनो. २ P दृष्टिस्थान° for दृष्ट स्थान°. ३ P इह for इहो or इहा of Mss. ४ Mss. चोरु; T न सत्त्वविचार प्रशान्तिगतिः. ५ T लघु भङ्गुरमनित्यं मायसमं for the line. ६ The variants in the printed text of समाधिराज are not noted.

## चक्षुरादीन्द्रियपरीक्षा तृतीयं प्रकरणम् ।

अत्राह—यद्यपि गतिश्च गन्ता च गन्तव्यं च न विद्यते, तथापि प्रवचनसिद्ध्यपेक्षया B 113
द्रष्टृद्रष्टव्यदर्शनादीनामस्तित्वमास्थेयम् । तथा चाभिधर्मे उच्यते ।

**दर्शनं श्रवणं घ्राणं रसनं स्पर्शनं मनः ।**
**इन्द्रियाणि षडेतेषां द्रष्टव्यादीनि गोचरः ॥ १ ॥**

तस्मात्सन्ति दर्शनादीनि स्वभावत इति । उच्यते । न सन्ति । इह हि पश्यतीति दर्शनं 5
चक्षुः, तस्य च रूपं विषयत्वेनोपदिश्यते ॥ १ ॥

यथा दर्शनं रूपं न पश्यति तथा प्रतिपादयन्नाह—

**स्वंमात्मानं दर्शनं हि तत्तमेव न पश्यति ।**
**न पश्यति यदात्मानं कथं द्रक्ष्यति तत्परान् ॥ २ ॥**

तत्र तदेव दर्शनं स्वात्मानं न पश्यति स्वात्मनि क्रियाविरोधात् । ततश्च स्वात्मादर्शना- 10 B114
च्छ्रोत्रादिवन्नीलादिकं न पश्यति । तस्मान्नास्ति दर्शनम् ॥ २ ॥

यद्यपि स्वात्मानं दर्शनं न पश्यति, तथाप्यग्निवत् परान् द्रक्ष्यति । तथा हि अग्निः
परात्मानमेव दहति न स्वात्मानम्, एवं दर्शनं परानेव द्रक्ष्यति न स्वात्मानमिति । एतदत्ययुक्तम् ।
यस्मात्—

**न पर्याप्तोऽग्निदृष्टान्तो दर्शनस्य प्रसिद्धये ।**

योऽयमग्निदृष्टान्तो दर्शनस्य प्रसिद्धये भवतोपन्यस्तः, स न पर्याप्तो नालं न समर्थो न 15
युज्यत इत्यर्थः । यस्मात्—

**सदर्शनः स प्रत्युक्तो गम्यमानगतागतैः ॥ ३ ॥**

सह दर्शनेन वर्तत इति सदर्शनः । योऽयमग्निदृष्टान्तो दर्शनप्रसिद्धये भवतोपन्यस्तः, सोऽपि
सह दर्शनेन दार्ष्टान्तिकार्थेन प्रत्युक्तो दूषितः । केन पुनरित्याह—गम्यमानगतागतैः । यथा गतं
न गम्यते नागतं न गम्यमानम्, एवमग्निनापि दग्धं न दह्यते नादग्धं दह्यत इत्यादिना समं 20
वाच्यम् । यथा च न गतं नागतं न गम्यमानं गम्यते, एवम्—

न[३] दृष्टं दृश्यते तावददृष्टं नैव दृश्यते ।
दृष्टादृष्टविनिर्मुक्तं दृश्यमानं न दृश्यते ॥

इत्यादि वाच्यम् ॥ ३ ॥

यथा च गन्ता न गच्छति तावदित्याद्युक्तम्, एवं न[४] दग्धा दहति तावदित्यादि वाच्यम् । 25 B 115
एवं न द्रष्टा पश्यति तावदित्यादिना अग्निदृष्टान्तेन सह गम्यमानगतागतैर्यस्मात्समं दूषणम्, अतोऽ-

---

१. T इह चक्षुर्दर्शनात् पश्यतीति for इह...पश्यतीति. २. Mss. स्व आत्मानं...तत्तेमेव न पश्यति for the first half; Rajendra Lal Mitra reads तत्त्वमेव for तत्तमेव. ३. This stanza is not to be confounded as a Kārikā of our text, as it is not rendered in T in the *Mūla-Madhyamaka*. ४. Mss. न दग्धं दह्यते तावत्...एवं न दर्शनं पश्यते तावत् for न दग्धा... पश्यति तावत् which reading is contirmed by T.

ग्निवद् दर्शनसिद्धिरिति न युज्यते। ततश्च सिद्धमेतत् – स्वात्मवद् दर्शनं परानपि न पश्यतीति॥ ३॥

यदैवं तदा –

**नापश्यमानं भवति यदा किंचन दर्शनम्।**
**दर्शनं पश्यतीत्येवं कथमेतत्तु युज्यते॥ ४॥**

5 यदा चैवमपश्यन्न किंचिद्दर्शनं भवति, तदानीमपश्यतो दर्शनात्वायोगात् स्तम्भादिवत् पश्यतीति दर्शनमिति व्यपदेशो न युज्यते। यद्यपि दर्शनशब्दादनन्तरं श्लोकबन्धानुरोधेन दर्शनं पश्यतीति पाठः, तथापि व्याख्यानकाले पश्यतीति दर्शनमित्येवं कथमेतत्तु युज्यते इति पठितव्यम्॥ ४॥

किं चान्यत्–इह पश्यतीति दर्शनमित्युच्यमाने दर्शनक्रियया दर्शनस्वभावस्य वा 10 चक्षुषः संबन्धः परिकल्प्येत, अदर्शनस्वभावस्य वा ? उभयथा च न युज्यते इत्याह –

**पश्यति दर्शनं नैव नैव पश्यत्यदर्शनम्।**

दर्शनस्वभावस्य तावद् दृशिक्रियायुक्तस्य भूयः पश्यतीत्यादिना संबन्धो नोपपद्यते दृशिक्रियाद्वयप्रसङ्गात् दर्शनद्वयप्रसङ्गाच्च। अदर्शनमपि न पश्यति दर्शनक्रियारहितत्वादङ्गुल्यग्रवदित्याभिप्रायः। यदा

B 116 15 पश्यति दर्शनं नैव नैव पश्यत्यदर्शनम्।

तदा

दर्शनं पश्यतीत्येवं कथमेतत्तु युज्यते॥

इत्यनेनैव संबन्धः॥

ये तु मन्यन्ते – निर्व्यापारं हीदं धर्ममात्रमुत्पद्यमानमुत्पद्यते इति, नैव किंचित् 20 कश्चिद्विषयं पश्यति क्रियाया अभावात्, तस्माद्दर्शनं न पश्यतीति सिद्धमेतत्प्रसाध्यत इति। अत्रोच्यते। यदि क्रिया व्यवहाराङ्गभूता न स्यात्, तदा धर्ममात्रमपि न स्यात्, क्रियाविरहितत्वात् खपुष्पवदिति कुतः क्रियारहितं धर्ममात्रं भविष्यति ? तस्माद्यदि व्यवहारसत्यं धर्ममात्रवत्, क्रियाप्यभ्युपगम्यताम्। अथ तत्त्वचिन्ता, तदा क्रियावद् धर्ममात्रमपि नास्तीति भवताभ्युपगम्यताम्। यथोक्तं शतके –

25 क्रियावान् शाश्वतो नास्ति नास्ति सर्वगते क्रिया।
निष्क्रियो नास्तिना[1] तुल्यो नैरात्म्यं किं न ते प्रियम्॥ इति।

(चतुःशतक–१०.१७)

तस्मान्नायं विधिर्बाधकः परस्य, नाप्यस्माकं सिद्धसाधनदोषः॥

B 117 अत्राह–नैव हि पश्यतीति दर्शनमिति कर्तृसाधनमभ्युपगम्यते, किं तर्हि पश्यत्यनेनेति दर्शनमिति करणसाधनम्, ततश्च उक्तदोषाप्रसङ्गः। यश्चानेन दर्शनेन करणभूतेन पश्यति, स द्रष्टा, एष च विद्यते विज्ञानमात्मा वा, कर्तृसद्भावाच्च दर्शनमपि सिद्धमिति। उच्यते –

**व्याख्यातो दर्शनेनैव द्रष्टा चाप्युपगम्यताम्॥ ५॥**

---

1. P नास्तितातुल्यो on the strength of T, though there is no need for emendation.

यथा स्वमात्मानं दर्शनं हीत्यादिना दूषणमुक्तम्, एवं द्रष्टुरपि दर्शनवद्दूषणं वेदितव्यम्। तद्यथा –

स्वमात्मानं नैव द्रष्टा दर्शनेन विपश्यति।
न पश्यति यदात्मानं कथं द्रक्ष्यति तत्परान्॥

इत्यादि वाच्यम्। तस्माद्दर्शनवद् द्रष्टापि नास्तीति सिद्धम्॥ ५॥ 5

अत्राह–विद्यत एव द्रष्टा तत्कर्मकरणसद्भावात्। इह यन्नास्ति इति, न तस्य कर्मकरणे विद्येते तद्यथा वन्ध्यासूनोः। अस्ति च द्रष्टुः करणं दर्शनं द्रष्टव्यं च कर्म। तस्माच्छेत्तृवद्विद्यमान-कर्मकरणो विद्यत एव द्रष्टेति। उच्यते। नैव हि द्रष्टव्यदर्शने विद्येते, तत्कुतो द्रष्टा स्यात्? द्रष्टृसापेक्षे हि द्रष्टव्यदर्शने। स च निरूप्यमाणः–

**तिरस्कृत्य द्रष्टा नास्त्यतिरस्कृत्य च दर्शनम्।** 10

इह द्रष्टा नाम यदि कश्चित्स्यात्, स दर्शनसापेक्षो वा स्यान्निरपेक्षो वा। तत्र यदि दर्शनसापेक्षोऽतिरस्कृत्य दर्शनमिष्यते, तदा सिद्धस्य वा दर्शनापेक्षा स्यादसिद्धस्य वा। तत्र सिद्धो द्रष्टा न हि दर्शनमपेक्षते। किं सिद्धस्य सतो द्रष्टुः पुनर्दर्शनापेक्षा कुर्यात्? न हि सिद्धं पुनरपि साध्यत इति। अथासिद्धोऽपेक्षेत, असिद्धत्वाद्वन्ध्यासुतवद्दर्शनं नापेक्षते। एवं तावदतिरस्कृत्य दर्शनमपेक्ष्य द्रष्टा नास्ति। तिरस्कृत्यापि, दर्शननिरपेक्षत्वात् इत्युक्तं प्राक्। 15 तदेवं तिरस्कृत्यातिरस्कृत्य वा दर्शनं यदा द्रष्टा नास्ति, तदा –

**द्रष्टव्यं दर्शनं चैव द्रष्टर्यसति ते कुतः॥ ६॥**

द्रष्टर्यसति निर्हेतुके द्रष्टव्यदर्शने न संभवतः इति कुतस्तत्सद्भावाद् द्रष्टा प्रसेत्स्यति?

अत्राह – विद्येते एव द्रष्टव्यदर्शने, तत्कार्यसद्भावात्। तत्र–

**प्रतीत्य मातापितरौ यथोक्तः पुत्रसंभवः।** 20
**चक्षूरूपे प्रतीत्यैवमुक्तो विज्ञानसंभवः॥ ७॥**

इति द्रष्टव्यं दर्शनं च प्रतीत्य विज्ञानमुत्पद्यते। त्रयाणां संनिपातात्सास्रवस्पर्शः, स्पर्श-सहजा वेदना, तत्प्रत्यया तृष्णेति। एवं चत्वार्यपि भवाङ्गानि द्रष्टव्यदर्शनहेतुकानि विद्यन्ते। तस्मात्कार्यसद्भावाद् द्रष्टव्यदर्शने विद्येते इति॥ ७॥

उच्यते – स्यातामेते, यदि विज्ञानादिचतुष्टयमेव स्यात्। यस्मात्– 25

**द्रष्टव्यदर्शनाभावाद्विज्ञानादिचतुष्टयम्।**
**नास्तीति**

इह द्रष्टुरभावाद् द्रष्टव्यदर्शने अपि न स्त इत्युक्तम्। अतः कुतो विज्ञानादिचतुष्टयं विज्ञानस्पर्शवेदनातृष्णाख्यम्? तस्मान्न सन्ति विज्ञानादीनि॥

अत्राह – सन्त्येवैतानि तत्कार्यसद्भावात्। इह तृष्णाप्रत्ययमुपादानमित्यादिना उपादानभव-जातिजरामरणादिकं विज्ञानादिचतुष्टयादुत्पद्यते; तस्मात्सन्ति विज्ञानादीनि तत्कार्यसद्भावात्।

B 118 B 119

उच्यते । स्युरुपादानादीनि यदि विज्ञानादिचतुष्टयमेव स्यात् । यदा तु द्रष्टव्यदर्शनाभावाद्विज्ञानादिचतुष्टयं नैवास्ति, तदा—

**उपादानादीनि भविष्यन्ति पुनः कथम् ॥ ८ ॥**

न सन्त्युपादानादीनीत्यर्थः ॥ ८ ॥

इदानीं दर्शनवच्छेषायतनव्याख्यानातिदेशार्थमाह—

B 120

**व्याख्यातं श्रवणं घ्राणं रसनं स्पर्शनं मनः ।**
**दर्शनेनैव जानीयाच्छ्रोतृश्रोतव्यकादि च ॥ ९ ॥**

इति ॥

उक्तं हि भगवता—

न चक्षुः प्रेक्षते रूपं मनो धर्मान्न वेत्ति च ।
एतत्त परमं सत्यं यत्र लोको न गाहते ॥
सामग्र्या दर्शनं यत्र प्रकाशयति नायकः ।
प्राहोपचारभूमिं तां परमार्थस्य बुद्धिमान् ॥ इति ॥

तथा—

चक्षुश्च प्रतीत्य रूपतः[1] चक्षुविज्ञानमिहोपजायते ।
नो चक्षुषि रूप निश्रितं रूपसंक्रान्ति न चैव चक्षुषि ॥
नैरात्म्यऽशुभाश्च[2] धर्मिमे तेष्वात्मेति शुभाश्च कल्पिताः ।
विपरीतमसद्विकल्पितं चक्षुविज्ञान ततोऽपि जायते ॥
विज्ञाननिरोधसंभवं[3] विज्ञानउपादव्ययं विपश्यति ।
B 121
न कहिंचि गतं न चागतं शून्य मायोपम योगि पश्यति ॥

[ललितविस्तर–१३.१०५–१०७]

तथाचार्योपालिपृच्छायाम्—

सर्वं सयोगिं[4] तु पश्यति चक्षुस्तेत्र न पश्यति प्रत्ययहीनम् ।
नैव च चक्षु प्रपश्यति रूपं तेन सयोगवियोगविकल्पः ॥
आलोकसमाश्रित पश्यति चक्षू रूप मनोरमचित्रविशिष्टम् ।
येन च योगसमाश्रितचक्षुस्तेन न पश्यति चक्षु कदाचि ॥
B 122
योऽपि च श्रूयति शब्दु मनोज्ञः सोऽपि च नान्तरि जातु प्रविष्टः ।
संक्रमणं न च लभ्यति तस्य कल्पवशात्तु समुच्छ्रितु[6] शब्दः ॥ इति ॥

---

१. T रूपं च for रूपतः. २ Mss. नैरात्म्यस्वभावाश्च धर्मि ये धर्मि एतेषु रात्मेति. Our text is based on T. ३. T °संभवात् for °संभवं. ४. Mss. °संयोगे for °सयोगि. Our text is based on this very quotation in XIV. ५. T seems to read : यान्यपि रूपाणि चक्षुषा दृश्यन्ते, रात्रौ प्रत्ययानामभावे न दृश्यन्ते. ६ T शब्दानामुत्पादः for समुच्छ्रितु शब्दः.

तथा –

गीतं न नृत्यमपि वाद्यरुतं न ग्राह्यं
स्वप्नोपमा हि रतयोऽबुधमोहनाश्च[1] ।
संकल्पलालस गता अबुधाऽत्र नाशं
किं क्लेशदास इव बालजनो भवामि ॥ इति ॥ 5

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
चक्षुरादीन्द्रियपरीक्षा नाम तृतीयं प्रकरणम् ॥

१ T मोहनस्य रतेश्च हेतुः for रतयोऽबुधमोहनाश्च.

## स्कन्धपरीक्षा चतुर्थं प्रकरणम् ।

B 123 अत्राह — यद्येवं चक्षुरादीनीन्द्रियाणि न सन्ति, न स्कन्धाः, अप्रतिषेधात् । तदन्तर्गतानि चेन्द्रियाणि, अतस्तान्यपि भविष्यन्तीति । उच्यते । स्युरेव, यदि स्कन्धाः स्युः । तत्र रूपस्कन्धमधिकृत्याह —

**रूपकारणनिर्मुक्तं न रूपमुपलभ्यते ।**
5 **रूपेणापि न निर्मुक्तं दृश्यते रूपकारणम् ॥ १ ॥**

तत्र रूपं भौतिकम् । तस्य कारणं चत्वारि महाभूतानि । तद्व्यतिरिक्तं पृथग्भूतं रूपं रूपशब्दगन्धरसस्प्रष्टव्याख्यं नोपलभ्यते घटादिव पटः । रूपेणापि न निर्मुक्तं रूपात्पृथग्भूतं रूपकारणमुपलभ्यते ॥ १ ॥

तदेतत्प्रतिज्ञाद्वयं प्रसाधयितुकाम आह —

10 **रूपकारणनिर्मुक्ते रूपे रूपं प्रसज्यते ।**
**आहेतुकं, न चास्त्यर्थः कश्चिदाहेतुकः क्वचित् ॥ २ ॥**

B 124 यथा घटादर्थान्तरभूतः पटो न घटहेतुकः, एवं रूपकारणचतुर्महाभूतव्यतिरिक्तं भौतिकं रूपमिष्यमाणं न भूतहेतुकं स्यात् । न चास्त्यर्थः कश्चिदाहेतुकः क्वचित् । तस्मादहेतुकत्व-दोषप्रसङ्गान्न रूपकारणनिर्मुक्तं रूपमभ्युपेतव्यमिति ॥ २ ॥

15 इदानीं रूपेणापि विनिर्मुक्तं यथा रूपकारणं नास्ति, तथा प्रतिपादयन्नाह —

**रूपेण तु विनिर्मुक्तं यदि स्याद्रूपकारणम् ।**

यदि कार्यरूपविनिर्मुक्तं रूपकारणं स्यात्, तदा, यथा घटात्कुण्डं पृथक्सिद्धं घटहेतुकं न भवति, एवं कार्यात्पृथग्भूतं कारणमिष्यमाणम् —

**अकार्यकं कारणं स्यात्**

20 निर्हेतुकं स्यात् । कारणस्य हि कारणत्वे कार्यप्रवृत्तिर्हेतुः, कार्यनिरपेक्षाच्च कारणात् पृथक्सिद्धा नास्ति कार्यप्रवृत्तिः । यच्चाकार्यकं कारणं तन्निर्हेतुकत्वान्नरोरगतुरगविषाणवन्नास्त्येवेत्याह —

**नास्त्यकार्यं च कारणम् ॥ ३ ॥**

इति ॥ ३ ॥

अथ चेदं रूपस्य कारणमिष्यमाणं सति वा रूपे कारणत्वेनेष्यतेऽसति वा ? उभयथा च
25 नोपपद्यत इत्याह —

**रूपे सत्येव रूपस्य कारणं नोपपद्यते ।**
**रूपेऽसत्येव रूपस्य कारणं नोपपद्यते ॥ ४ ॥**

B 125 सति वा संविद्यमाने रूपे किं रूपकारणेन प्रयोजनम् ? असति असंविद्यमाने रूपे किं रूपकारणेन प्रयोजनम्, कस्य वा तत्कारणं परिकल्प्यते ? तस्मादसत्यपि रूपे रूपकारणं नोपपद्यते ॥ ४ ॥

अथ स्यात्—यद्यपि एवं रूपकारणं न संभवति, तथापि कार्यं रूपं संविद्यते, तत्सद्भावात् कारणमपि भविष्यतीति । स्यादेवम्, यदि कार्यं रूपं स्यात् । न त्वस्ति । यस्मात्—

**निष्कारणं[1] पुना रूपं नैव नैवोपपद्यते ।**

रूपकारणं यथा नास्ति तथोक्तम् । असति कारणे कुतो निर्हेतुकं कार्यं रूपं भवेत् ? नैव नैवेत्यनेन सावधारणेन प्रतिषेधद्वयेन अहेतुकत्वादस्यात्यनिष्ठतां दर्शयति । यतश्चैवं रूपं 5 सर्वथा विचार्यमाणं न संभवति,

**तस्मात्**

तत्त्वदर्शी योगी

**रूपगतान् कांश्चिन्न विकल्पान् विकल्पयेत् ॥ ५ ॥**

सप्रतिघाप्रतिघसनिदर्शनानिदर्शनातीतानागतनीलपीतादिविकल्पान् रूपालम्बनान्न कांश्चि- 10 त्परिकल्पयितुमर्हतीत्यर्थः ॥ ५ ॥

अपि च । इदं रूपकारणमिष्यमाणं सदृशं कार्यं निष्पादयेदसदृशं वा ? उभयथा च नोपपद्यते इत्याह—

**न कारणस्य सदृशं कार्यमित्युपपद्यते ।**
**न कारणस्यासदृशं कार्यमित्युपपद्यते ॥ ६ ॥** 15

तत्र रूपकारणं कठिनद्रवोष्णतरलस्वभावम् । भौतिकं तु चक्षुराध्यात्मिकं पञ्चचक्षु- B 126 र्विज्ञानाद्याश्रयकरूपप्रसादात्मकम् । बाह्यं तु रूपाद्यायतनादिकं चक्षुर्विज्ञानादिग्राह्यलक्षणं न-महाभूतस्वभावमिति । अतो भिन्नलक्षणत्वान्निर्वाणवत्कार्यकारणयोः सादृश्यमेव नास्तीति

न कारणस्य सदृशं कार्यमित्युपपद्यते ।

न चापि सदृशानां शालिबीजादीनां परस्परकार्यकारणभावो दृष्टः, इत्यतः 20

न कारणस्य सदृशं कार्यमित्युपपद्यते ।

तथापि

न कारणस्यासदृशं कार्यमित्युपपद्यते ।

भिन्नलक्षणत्वान्निर्वाणवदेवेत्यभिप्रायः ॥ ६ ॥

यथा चेदं रूपं विचार्यमाणं सर्वथा नोपपद्यते, एवं वेदनादयोऽपि, इत्यतिदिशन्नाह— 25

**वेदनाचित्तसंज्ञानां संस्काराणां च सर्वशः ।**
**सर्वेषामेव भावानां रूपेणैव समः क्रमः ॥ ७ ॥**

वेदनादिकमपि सर्वं रूपविचारेणैव समं योज्यम् । यथैव ह्येकस्य धर्मस्य शून्यता B 127 प्रतिपादयितुमिष्टा माध्यमिकेन, तथैव सर्वधर्माणामपीति ॥ ७ ॥

अतः—

**विग्रहे यः परीहारं कृते शून्यतया वदेत् ।**
**सर्वं तस्यापरिहृतं समं साध्येन जायते ॥ ८ ॥**

१. T. suggests निष्कारणानि रूपाणि for निष्कारणं पुना रूपं.

तत्र परपक्षदूषणं विग्रहः। शून्यतया करणभूतया रूपं निःस्वभावमित्येवं सस्वभाववादे प्रतिषिद्धे, यदि परः परिहारं ब्रूयात् — वेदनादयस्तावत्सन्ति, तद्वद्रूपमप्यस्तीति, तदेतत्सर्वं तस्यापरिहृतं भवति। यस्माद्वेदनादीनामपि सद्भावः साध्येन रूपसद्भावेन समो वेदितव्यः। यथा रूपं स्वकारणात्तत्त्वान्यत्वेन विचार्यमाणमसत्, एवं स्पर्शप्रत्यया वेदना, विज्ञानसहजा संज्ञा, 5 अविद्याप्रत्ययाः संस्काराः, संस्कारप्रत्ययं च विज्ञानं स्वकारणात्स्पर्शादेः तत्त्वान्यत्वादिना विचार्यमाणं नास्तीति सर्वमेतत्साध्यसमं भवति। यथा वेदनादयः साध्यसमाः, एवं लक्ष्यलक्षण-कार्यकारणावयव्यवयवादयोऽपि सर्वे एव पदार्थाः रूपेण साध्येन समा इति कुतः परस्य परीहारः संभवेत्? सर्वं वचनमस्य साध्यसमं भवतीति सर्वत्र शास्त्रे परीहारेण साध्यसमत्वं माध्यमिकेनाग्राहणीयमित्याचार्यः शिक्षयति॥ ८॥

10 यथा च परपक्षदूषणे विहितोऽयं विधिः, एवं व्याख्यानकालेऽपीत्याह —

**व्याख्याने य उपालम्भं कृते शून्यतया वदेत्।**
**सर्वं तस्यानुपालब्धं समं साध्येन जायते॥ ९॥**

B 128 व्याख्यानकालेऽपि यः शिष्यदेशीयश्चोद्यमुपालम्भं कुर्यात्, तस्यापि तच्चोद्यमुपालम्भाख्यं पूर्ववत्साध्यसमं वेदितव्यम्। यथोक्तम् —

15 भावस्यैकस्य यो द्रष्टा द्रष्टा सर्वस्य स स्मृतः।
एकस्य शून्यता यैव सैव सर्वस्य शून्यता॥ इति।

[चतुःशतक ?]

आर्यगगनगञ्जसमाधिसूत्रेऽपि —

एकेन धर्मेण तु सर्वधर्मान्
अनुगच्छते मायमरीचिसादृशान्।
20 अग्राह्यतुच्छानलिकानशाश्वतान्
सो बोधिमण्डं नचिरेण गच्छति॥ इति॥

समाधिराजसूत्रेऽपि —

यथ ज्ञात तयात्मसंज्ञ[1] तथैव सर्वत्र पेषिता बुद्धिः।
सर्वे च तत्स्वभावा धर्म विशुद्धा गगनकल्पाः॥

[समाधिराजसूत्र — १२·७]

25 एकेन सर्वं जानाति सर्वमेकेन पश्यति।
कियद्बहु पि भावेत्वा न तस्योत्पद्यते मदः॥ इति।

[समाधिराजसूत्र — ११·४]

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां[2] मध्यमकवृत्तौ
स्कन्धपरीक्षा नाम चतुर्थं प्रकरणम्॥

---

१ Mss. त्वया आत्मसंज्ञा for तयात्मसंज्ञ; Text यथ ज्ञात्वात्मसंज्ञाः. २ Mss. भावयित्वा न तस्योपपद्यते दमः for भावेत्वा...मदः. Our text is supported by T. Text बहुं पि भाषित्वा.

## धातुपरीक्षा पञ्चमं प्रकरणम्।

अत्राह—धातवः सन्ति प्रतिषेधाभावात्। उक्तं च भगवता—षड्धातुरयं महाराज पुरुषपुद्गल इत्यादि। ततश्च प्रवचनपाठाद्धातुवत्स्कन्धायतनान्येव सन्तीति। उच्यते। स्युः स्कन्धायतनानि यदि धातव एव स्युः। कथमित्याह— B 129

**नाकाशं विद्यते किंचित्पूर्वमाकाशलक्षणात्।**
**अलक्षणं प्रसज्येत स्यात्पूर्वं यदि लक्षणात्॥ १॥** 5

तत्र षड् धातव उक्ताः पृथिव्यप्तेजोवाय्वाकाशविज्ञानाख्याः। तत्राकाशमधिकृत्योच्यते दूषणं स्वरूपनिरूपणात्। इहाकाशस्यानावरणं लक्षणमुच्यते। यद् यस्मात्पूर्वमाकाशमनावरण-लक्षणाल्लक्ष्यं स्यात्, तत्रै लक्षणप्रवर्तनादनावरणलक्षणात्पूर्वं नाकाशं लक्ष्यरूपमिति। यदा चैवम्—

नाकाशं विद्यते किंचित्पूर्वमाकाशलक्षणात्। 10
अलक्षणं प्रसज्येत स्यात्पूर्वं यदि लक्षणात्॥

तथाहि अलक्षणं प्रवर्तताम्। तदभावे खपुष्पवन्नास्त्याकाशमित्याह—

**अलक्षणो न कश्चिच्च भावः संविद्यते क्वचित्।**

इति। अत्राह—लक्षणप्रवृत्तिर्लक्ष्ये भवेत्, तत्सद्भावाल्लक्ष्यमप्यस्तीति। एतदपि नास्ति। यस्मात्— B 130

**असत्यलक्षणे भावे क्रमतां कुह लक्षणम्॥ २॥** 15

लक्षणात्पूर्वमलक्षणो भावो नास्तीत्युक्तम्। ततश्च असति असंविद्यमाने अलक्षणे लक्षणरहिते भावे कुह इदानीं लक्षणं प्रवर्ततामिति नास्ति लक्षणप्रवृत्तिः॥ २॥

अपि च। इदं लक्षणं प्रवर्तमानं सलक्षणे वा प्रवर्तेत अलक्षणे वा? उभयथा च नोपपद्यत इत्याह—

**नालक्षणे लक्षणस्य प्रवृत्तिर्न सलक्षणे।** 20
**सलक्षणालक्षणाभ्यां नाप्यन्यत्र प्रवर्तते॥ ३॥**

तत्र अलक्षणे खरविषाणवन्न लक्षणप्रवृत्तिः। सलक्षणेऽपि भावे न लक्षणप्रवृत्ति-रुपपद्यते प्रयोजनाभावात्। किं हि लक्षणवतः प्रसिद्धस्य भावस्य पुनर्लक्षणकृत्यं स्यात्? इत्यनवस्था [1]अतिप्रसङ्गश्चैवं स्यात्। न ह्यसौ कदाचिन्न सलक्षणः स्यादिति सदैव लक्षणप्रवृत्तिः प्रसज्येत। न चैतदिष्टम्। तस्मात्सलक्षणेऽपि भावे न लक्षणप्रवृत्तिरुपपद्यते प्रयोजनाभावात्। 25 तत्रैवं स्यात्—सलक्षणालक्षणाभ्यामन्यत्र प्रवर्तिष्यत इति। उच्यते—

सलक्षणालक्षणाभ्यां नाप्यन्यत्र प्रवर्तते।

किं कारणम्? असद्भावात्। यदि सलक्षणो नालक्षणः, अथालक्षणो न सलक्षणः। अतः सलक्षणश्च अलक्षणश्चेति विप्रतिषिद्धमेतत्। न च विप्रतिषिद्धं संभवति। तस्मादसंभवा-देव सलक्षणे चालक्षणे च लक्षणप्रवृत्तिर्नोपपद्यते इति॥ ३॥ B 131

---

[1] T एवमनवस्थाप्रसङ्गोऽपि स्यात् for अति...स्यात्.

अथापि स्यात्—यद्यपि न लक्षणप्रवृत्तिः, तथापि लक्ष्यमस्तीति । एतदपि नास्ति । यस्मात्—

**लक्षणासंप्रवृत्तौ च न लक्ष्यमुपपद्यते ।**

यदा लक्षणप्रवृत्तिरेव नास्ति तदा कथं लक्ष्यं स्यात् ? नैव संभवतीत्यभिप्रायः ।

5 अत्राह—लक्षणप्रवृत्तिस्त्वया निषिद्धा न तु लक्षणम्, ततश्च विद्यते लक्ष्यम्, लक्षणसद्भावात् । उच्यते—

**लक्ष्यस्यानुपपत्तौ च लक्षणस्याप्यसंभवः ॥ ४ ॥**

लक्षणासंप्रवृत्तौ च न लक्ष्यमुपपद्यते इति प्रतिपादितम् । तदा

लक्ष्यस्यानुपपत्तौ च लक्षणस्याप्यसंभवः ।

10 निराश्रयत्वात् ॥ ४ ॥

यदा चैवं लक्षणं नास्ति, तदा लक्षणसद्भावाद्विद्यते लक्ष्यमिति यदुक्तं तन्न । यतश्चैतदेवम्—

**तस्मान्न विद्यते लक्ष्यं लक्षणं नैव विद्यते ।**

इति निगमनम् ॥

15 अत्राह—यद्यपि लक्ष्यलक्षणे न स्तः, तथा(प्या)काशमस्ति, भावरूपं च भवदाकाशं लक्ष्यं लक्षणं वा स्यात् । तस्माल्लक्ष्यलक्षणे अपि स्त इति । एतदप्ययुक्तमित्याह—

B 132 **लक्ष्यलक्षणनिर्मुक्तो नैव भावोऽपि विद्यते ॥ ५ ॥**

लक्ष्यलक्षणे यथा न स्तः, तथोक्तं प्राक् । यदा अनयोरभावः, तदा लक्ष्यलक्षणरहितत्वादाकाशकुसुमवन्नास्त्याकाशम् ॥ ५ ॥

20 यद्याकाशं भावो न भवति, अभावस्तर्हि अस्तु ? एतदपि नास्ति । यस्मात्—

**अविद्यमाने भावे च कस्याभावो भविष्यति ।**

यदा आकाशं भावो न भवति, तदा भावस्यासत्त्वे कस्याभावः कल्प्यताम् ? वक्ष्यति हि—

भावस्य चेदप्रसिद्धिरभावो नैव सिध्यति ।

भावस्य ह्यन्यथाभावमभावं ब्रुवते जनाः ॥ इति ।

[म० शा० – १५.५]

25 तस्माद् भावाभावादभावोऽप्याकाशं न संभवति । रूपाभावश्चाकाशमिति व्यवस्थाप्यते । यद्यपि रूपं स्यात्तदा रूपाभाव आकाशमिति स्यात् । यदा च यथोक्तेन न्यायेन रूपमेव नास्ति, तदा कस्याभाव आकाशं स्यात् ?

अत्राह—विद्येते एव भावाभावौ, तत्परीक्षकसद्भावात् । अस्ति च भवान् भावाभावयोः परीक्षकः, य एवाह—

अविद्यमाने भावे च कस्याभावो भविष्यति ।

इति । तस्माद् भवतो भावाभावपरीक्षकस्य सद्भावात् परीक्ष्यावपि भावाभावौ विद्येते इति । उच्यते । एतदप्ययुक्तम् । यस्मात्—

**भावाभावविधर्मा च भावाभावमवैति कः ॥[1] ६ ॥**

स्यातां भावाभावौ यदि, तदा तयोः परीक्षको भावो वा स्यादभावो वा । यदि भाव इष्यते, तस्य　　B 133

लक्ष्यलक्षणनिर्मुक्तो नैव भावोऽपि विद्यते ।

इत्युक्तं दूषणम् । अथ अभावः,

अविद्यमाने भावे च कस्याभावो भविष्यति ।

इत्यत्रोक्तमेतद्दूषणम् । न च भावाभावविसदृशधर्मा कश्चित् तृतीयः पदार्थोऽस्ति, योऽनयोरवगमक इति नास्ति भावाभावयोः परीक्षकः । अत एवोक्तं भगवता—

भावानभावानिति यः प्रजानति
　स सर्वभावेषु न जातु सज्जते ।
यः सर्वभावेषु न जातु सज्जते
　स आनिमित्तं भजते समाधिम् ॥ इति ।

[ समाधिराजसूत्र–३८·११ ]

तथा—

यो[2]ऽपि च चिन्तयि शून्यकधर्मान्
　सो[2]ऽपि कुमार्गपपन्नकु बालः ।
अक्षर कीर्तित शून्यक धर्माः
　ते च अनक्षर अक्षर उक्ताः ॥
शान्त पशान्त य चिन्तयि धर्मान्　　B 134
　सोऽपि च चिन्त[3] न जातु न भूतः ।
चित्तवितर्कण सर्वि पपञ्चाः
　सूक्ष्म अचिन्तिय बुध्यथ धर्मान् ॥

इति विस्तरः ॥ ६ ॥

इदानीं प्रतिपादितमर्थं निगमयन्नाह —

**तस्मान्न भावो नाभावो न लक्ष्यं नापि लक्षणम् ।**
**आकाशम्**

इति । यथा चाकाशम्, एवम्—

**आकाशसमा धातवः पञ्च ये परे ॥ ७ ॥**

---

१ Mss. भावाभावाव्च वेत्ति कः (?); T confirms our reading. २ T seems to read येऽपि and तेऽपि for योऽपि and सोऽपि. ३ P चित्त against Mss. which seem to read चिन्तु or चित्त.

पृथिव्यादिधातवो ये पञ्च परेऽवशिष्यन्ते, तेऽपि आकाशवद् भावाभावलक्ष्यलक्षणपरिकल्पस्वरूपरहिताः परिज्ञेया इत्यर्थः ॥ ७ ॥

तदेवं पदार्थानां स्वभावे व्यवस्थिते अविद्यातिमिरोपहतमतिनयनतया अनादिसंसाराभ्यस्ततया भावाभावादिविपरीतदर्शना निर्वाणानुगाम्यविपरीतनैःस्वभाव्यदर्शनसन्मार्गपरिभ्रष्टाः

B 135 5 **अस्तित्वं ये तु पश्यन्ति नास्तित्वं चाल्पबुद्धयः ।**
**भावानां ते न पश्यन्ति द्रष्टव्योपशमं शिवम् ॥ ८ ॥**

द्रष्टव्योपशमं शिवलक्षणं सर्वकल्पनाजालरहितं ज्ञानज्ञेयनिवृत्तिस्वभावं शिवं परमार्थस्वभावम् । परमार्थमजरममरमप्रपञ्चं निर्वाणं शून्यतास्वभावं ते न पश्यन्ति मन्दबुद्धितया अस्तित्वं नास्तित्वं चाभिनिविष्टाः सन्त इति । यथोक्तमार्यरत्नावल्याम्—

10 नास्तिको दुर्गतिं याति सुगतिं यात्यनास्तिकः ।
यथाभूतपरिज्ञानान्मोक्षमद्वयनिश्रितः ॥ इति ॥

आर्यसमाधिराजे चोक्तं भगवता—

अस्तीति नास्तीति उभेऽपि अन्ता
शुद्धी अशुद्धीति इमेऽपि अन्ता ।
15 तस्मादुभे अन्त विवर्जयित्वा
मध्येऽपि स्थानं न करोति पण्डितः ॥

अस्तीति नास्तीति विवाद एषः
शुद्धी अशुद्धीति अयं विवादः ।
B 136 विवादप्राप्त्या[1] न दुखं प्रशाम्यते[2]
20 अविवादप्राप्त्या[3] च दुखं निरुध्यते[4] ॥ इति ।

[समाधिराजसूत्र—९.२७-२८]

तस्मादसंभव एव यत्सांसारिकेण मार्गेण निर्वाणमधिगम्यत इति ॥ ८ ॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
धातुपरीक्षा नाम पञ्चमं प्रकरणम् ॥

---

१ Mss. विवादप्राप्ता for °प्राप्त्या; text विवादप्राप्तान. २ C निरुध्यते; प्रशाम्यति for प्रशाम्यते
३ Mss. अविवादप्राप्ता for °प्राप्त्या; text अविवादप्राप्तान. ४ C स्मृतेरुपस्थानकथं कथेत्वा for the line.

## रागरक्तपरीक्षा षष्ठं प्रकरणम् ।

अत्राह—विद्यन्त एव स्कन्धायतनधातवः । कुतः ? तदाश्रयसंक्लेशोपलब्धेः । इह यन्नास्ति, न तदाश्रयसंक्लेशोपलब्धिरस्ति वन्ध्यादुहितुरिव वन्ध्यासूनोः । सन्ति च रागादयः क्लेशाः[1] संक्लेशनिबन्धनम् । यथोक्तं भगवता—बालो भिक्षवे अश्रुतवान् पृथग्जनः प्रज्ञप्तिमनुपतितः चक्षुषा रूपाणि दृष्ट्वा सौमनस्यस्थानीयान्यभिनिविशते । सोऽभिनिविष्टः सन् रागमुत्पादयति । रक्तः सन् रागजं द्वेषजं मोहजं कर्माभिसंस्करोति कायेन वाचा मनसेति विस्तरः । उच्यते । स्युः स्कन्धायतनधातवो यदि रागादय एव क्लेशाः स्युः[2] । इहायं रागः परिकल्प्यमानो बालपृथग्जनैः सति रक्ते नरे[3] परिकल्प्येत असति वा ? उभयथा च न युज्यत इत्याह—

**रागाद्यदि भवेत्पूर्वं रक्तो रागतिरस्कृतः ।**
**तं प्रतीत्य भवेद्रागो रक्ते रागो भवेत्सति ॥ १ ॥**

तत्र रागः सक्तिरध्यवसानं सङ्गोऽभिनिवेश इति पर्यायाः । रक्तो रागाश्रयः । स यदि रक्तो रागात्पूर्वं रागतिरस्कृतो रागरहितो भवेत्, तदा तं रागतिरस्कृतं रक्तं प्रतीत्य रागो भवेत् । एवं सति रक्ते रागो भवेदिति युक्तम् । न त्वेवं संभवति, यद्रागरहितो रक्तः स्यात्[4] । अर्हतामपि रागप्रसङ्गात् ॥ १ ॥

यद्येवं सति रक्ते न रागः, असति तर्हि रक्ते रागोऽस्तु । एतदप्ययुक्तमित्याह—

**रक्तेऽसति पुना रागः कुत एव भविष्यति ।**

यदा सति रक्ते रागो नास्ति, तदा कथमसति रक्ते निराश्रयो रागः सेत्स्यति ? न हि असति फले तत्पक्वता संभवतीति ॥

अत्राह—यद्यपि त्वया रागो निषिद्धः, तथापि रक्तोऽस्ति, अप्रतिषेधात् । न च रागमन्तरेण रक्तो युक्तः, तस्मादयमप्यस्तीति । उच्यते । स्याद्रागो यदि रक्तः स्यात् । यस्मादयं रक्त इष्यमाणः सति वा रागे परिकल्प्येत, असति वा ? उभयथा च नोपपद्यते इत्याह—

**सति वासति वा रागे रक्तेऽप्येष समः क्रमः ॥ २ ॥**

तत्र यदि सति रागे रक्तः परिकल्प्येत, तत्रापि एष एव रागानुपपत्तिक्रमोऽनन्तरोक्तो रक्तेऽपि तुल्यः ।

रक्ताद्यदि भवेत्पूर्वं रागो रक्ततिरस्कृतः ।

इत्यादि । अथासति रागे रक्त इष्यते, एतदप्ययुक्तम् । यस्मात्—

रागेऽसति पुना रक्तः कुत एव भविष्यति ।

इति । तस्माद्रक्तोऽपि नास्ति । रागरक्ताभावाच्च स्कन्धादयोऽपि न सन्तीति ॥ २ ॥

---

१ T om. क्लेशाः २. After स्युः T adds न तु सन्ति. ३. T om. नरे. ४. After स्यात्, T all: न त्वस्ति.

अत्राह – नैव हि रागरक्तयोः पौर्वापर्येण संभवो यत इदं दूषणं स्यात्, किं तर्हि रागरक्तयोः सहैवोद्भवः। चित्तसहभूतेन रागेण हि चित्तं रज्यते, तच्च रक्तमिति। अतो विद्येते एव रागरक्ताविति। उच्यते। एवमपि –

**सहैव पुनरुद्भूतिर्न युक्ता रागरक्तयोः।**

5 सहोत्पादोऽपि न युक्तो रागरक्तयोः। यस्मात् –

**भवेतां रागरक्तौ हि निरपेक्षौ परस्परम् ॥ ३ ॥**

सहभावात् सव्येतरगोविषाणवदित्यभिप्रायः ॥ ३ ॥

अपि च। अनयो रागरक्तयोः सहभावः एकत्वे परिकल्प्येत पृथक्त्वे वा? तत्र यदि एकत्वे, तन्न युज्यते। यस्मात्

10 **नैकत्वे सहभावोऽस्ति**

B 140 कस्मात्पुनर्नास्तीत्याह –

**न तेनैव हि तत्सह।**

न हि रागस्वात्मा रागादव्यतिरिक्तो रागेण सहेति व्यपदिश्यते ॥

इदानीं पृथक्त्वेऽपि सहभावाभावमाह –

15 **पृथक्त्वे सहभावोऽथ कुत एव भविष्यति ॥ ४ ॥**

न हि पृथग्भूतयोरालोकान्धकारयोः संसारनिर्वाणयोर्वा सहभावो दृष्ट इति ॥ ४ ॥

किं चान्यत् –

**एकत्वे सहभावश्चेत्स्यात्सहायं विनापि सः।**
**पृथक्त्वे सहभावश्चेत्स्यात्सहायं विनापि सः ॥ ५ ॥**

20 यदि एकत्वे सहभावः स्यात्, तदा यत्र यत्रैकत्वं तत्र तत्र सहभाव इत्येकस्यापि सहभावः स्यात्। पृथक्त्वेऽपि सहभावे इष्यमाणे यत्र यत्र पृथक्त्वं तत्र तत्र सहभाव इति अश्वादिव्यतिरिक्तस्य पृथगवस्थितस्य गोः असहायस्य सहभावः स्यात् ॥ ५ ॥

किं च –

**पृथक्त्वे सहभावश्च यदि किं रागरक्तयोः।**
25 **सिद्धः पृथक्पृथग्भावः सहभावो यतस्तयोः ॥ ६ ॥**[1]

B 141 पृथक्त्वे सहभावश्च रागरक्तयोः परिकल्प्यते। किमनयोः सिद्धः पृथक्पृथग्भावः? किं रागनिरपेक्षो रक्तः सिद्धो यतस्तयोः सहभावः स्यात्? पृथक्पृथक्सिद्धयोरेव हि गवाश्वयोः सहभावो दृष्टः। न त्वेवं रागरक्तौ पृथक्पृथक्सिद्धाविति नास्त्यनयोः सहभावः ॥ ६ ॥

अथवा। पृथक्पृथगसिद्धयोर्न सहभाव इति कृत्वा –

**सिद्धः पृथक्पृथग्भावो यदि वा रागरक्तयोः।**

परिकल्प्यते भवता, किमिदानीं सहभावेनाकिंचित्करेण परिकल्पितेनेत्याह –

**सहभावं किमर्थं तु परिकल्पयसे तयोः ॥ ७ ॥**

[1] Mss. सहभावस्ततस्तयोः for सहभावो यतस्तयोः which is confirmed by T and Com.

रागरक्तयोः सिद्ध्यर्थं सहभावः परिकल्प्यते । सच पृथक्पृथगसिद्ध्योर्नास्तीति पृथक्पृथक् सिद्धिरभ्युपगम्यते त्वया । नन्वेवं सति सिद्धत्वात्किमनयोः सहभावेन कृत्यम् ?

अथ –

**पृथङ् न सिध्यतीत्येवं सहभावं विकाङ्क्षसि ।**

पृथक्पृथग् रागरक्तयोः सिद्धिर्नास्तीति कृत्वा यदनयोः सहभावमिच्छसि, स च 5 पृथक्पृथगसिद्ध्योर्नास्तीति –

**सहभावप्रसिद्ध्यर्थं पृथक्त्वं भूय इच्छसि ॥ ८ ॥**

नन्वेवं सति इतरेतराश्रयायां सिद्धौ स्थितायां कस्येदानीं सिद्धौ सत्यां कस्य सिद्धिरस्तु ? ॥ ८ ॥

यावता – 10

**पृथग्भावाप्रसिद्धेश्च सहभावो न सिध्यति ।** B 142
**कतमस्मिन् पृथग्भावे सहभावं सतीच्छसि ॥ ९ ॥**

नास्त्येव स पृथग्भावः सहभावानपेक्षो यस्मिन् पृथग्भावे सति सहभावसिद्धिः स्यादित्य-संभावयन्नाह –

कतमस्मिन्पृथग्भावे सहभावं सतीच्छसि ॥ ९ ॥ 15

तदेवं यथोदितविचारपरामर्शेन रागरक्तयोरसिद्धिं निगमयन्नाह –

**एवं रक्तेन रागस्य सिद्धिर्न सह नासह ।**

इति । यथा च रागरक्तयोर्न पौर्वापर्येण सिद्धिः नापि सहभावेन, एवं सर्वभावानामपीत्यति-दिशन्नाह –

**रागवत्सर्वधर्माणां सिद्धिर्न सह नासह ॥ १० ॥** 20

इति द्वेषद्विष्टमोहमूढादीनां रागरक्तवदसिद्धिर्योज्यते ॥ १० ॥

अत एवोक्तं भगवता –

यो रज्येत यत्र वा रज्येत येन वा रज्येत, यो दुष्येत यत्र वा दुष्येत येन वा दुष्येत, B 143 यो मुह्येत यत्र वा मुह्येत येन वा मुह्येत, स तं धर्मं न समनुपश्यति तं धर्मं नोपलभते । स तं धर्ममसमनुपश्यन्ननुपलभमानोऽरक्तोऽदुष्टोऽमूढोऽविपर्यस्तचित्तः समाहित इत्युच्यते । तीर्णः पारग 25 इत्युच्यते । क्षेमप्राप्त इत्युच्यते । अभयप्राप्त इत्युच्यते । यावत् क्षीणास्रव इत्युच्यते । निःक्लेशो वशीभूतः सुविमुक्तचित्तः सुविमुक्तप्रज्ञ आजानेयो महानागः कृतकृत्यः कृतकरणीयः अपहृतभारोऽनुप्राप्तस्वकार्थः परिक्षीणभवसंयोजनः सम्यगाज्ञासुविमुक्तचित्तः सर्वचेतोवशितापरम-पारमिप्राप्तः श्रमण इत्युच्यते । इति विस्तरः [३]।

[ समाधिराजसूत्र – ९ ]

---

१. T असंभाव्य for असंभावयन्. २. T रागरक्तयोः सिद्धिर्योज्यते for रागरक्तवदसिद्धिर्योज्यते.
३. Our passage is abridged.

तथा –

ये रागदोषमदमोहसभाव ज्ञात्वा
संकल्पहेतुजनितं वितथप्रवृत्तम् ।
न विकल्पयन्ति न विरागमपीह तेषाम्
B 144 5 [ आशु ] सर्वभवभावविभाविताताम् ॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
रागरक्तपरीक्षा नाम षष्ठं प्रकरणम् ॥

## संस्कृतपरीक्षा सप्तमं प्रकरणम् ।

B 145

अत्राह – विद्यन्त एव संस्कृतस्वभावाः, स्कन्धायतनधातवः उत्पादादिसंस्कृतलक्षण-सद्भावात् । उक्तं हि भगवता – त्रीणीमानि संस्कृतस्य संस्कृतलक्षणानि । संस्कृतस्य भिक्षवः उत्पादोऽपि प्रज्ञायते, व्ययोऽपि, स्थित्यन्यथात्वमपीति । न च अविद्यमानस्य खरविषाण-स्येव जात्यादिलक्षणमस्ति । तस्मात्संस्कृतलक्षणोपदेशाद्विद्यन्त एव स्कन्धायतनधातवः इति । 5
उच्यते । स्युः स्कन्धायतनधातवः संस्कृतस्वभावास्तावकेन मतेन, यदि जात्यादिलक्षणमेव भवेत् । इहायमुत्पादः संस्कृतलक्षणत्वेनेष्यमाणः संस्कृतो वा तल्लक्षणत्वेनेष्यते, असंस्कृतो वा ? तत्र –

**यदि [1]संस्कृत उत्पादस्तत्र युक्ता त्रिलक्षणी ।**

त्रयाणां लक्षणानां समाहारस्त्रिलक्षणी । इयं च उत्पादस्थितिभङ्गसमाहारस्वभाव-सर्वसंस्कृताव्यभिचारिणीति कृत्वा यदि उत्पादः संस्कृत इति परिकल्प्यते, तदा उत्पादेऽपि 10
त्रिलक्षणी प्रसज्यते । ततश्च रूपादिवल्लक्ष्[2]यत्वमुत्पादस्य स्यात्, न संस्कृतलक्षणत्वम् ।
अथोत्पादेऽपि त्रिलक्षणी नेष्यते, तदा त्रिलक्षणीरहितत्वादाकाशवत् संस्कृतलक्षणत्वमस्यावहीयते इत्याह –

B 146

**अथासंस्कृत उत्पादः कथं संस्कृतलक्षणम् ॥ १ ॥**

इति । नैतत्संस्कृतलक्षणमित्यभिप्रायः ॥ १ ॥ 15

अपि च । इमे उत्पादादयः संस्कृतस्य लक्षणत्वेन परिकल्प्यमाना व्यस्ता वा पृथग्वा लक्षणत्वेन परिकल्प्येरन्, समस्ता वा सहभूता वा ? उभयथा च न युज्यत इत्याह –

**उत्पादाद्यास्त्रयो व्यस्ता नालं लक्षणकर्मणि ।**
**संस्कृतस्य समस्ताः स्युरेकत्र कथमेकदा ॥ २ ॥**

तत्र व्यस्ता लक्षणकर्मणि न युज्यन्ते । यदि उत्पादकाले स्थितिभङ्गौ न स्यातां तदा 20
स्थितिभङ्गरहितस्य आकाशस्येव संस्कृतलक्षणत्वेनानुपपद्य एवोत्पादः । अथ स्थितिकाले उत्पादभङ्गौ न स्तः, तदा तद्रहितस्य स्थितिः स्यात् । उत्पादभङ्गरहितश्च पदार्थो नास्त्येवेति न अस्याविद्यमानस्य खपुष्पवत् स्थितिर्युज्यते । किं च । स्थितियुक्तस्य पश्चादनित्यतयापि योगो न स्यात्, तद्विरोधिधर्माक्रान्तत्वात् । अथ स्यात् – पूर्वं शाश्वतो भूत्वा पश्चादशाश्वत इति, न चैकपदार्थः शाश्वतश्चाशाश्वतश्च युक्त इति नोत्पादभङ्गरहितस्य स्थितिः । तथा यदि भङ्गकाले 25
स्थित्युत्पादौ न स्याताम्, एवमप्यनुत्पन्नस्य स्थितिरहितस्य खपुष्पस्य विनाशोऽपि नास्तीति ।
एवं तावदुत्पादादयो व्यस्ता नालं लक्षणकर्मणि नालं न पर्याप्ता इत्यर्थः ॥

इदानीं समस्ता अपि न युज्यन्त इत्याह –

**समस्ताः स्युरेकत्र कथमेकदा ।**

B 147

---

1. T om. संस्कृत°. २ Mss. लक्ष्यते उत्पादस्य for लक्ष्यत्वमुत्पादस्य which is confirmed by T.

एकत्र पदार्थे, एकस्मिन् काले, परस्परविरुद्धत्वाद्रागवैराग्यवत्, आलोकान्धकारवद्वा न युज्यन्त इत्यभिप्रायः। यस्मिन्नेव क्षणे पदार्थो जायते, तस्मिन्नेव तिष्ठति विनश्यति चेति कः सचेताः प्रतिपद्येत ? तस्मात्समस्तानामपि उत्पादादीनां संस्कृतस्य लक्षणकर्मणि नास्ति सामर्थ्यम् ॥ २ ॥

5 अथ यदुक्तं 'यदि संस्कृत उत्पादः' [ ७·१ ] इत्यादि, तेन यदि उत्पादादीनां त्रिलक्षणी प्राप्ता प्रसक्ता, ततः को दोषः ? अथासंस्कृतः, एवमप्यदोष इति। उच्यते —

**उत्पादस्थितिभङ्गानामन्यत्संस्कृतलक्षणम्**
**अस्ति चेदनवस्थैवं नास्ति चेत्ते न संस्कृताः ॥ ३ ॥**

ननु च पक्षद्वयेऽपि विहित एव दोषः, तत्र किं पुनरुक्ताभिधानेनेति। सत्यमुक्तो दोषः, 10 स खलु नाचार्येण, किं तर्हि वृत्तिकारेण। अथ पूर्वप्रतिज्ञातमेव दूषणान्तराभिधानेन स्पष्टीकरणार्थं पुनराचार्योऽभिहितवान्। यदि उत्पादस्थितिभङ्गानामन्यदुत्पादादिकं संस्कृतलक्षणमिष्यते, तदा तेषामप्यन्यत्, तेषामप्यन्यत्, इत्यपर्यवसानदोषः स्यात्। सति च अपर्यवसानदोषे, किं पूर्वं स्याद् यत उत्तरकालमपरं भवेदिति व्यवस्थाभावादसंभव एव उत्पादादीनामित्यभिप्रायः। अथवा, पूर्वं मुख्यत्वादुत्पादस्यैव दूषणमुक्तम्, अधुना तु 15 सामान्येनेति। नास्ति चेत्ते न संस्कृता इति गतार्थमेतत् ॥ ३ ॥

B 148 अत्राहुः सांमितीयाः — सन्ति चोत्पादादीनामुत्पादादयः, न च अनवस्थाप्रसङ्गः, लक्षणानुलक्षणानां परस्परनिष्पादकत्वात्। यस्मादिह संस्कृतधर्मः कुशलः क्लिष्टो वा उत्पद्यमानः आत्मना पञ्चदशः उत्पद्यते[1]। स धर्मस्तस्य चोत्पादः समन्वागमः स्थितिर्जरा अनित्यता। यद्यसौ धर्मः क्लिष्टो भवति, तस्य मिथ्याविमुक्तिः। अथ शुभः, तस्य सम्यग्विमुक्तिः। यदि नैर्याणिको भवति, 20 तस्य नैर्याणिकता। अथ अनैर्याणिकः, तस्य अनैर्याणिकता। इत्येष परिवारः। इदानीमुत्पादस्यापर उत्पादः यावदनैर्याणिकतानैर्याणिकतेत्येष परिवारस्य परिवारः। तत्र योऽयं मौल उत्पादः स आत्मानं विहाय[2] अन्यांश्चतुर्दश धर्मान् जनयति। उत्पादोत्पादसंज्ञकस्तु अनुलक्षणभूत उत्पादो B 149 मौलमेवोत्पादं जनयति। एवं यावदनैर्याणिकता चतुर्दश धर्मान् न निर्याणयति, न तन्निर्वाणं प्रापयतीत्यर्थः। अनैर्याणिकतानैर्याणिकता तु न[3] निर्याणयति। तदेवमुत्पादादीनामनवस्थां 25 परिहरन्नाह —

**उत्पादोत्पाद उत्पादो मूलोत्पादस्य केवलम्।**
**उत्पादोत्पादमुत्पादो मौलो जनयते पुनः ॥ ४ ॥**

द्विविधो ह्युत्पादः। एको मौल उत्पादः, अपरश्च उत्पादोत्पादसंज्ञकः, उत्पादस्योत्पाद इति कृत्वा। तत्र योऽयमुत्पादोत्पादसंज्ञक उत्पादः, स मूलोत्पादस्य केवलमुत्पादकः। तं चेदानी-

१. P उत्पद्यन्ते for उत्पद्यते. २. Mss. विहरस्योन्यान् for विहाय अन्यान् which is confirmed by T. ३. Mss. and P प्रापयति अनैर्याणिकतामनैर्याणिकतामेवेति. Our text is supported by T.

मुत्पादोत्पादाख्यमुत्पादं मौल उत्पादो जनयति । तदेवं परस्परनिर्वर्तनादस्ति च त्रिलक्षणी उत्पादादीनाम्, न चानवस्थाप्रसङ्ग इति ॥ ४ ॥

अत्रोच्यते – B 150

**उत्पादोत्पाद उत्पादो मूलोत्पादस्य ते यदि ।**
**मौलेनाजनितस्तं ते स कथं जनयिष्यति ॥ ५ ॥**

यदि तव उत्पादस्योत्पादो मूलोत्पादस्य जनक इति मतम्, स कथमिदानीं मौलेनोत्पादेनानुत्पादितः सन् उत्पादोत्पादो मौलं जनयिष्यति ? ॥ ५ ॥

अथ मन्यसे – उत्पादित एव मौलेनोत्पादेन उत्पादोत्पादो मौलं जनयिष्यति, एतदप्यसदित्याह–

**स ते मौलेन जनितो मौलं जनयते यदि ।** 10
**मौलः स तेनाजनितस्तमुत्पादयते कथम् ॥ ६ ॥**

स उत्पादोत्पादसंज्ञक उत्पादो मौलेन जनितो यदि मौलं जनयति, स मौल उत्पादोत्पादेनाजनितोऽविद्यमानः कथमुत्पादोत्पादं जनयिष्यति ? तस्मान्मौलेन जनितः सन् उत्पादोत्पादो मौलं जनयतीति न युज्यते । ततश्च परस्परनिर्वर्त्यनिर्वर्तकत्वाभावात्स एव अनवस्थाप्रसङ्ग इति नास्त्युत्पादः ॥ ६ ॥ 15

अत्राह–उत्पद्यमान एव मूलोत्पाद उत्पादोत्पादमुत्पादयति, स एवोत्पादोत्पादो मूलोत्पादं जनयिष्यतीति । उच्यते –

**अयमुत्पद्यमानस्ते काममुत्पादयेदिमम् ।**
**यदीममुत्पादयितुमजातः शक्नुयादयम् ॥ ७ ॥**

काममयं मूलोत्पाद उत्पद्यमान उत्पादयेदुत्पादम्, यद्ययमेव अजातः शक्नुयादपरमजातमुत्पादयितुम् । उत्पद्यमानो हि नाम अनागतः । स च अजातः कथमुत्पादयिष्यतीति न युक्तमेवैतदित्यभिप्रायः । एवमुत्पादोत्पादेऽपि वाच्यम् ॥ ७ ॥ 20 B 151

अत्राह – नैव हि उत्पादस्यापर[1] उत्पादोऽस्ति यतोऽनवस्थाप्रसङ्गः स्यात् । किं तर्हि –

**प्रदीपः स्वपरात्मानौ संप्रकाशयिता[2] यथा ।**
**उत्पादः स्वपरात्मानावुभावुत्पादयेत्तथा ॥ ८ ॥** 25

यथा प्रदीपः प्रकाशस्वभावत्वादात्मानं प्रकाशयति घटादींश्च, एवमुत्पादोऽप्युत्पादस्वभावत्वादात्मानमुत्पादयिष्यति परं चेति ॥ ८ ॥

उच्यते । स्यादेतदेवं यदि प्रदीपः स्वपरात्मानौ संप्रकाशयेत् । न चैवम् । यस्मात् –

---

१ Mss. उत्पादस्याय च for उत्पादस्यापर which is confirmed by T. २ Mss. संप्रकशयितु for संप्रकाशयिता.

प्रदीपे नान्धकारोऽस्ति यत्र चासौ प्रतिष्ठितः ।
किं प्रकाशयति दीपः प्रकाशो हि तमोवधः ॥ ९ ॥

इह प्रकाशो नाम तमस्य( सो ? ) वधः । तमश्च प्रदीपस्वात्मनि तावन्न संभवति, विरोधात्, यत्तमो निघ्नतः स्वात्मप्रकाशत्वं स्यात् । न चापि प्रदीपो यत्र देशे तिष्ठति तत्र B 152 5 तमोऽस्ति, यत्तमो निघ्नतः प्रदीपस्य परप्रकाशकत्वं स्यात् । अतोऽपि नास्ति प्रदीपस्य स्वपरात्मप्रकाशकत्वम् । यदा चैवम्, तदा प्रदीपवदुत्पादस्य स्वपरात्मोत्पादकत्वं न संभविष्यति, इति अयुक्तमेतत् ॥ ९ ॥

अत्राह — यदेतदुक्तं प्रदीपे नान्धकारोऽस्तीति, एतदसत्यन्धकारघाते युक्तमेव वक्तुम् । यस्मात्तु उत्पद्यमानेनैव प्रदीपेन तमो निहतम्, तत्र प्रदीपे नान्धकारोऽस्ति, यत्र च प्रदीपोऽस्ति, 10 तत्राप्यन्धकारो नास्तीति युज्यते । यदि प्रदीपेन नान्धकारघातः कृतः, तदा अनुत्पन्ने इव प्रदीपे उत्पन्नेऽपि घटादयो नोपलभ्येरन्, अन्धकारघाताभावात्प्रागवस्थामिव । तस्मादस्त्येव अन्धकारघातलक्षणं प्रकाशनं प्रदीपस्य । तच्चानेन उत्पद्यमानेन प्रदीपेन कृतमिति । उच्यते —

कथमुत्पद्यमानेन प्रदीपेन तमो हतम् ।
नोत्पद्यमानो हि तमः प्रदीपः प्राप्नुते यदा ॥ १० ॥

15 इह आलोकान्धकारयोर्यौगपद्याभावात् प्राप्तेरभावः । यदा चैवं प्राप्तेरभावः, तदा कथं केन प्रकारेणेदानीमुत्पद्यमानेन प्रदीपेन तमो हतमिति युक्तं परिकल्पयितुम् ? यस्माच्च एवमुत्पद्यमानः प्रदीपः तमो न प्राप्नोति, तस्मान्नैव अप्राप्तत्वात्प्रदीपः किंचिदपि प्रकाशयतीत्यवसीयताम् ॥ १० ॥

अथ मन्यसे — यथा अप्राप्तामेव अविद्यां ज्ञानं निहन्ति, अप्राप्तमेव रूपं चक्षुः पश्यति, अप्राप्तमेव अयः अयस्कान्तो मणिराकर्षति, एवमेव अप्राप्तमेवान्धकारं प्रदीपो निहनिष्यतीति । 20 एतदप्यसारमित्याह —

B 153

अप्राप्यैव प्रदीपेन यदि वा निहतं तमः ।
इहस्थः सर्वलोकस्थं स तमो निहनिष्यति ॥ ११ ॥

यदि अप्राप्यैव प्रदीपेन तमो निहतम्, एवं सति, इहस्थ एव प्रदीपः सर्वलोकस्थं तमो निहनिष्यति, अप्राप्तत्वात्समीपस्थमिवेत्यभिप्रायः । एतेन न्यायेन ज्ञानेन अविद्याघातः, चक्षुषा 25 रूपदर्शनम्, अयस्कान्तमणिना अयआकर्षणमिव इत्येवमादिकं साध्यसमं ज्ञेयम् ॥

अथ अप्राप्तावपि सत्यामयस्कान्तमणिप्रभृतीनां योग्यदेशावस्थानामेव स्वकार्यकृत्त्वं देभविष्यतीति चेत्, तदपि न युक्तम् । अप्राप्तौ हि सत्यां विप्रकृष्टदेशान्तरावस्थितवद्व्यवहितशान्तरावस्थितवच्च[1] अप्राप्तत्वाद् योग्यदेशावस्थितानामपि योग्यदेशावस्थितत्वं न युक्तमिति कुतो योग्यदेशावस्थितानां स्वकार्यकृत्त्वं प्रसेत्स्यति ?

---

1. Mss. seem to om. वत्, but it is confirmed by T. २. T °वस्थितद्वारेण for वस्थितानां.

दृष्टमेतल्लोकत इति चेन्नैतदेवम्। यथा हि भवान् परिकल्पयति न तथा लोके दृष्टम्। यस्मात् न लोकः प्राप्त्यप्राप्तिचिन्तामेवमादौ विषयेऽवतार्य प्रदीपादीनां प्रकाशकत्वादिकं कल्पयति। यथोदितं तु विचारमनवतार्य प्रदीपेन तमो हतम्, चक्षुषा रूपदर्शनम्, अयस्कान्तमणिना अयआकर्षणम् इत्यादि इच्छति। पश्यतु वा लोक एवम्। तत्त्वविचारकाले तु लोकस्याप्रामाण्यान्न तेन बाधा शक्यते कर्तुम्। एवं तावदप्राप्य प्रकाशनमयुक्तम्। प्राप्तावपि विषयादिग्रहणमयुक्तमेव। प्राप्तिर्हि एकत्वे सति भवति। यदा चैकत्वं तदा स्वरूपवद्दर्शनाकर्षणादिकं नास्ति॥ 5 B 154

यद्यपि चेयं प्राप्त्यप्राप्त्यादिचिन्ता लौकिकव्यवहारे नावतरतीति निरुपपत्तिकत्वेन मृषार्थत्वादस्य, तथापि तत्त्वविचारेऽवतार्या, मा भूत्परमार्थतोऽपि निरुपपत्तिकपक्षाभ्युपगम इत्यलं प्रसङ्गेन॥ ११॥ 10

यदि च स्वपरात्मानौ प्रदीपः प्रकाशयतीति परिकल्प्यते त्वया, तमसोऽपि तर्हि प्रतिपक्षभूतस्य स्वपरात्मनोः प्रच्छादनं प्रकल्प्यतामित्याह—

प्रदीपः स्वपरात्मानौ संप्रकाशयते यदि।
तमोऽपि स्वपरात्मानौ छादयिष्यत्यसंशयम्॥ १२॥

प्रतिद्वन्द्वित्वात्प्रदीपवत् तमोऽपि स्वपरात्मगतं व्यापारं करिष्यति, ततश्च परवदात्मानमपि च्छादयिष्यति। यदि च आत्मानं छादयेत्तमः, तस्यैवानुपलब्धिः स्यात्, घटादिवत्तमसा प्रच्छादितत्वात्। अत एवोक्तमार्योपालिपृच्छायाम्— 15

इह सासनि सूरमणीये
प्रव्रजथा[3] गृहिलिङ्ग जहित्वा।
फलवन्तु[4] भविष्यथ श्रेष्ठा[5]
एषु निदेशितु कारुणिकेन॥ 20 B 155
प्रव्रजित्वा गृहिलिङ्ग जहित्वा
सर्वफलस्य[6] भविष्यति प्राप्तिः।
पुन धर्मसभाव तुलित्वा
सर्वफलान फलान च प्राप्तिः॥ 25
अलभन्त फलं तथ प्राप्तिं
आश्चरियं पुन जायति तेषाम्।
अहोऽतिकारुणिको[7] नरसिंहो
सुष्ठुपदेशित युक्ति जिनेन॥ इति॥

१. Mss. प्राप्तः प्राप्तये चिन्तां for प्राप्त्यप्राप्तिचिन्ताम्. २. Paris Ms. seems to om. वत्. ३. प्रव्रयथा for प्रव्रजथा elsewhere. ४. Mss. बलवन्तु; T supports our reading. ५. सेष्ठा for श्रेष्ठा for metrical reasons. ६. Mss. सत्यफलस्य for सर्वफलस्य; our reading in supported by T. ७. T हा बत for अहोऽति°.

B 156 तथार्यरत्नकूटसूत्रे —

यथा हि दीपो लॅयने चिरस्य
कृतो हि गेहे पुरुषेण केनचित् ।

तत्रान्धकारस्य न भोति एवं
चिरस्थितो नाहमितो गमिष्ये ॥

5

तमोन्धकारस्य न शक्तिरस्ति
कृते प्रदीपे न विगच्छनाय ।

प्रतीत्य दीपं च विनश्यते तैम
उभयं पि शून्यं न च किं च मन्यति ॥

10

ज्ञानं तथा आर्य प्रतीत्य नास्रवं
अज्ञान क्लेशोपचितं विगच्छति ।

संपर्क तेषां न कदाचि विद्यते
ज्ञानस्य क्लेशस्य च नित्यकालम् ॥

B 157

ज्ञानं न कल्पेति अज्ञानु नो भवेत्
15 ज्ञानं प्रतीत्यैव विनश्यते तमो ।

भयं पि अग्राह्य खपुष्पसंनिभं
ज्ञानं तथाज्ञानु भयं पि शून्यम् ॥ इति ॥ १२ ॥

किं चान्यत्—इहायमुत्पादो यद्यात्मानमुत्पादयेत्, स उत्पन्नो वा स्वात्मानमुत्पादयेत्, अनुत्पन्नो वा ? उभयथा च नोपपद्यते इत्याह —

20

**अनुत्पन्नोऽयमुत्पादः स्वात्मानं जनयेत्कथम् ।**
**अथोत्पन्नो जनयते जाते किं जन्यते पुनः ॥ १३ ॥**

यदि अनुत्पन्न उत्पादः स्वात्मानमुत्पादयेत्, मण्डूकजटाशिरोमणिरप्यात्मानमुत्पादयेत्[3] । अथ उत्पन्न उत्पादयेत्, किमुत्पन्नस्यापरेणोत्पादेन प्रयोजनमिति । एवं तावदुत्पाद आत्मानं नोत्पादयति ॥ १३ ॥

25 इदानीं परमपि यथा नोत्पादयति तथा प्रतिपादयन्नाह—

**नोत्पद्यमानं नोत्पन्नं नानुत्पन्नं कथंचन ।**
**उत्पद्यते तथाख्यातं गम्यमानगतागतैः ॥ १४ ॥**

---

१. T om. लयने. २. P तमो भयं against Mss. ३ Mss. seem to read sometime मुण्डक for मण्डूक. Compare कूर्मरोम with मण्डूकजटा.

यदि हि किंचिदुत्पद्येत तदुत्पाद उत्पादयेत्। न तु किंचिदुत्पद्यतेऽध्वत्रयेऽप्युत्पादासंभवात्। एतच्च गम्यमानगतागतैः प्रागेवोक्तम्। तत्र यथा गतं न गम्यते, अतीतवर्तमानयोर्विरोधात्। नाप्यगतं गम्यते, अनागतवर्तमानयोर्विरोधात्। नापि गम्यमानं गम्यते, गतागतव्यतिरिक्तगम्यमानानुपलम्भादित्युक्तम्। एवमुत्पद्यमानो भावो नोत्पद्यते, उत्पन्नानुत्पन्नव्यतिरेकेणोत्पद्यमानाभावात्। उत्पन्नोऽपि नोत्पद्यते, अतीतवर्तमानयोर्विरोधात्। उत्पन्न इत्युपरतोत्पत्तिक्रिय उच्यते, उत्पद्यत इति वर्तमानक्रियाविष्टः। ततश्च उत्पन्न उत्पद्यते इत्युच्यमाने अतीतवर्तमानयोरेककालता स्यात्। अनुत्पन्नोऽपि नोत्पद्यते, अनागतवर्तमानयोर्विरोधात्। तस्मादुत्पादः परमुत्पादयतीति न युक्तम्॥ १४॥ B 158 5

अत्राह—उत्पद्यमानमेवोत्पद्यते नोत्पन्नं नाप्यनुत्पन्नमिति। अथ मन्यसे—उत्पन्नानुत्पन्नव्यतिरेकेण उत्पद्यमानासंभवान्नोत्पद्यमानमुत्पद्यत इति, एतच्च नास्ति, यस्मादिह उत्पत्तिक्रियायुक्तमुत्पद्यमानमिति व्यपदिश्यते। तस्मादुत्पत्तौ सत्यामुत्पत्तिं प्रतीत्य उत्पद्यमानसिद्धेः उत्पद्यमानमेवोत्पद्यते, तच्चोत्पद्यमानमुत्पाद उत्पादयतीति। उच्यते— 10

> उत्पद्यमानमुत्पत्ताविदं न क्रमते यदा।
> कथमुत्पद्यमानं तु प्रतीत्योत्पत्तिमुच्यते॥ १५॥

यदुक्तम्—उत्पत्तिं प्रतीत्य उत्पद्यमानं भवति, तच्चोत्पद्यत इति। ननु विशेषत एतद्वक्तव्यं स्यात्—अस्योत्पत्तिं प्रतीत्य इदं नामोत्पद्यमानं भवतीति। न चैवमुच्यते। न हि तदुत्पद्यमानं विशेषतो निर्धारयितुं शक्यते इदं तदुत्पद्यमानमिति, अनुत्पन्नत्वात्तन्निमित्तग्रहणतः। ततश्च उत्पद्यमानासंभवादुत्पत्तिक्रियापि नास्तीति। कथमसत्यामुत्पत्तौ तां प्रतीत्य उत्पद्यमानं स्यात्? तस्मादुत्पद्यमानमुत्पद्यते, तच्च उत्पाद उत्पादयतीत्ययुक्तम्॥ १५॥ 15 B 159

अत्राह—अहो बत अहमतीव भवतो दृष्टादृष्टपदार्थनिरपेक्षादत्यन्तनास्तिकाद्बिभेमि, यो हि नाम भवांस्तथागतप्रवचनव्याख्यानव्याजेन दूषणमात्रकौशलमेवात्मनः प्रकटयन् परमर्षिगदितमिदंप्रत्ययताप्रतीत्यसमुत्पादलक्षणं परमार्थसत्यं तथागतानां निहन्ति। इह भगवता तथागतेन प्रकृतीश्वरस्वभावकालाणु[1]नारायणजैमिनिकणादकपिलादितीर्थकरकर्तृवादनिरासेन सर्वभावानां तत्त्वमादर्शितम्, यदुत अस्मिन् सति इदं भवति, अस्योत्पादादिदमुत्पद्यते, यदुत अविद्याप्रत्ययाः संस्काराः इत्याद्यविपरीतं प्रतीत्यसमुत्पादं प्रकटयता। तस्य च त्वया नोत्पद्यमानं नोत्पन्नं नानुत्पन्नमित्यादिना दूषणं विदधता तथागतजनन्याः प्रतीत्यसमुत्पत्तिमातुर्वध एवाचरित इत्यलं[2] भवता सर्वनास्तिकेन त्वयेति। उच्यते। नाहं सकलदशबलजननीं प्रतीत्यसमुत्पत्तिमातरं निहन्मि। भवानेव तु परमगम्भीरप्रतीत्यसमुत्पादाधिमुक्तिविरहाद्विपरीतं तदर्थमवधार्य अस्माकमेव अधिलयं[3] करोति। ननु च इदं प्रतीत्येदं भवतीत्येवमभिधानेन भगवता तथागतेन निःस्वभावत्वमेव सर्वधर्माणां स्पष्टमावेदितम्। यस्मात्— 20 25

१. T °अणुनारायणादि° for अणुनारायणजैमिनिकणादकपिलादि°. २. T अलं त्वया सार्धं विवादेन for अलं भवता सर्वनास्तिकेन त्वया. ३. Mss. अधिरयं or अधिरेपं for अधिलयं.

**प्रतीत्य यद्यद्भवति तत्तच्छान्तं स्वभावतः ।**

B 160 यो हि पदार्थो विद्यमानः स सस्वभावः स्वेनात्मना स्वं स्वभावमनपायिनं बिभर्ति । स संविद्यमानत्वान्नैवान्यत्किंचिदपेक्षते, नाप्युत्पद्यते, इति कृत्वा सस्वभावभावाभ्युपगमे सति कुतः प्रतीत्यसमुत्पाद इति भवतैव सस्वभावतां भावानामभ्युपगच्छता सर्वथा प्रतीत्यसमुत्पाद एव 5 बाधितो भवति । ततश्च परमधर्मबुद्धदर्शनमपि बाधितं भवति—यः प्रतीत्यसमुत्पादं पश्यति स धर्मं पश्यति, यो धर्मं पश्यति स बुद्धं पश्यतीत्यागमात् । मया तु यत्प्रतीत्य बीजाख्यं कारणं यद्भवत्यङ्कुराख्यं कार्यम्, तच्च उभयमपि शान्तं स्वभावविरहितं प्रतीत्यसमुत्पन्नं प्रतिपादयता सर्वथा भगवतां तथागतानां प्रतीत्यसमुत्पत्तिमाता द्योतिता भवति । यत एवम्—

**तस्मादुत्पद्यमानं च शान्तमुत्पत्तिरेव च ॥ १६ ॥**

10 इति स्फुटमवसीयताम् ॥ १६ ॥

अत्राह—यदुक्तम्—

उत्पद्यमानमुत्पत्ताविदं न क्रमते यदा ।
कथमुत्पद्यमानं तु प्रतीत्योत्पत्तिमुच्यते ॥

इति, तदयुक्तम् । यस्मादिदमुत्पद्यमानमित्येव संभवति । तथा हि घटोत्पत्तिं प्रतीत्य घट 15 उत्पद्यमानो भवति, तं च उत्पद्यमानमुत्पाद उत्पादयतीत्युच्यते । एतदप्ययुक्तम् । यस्मात्—

**यदि कश्चिदनुत्पन्नो भावः संविद्यते क्वचित् ।**
**उत्पद्येत स किं तस्मिन् भाव उत्पद्यतेऽसति ॥ १७ ॥**

B 161 यदि कश्चिदनुत्पन्नः उत्पादात्पूर्वं घटो नाम क्वचित्संविद्येत, स उत्पत्तिक्रियां प्रतीत्योत्पद्येत । न चैवं कश्चिदुत्पादात्पूर्वं क्वचिदस्ति । तस्मिन्नसति घटे किमुत्पद्यते ?

20 अथ स्यात्—यद्युत्पादात्पूर्वं घटो नास्ति, तथापि उत्पन्नः सन् घटसंज्ञां प्रतिलप्स्यते, तद्भाविन्या संज्ञया न दोष इति । एतदप्ययुक्तम् । यदि हि उत्पत्तिक्रिया प्रवर्तेत, तदा वर्तमानीभूतो भावो घटाख्यां प्रतिलभेत । यदा तु अनागतभावासंबन्धेन क्रियाया अप्रवृत्तिः, तदा कुतो वर्तमानता ? अथ [२]अघटाश्रयेण क्रिया प्रारभ्येत, तद्वक्तव्यम्—योऽसौ अघटः, स किं भवितुमर्हति पटः, उत नैव किंचित् ? यदि पट उत्पद्यमानः स कथमुत्पन्नः सन् घटो भविष्यतीति । 25 अथ नैवं किंचित्, कथं तदाश्रया क्रिया क्रिया प्रवर्तते ? कथं वा स उत्पन्नः सन् घटो भवेत् ? इति सर्वथा भावित्वकल्पनाप्ययुक्ता । तस्मादुत्पद्यमानमप्युत्पादो नोत्पादयतीति सिद्धम् ॥ १७ ॥

अपि च । एवं न युज्यमानायामप्युत्पद्यमानस्योत्पत्तौ भवतो मतमभ्युपेत्योच्यते—

**उत्पद्यमानमुत्पादो यदि चोत्पादयत्ययम् ।**
**उत्पादयेत्तमुत्पादमुत्पादः कतमः पुनः ॥ १८ ॥**

---

१. T om. परम°. २. C घटाश्रयेण for अघटाश्रयेण which is confirmed by T.

यद्यपि उत्पद्यमानं पदार्थमुत्पाद उत्पादयेद्भवन्मतेन, इदं तुं वक्तव्यम्—तमिदानीमुत्पादः कतमोऽपरः उत्पादमुत्पादयिष्यतीति ॥ १८ ॥ B 162

अथ स्यात्—उत्पादस्यापर उत्पादः उत्पादकः परिकल्प्येत, तदा अनवस्थादोषप्रसङ्ग इत्याह—

**अन्य उत्पादत्येनं यद्युत्पादोऽनवस्थितिः ।** 5

एतच्चोक्तम् । अथ नास्यापर उत्पाद इष्यते, नन्वेवं सति विना उत्पादेन उत्पाद उत्पद्यते इत्येवं प्राप्नोति । ततश्च उत्पादोत्पाद्यानामपि पदार्थानां विनैवोत्पादेन उत्पत्तिरस्तु भावत्वादुत्पादवदिति प्रतिपादयन्नाह—

**अथानुत्पाद उत्पन्नः सर्वमुत्पद्यते तथा ॥ १९ ॥**

इति ॥ १९ ॥ 10

अपि च । उत्पाद आत्मानं परांश्चोत्पादयतीत्यत्र पक्षे दूषणमेव न वक्तव्यमधुनास्माभिः । यस्मादत्र पक्षे दूषणम्—

**सतश्च तावदुत्पत्तिरसतश्च न युज्यते ।**
**न सतश्चासतश्चेति पूर्वमेवोपपादितम् ॥ २० ॥**

नैवासतो नैव सतः प्रत्ययोऽर्थस्य युज्यते । 15

इति

न सन्नासन्न सदसन् धर्मो निर्वर्तते यदा[1] ।

इत्यादिना उत्पादो निषिद्ध एव पूर्वम् । ततश्चैवमुत्पादे निषिद्धे उत्पद्यमानमुत्पाद उत्पादयति, स्वपरात्मानौ वा उत्पादयतीत्यस्याः कल्पनाया नास्त्येवावतार इति कुत एतत्प्रसेत्स्यति—उत्पाद उत्पद्यते, उत्पद्यमानमुत्पद्यते, स्वपरात्मानौ चोत्पादयतीति ॥ २० ॥ B 163 20

किं चान्यत्—इहायमुत्पादः परिकल्प्यमानः निरुध्यमानस्य अनित्यतानुगतस्य वर्तमानस्य वा भावस्य परिकल्प्यते, अनिरुध्यमानस्य वा अतीतानागतस्यानित्यताविरहितस्य ? उभयथा च नोपपद्यते इत्याह—

**निरुध्यमानस्योत्पत्तिर्न भावस्योपपद्यते ।**
**यश्चानिरुध्यमानस्तु स भावो नोपपद्यते ॥ २१ ॥** 25

तत्र निरुध्यमानस्य वर्तमानस्य विद्यमानत्वादुत्पादो नोपपद्यते । अनिरुध्यमानस्यापि विनाशरहितस्य अतीतानागतस्य भावलक्षणविलक्षणस्य खपुष्पस्येव नास्त्युत्पाद इति ॥ २१ ॥

एवं भावानामुत्पादाभावं प्रतिपाद्य अतःपरं स्थितिर्विचार्यते ॥

---

1. Mss. सदा for यदा.

अत्राह–विद्यत एव भावानामुत्पादः, तद्भावभाविधर्मसद्भावात्। नानुत्पन्नस्य स्थितिः संभवतीत्युत्पादभावेन स्थितेर्भावात्। स्थितिरुत्पादभावभाविनी भवति। तस्मादुत्पादोऽप्यस्ति, तद्भावभाविधर्मसद्भावात्[1]। इह यन्नास्ति, न तद्भावभाविधर्मसद्भावः, तद्यथा गगनकुसुमसौरभ्यस्येति। उच्यते। स्यादुत्पादः, यदि तद्भावभाविनी स्थितिरेव स्यात्। न त्वस्ति। तदेवम्–

B 164 5 **न स्थितभावस्तिष्ठत्यस्थितभावो न तिष्ठति।**
**न तिष्ठति तिष्ठमानः कोऽनुत्पन्नश्च तिष्ठति॥ २२॥**

तत्र स्थितं न तिष्ठति तत्र स्थितिक्रियानिरोधात्। अस्थितभावोऽपि न तिष्ठति स्थितिरहितत्वात्। तिष्ठमानमपि न तिष्ठति स्थितिद्वयप्रसङ्गात्, स्थितास्थितव्यतिरिक्तसंतिष्ठमानाभावाच्च। अपि च।

10 कोऽनुत्पन्नश्च तिष्ठति।

इहोत्पादप्रतिषेधात्कोऽसावनुत्पन्नः पदार्थो यस्तिष्ठेदिति सर्वथा नास्ति स्थितिः॥ २२॥

अपि च। इयं स्थितिर्निरुध्यमानस्य भावस्य स्यादनिरुध्यमानस्य वा? उभयथा च न युज्यते इति प्रतिपादयन्नाह–

**स्थितिर्निरुध्यमानस्य न भावस्योपपद्यते।**
15 **यश्चानिरुध्यमानस्तु स भावो नोपपद्यते॥ २३॥**

निरुध्यमानस्य निरोधाभिमुखस्य तावद्भावस्य विरोधिनी स्थितिर्न संभवति। यश्चाप्यनिरुध्यमानः स भाव एव न भवति, कुतस्तस्य स्थितिर्भविष्यति॥ २३॥

B 165 अपि च। जरसा मरणेन च सर्वे एव भावाः क्षणमपि न त्यज्यन्ते। यदा चैतदेवम्, तदा जरामरणविरोधिन्याः स्थितेर्भावेषु प्रवृत्त्यवकाश एव नास्तीति प्रतिपादयन्नाह–

20 **जरामरणधर्मेषु सर्वभावेषु सर्वदा।**
**तिष्ठन्ति कतमे भावा ये जरामरणं विना॥ २४॥**

के हि नाम जरामरणरहिता भावा येषां स्थितिः स्यात्? तस्मान्नास्त्येव स्थितिरित्यभिप्रायः॥ २४॥

यदि च, अस्याः स्थितेरन्या वा स्थितिः स्थित्यर्थं परिकल्प्येत, स्वयं वा स्वात्मानं स्थापयेत्। उभयथा च न युज्यते इत्याह–
25

**स्थित्यान्यया स्थितेः स्थानं तयैव च न युज्यते।**
**उत्पादस्य यथोत्पादो नात्मना न परात्मना॥ २५॥**

'अनुत्पन्नोऽयमुत्पादः स्वात्मानं जनयेत्कथम्?' (७.१३) इत्यादिना यथा उत्पाद आत्मानं न जनयति इत्युक्तम्, एवं स्थितिरपि नात्मानं स्थापयतीति वक्तव्यम्।

---

[1] Mss. उत्पादोऽप्यस्थितभाव° for उत्पादोऽप्यस्ति, तद्भाव°. T, seems to add after अस्ति, तस्मिन् सति सतो धर्मस्य सत्त्वात् as an explanation of तद्भावभाविधर्मसद्भावात्.

अस्थिता स्थितिरेषा चेत्स्वात्मानं स्थापयेत्कथम् ।
स्थिता चेत्स्थापयत्येषा स्थितायां स्थाप्यतेऽथ किम् ॥

इति योज्यम् । यथा च–

अन्य उत्पादयत्येनं यद्युत्पादोऽनवस्थितिः ।　　B 166

इत्युत्पादे व्याख्यातम्, एवं स्थितावपि व्याख्येयम्–　　5

अथान्या स्थापयत्येनां स्थितिर्यद्यनवस्थितिः ।

इति । एवं स्थितिरपि न युक्ता । अत एवोक्तं भगवता –

अस्थिता हि इमे धर्माः स्थितिश्चैषां न विद्यते ।
अस्थितिः स्थितिशब्देन स्वभावेन न विद्यते ॥
न स्थितिर्नापि चो जातिर्लोकनाथेन देशिता　　10
लोकनाथं विदित्वैवं समाधिं तेन जानथा ॥ इति ॥

उक्तं च आर्यसचर्यगाथासु[1]—

आकाशनिश्रित समास्त आपखन्धो
तन्निश्रिता इय मही पृथिवी जगच्च ।
सत्त्वान कर्मउपभोगनिदानमेवं　　15　B 167
आकाशधातु कृत चित्तम एतमर्थम् ॥

यावत्–

स्थानम्मयानु अयु धातु जिनेन उक्तो ॥

इति विस्तरः ॥ २५ ॥

अत्राह–विद्येते एव स्थित्युत्पादौ तत्सहचारिधर्मसद्भावात् । इह उत्पादस्थितिलक्षण- 20
सहचारिणी संस्कृतानामनित्यतास्ति । तस्मात्स्थित्युत्पादावपि स्तः इति । उच्यते । स्यात
स्थित्युत्पादौ, यदि अनित्यतैव स्यात् । न त्वस्ति । कथमिति ? यस्मात्–

**निरुध्यते नानिरुद्धं न निरुद्धं निरुध्यते ।**
**तथापि निरुध्यमानं किमजातं निरुध्यते ॥ २६ ॥**

यदि अनित्यतेति काचित्स्यात्, सा निरुद्धस्य भावस्य अनिरुद्धस्य वा निरुध्यमानस्य 25
वा स्यात् । तत्र निरुद्धं निरुध्यते इति न युक्तम्, अतीतवर्तमानयोर्विरोधात् । अनिरुद्धमपि न
युक्तम्, निरोधविरहितत्वात, यदनिरुद्धमेव तत्कथं निरुध्यत इति परस्परविरोधाच्च[2] । तथापि
निरुध्यमानं न निरुध्यते इत्यनेन संबन्धः । निरुध्यमानमपि न निरुध्यते निरुध्यमानाभावात्,　　B 168

---

१. T seems to read आर्यसंगीतिगाथासु for आर्यसचर्य°. २. The portion from तथापि up to परस्परविरोधाच्च is missing in Mss. It is restored from T.

निरोधद्वयप्रसङ्गाच्च । यतश्चैवं त्रिष्वपि कालेषु निरोधासंभवः, तस्मान्नास्त्येव निरोध इति कुतस्तत्सहचारिस्थित्युत्पादसंभवः स्यात्? अपि च। प्रागुत्पादप्रतिषेधादसंभव एव निरोधस्येत्याह--

किमजातं निरुध्यते ।

इति ॥ २६ ॥

5 अपि च। अयं निरोधः स्थितस्य वा भावस्य स्यादस्थितस्य वा ? उभयथा च न युज्यते इत्याह—

**स्थितस्य तावद्भावस्य निरोधो नोपपद्यते ।**

स्थितस्य निरोधविरुद्धस्य नास्ति निरोधः।

**नास्थितस्यापि भावस्य निरोध उपपद्यते ॥ २७ ॥**

10 अस्थितस्य अभावस्य अविद्यमानस्य निरोधो नास्ति, इति सर्वथा नास्ति निरोधः ॥२७॥

किं चान्यत्। यदि इह निरोधः स्यात्, स तयैवावस्थया तस्या एवावस्थायाः स्यादन्यया वा अन्यस्या अवस्थायाः स्यात्। सर्वथा च नोपपद्यते इति प्रतिपादयन्नाह—

B 169 **तयैवावस्थयावस्था न हि सैव निरुध्यते ।**
**अन्ययावस्थयावस्था न चान्यैव निरुध्यते ॥ २८ ॥**

15 तयैव तावत्क्षीरावस्थया सैव क्षीरावस्था न निरुध्यते, स्वात्मनि क्रियाविरोधात्। नाप्यन्यया दध्यवस्थया क्षीरावस्था निरुध्यते। यदि हि क्षीरदध्यवस्थयोर्यौगपद्यं स्यात्, स्यात्तयोर्विनाश्यविनाशकभावः। न तु दध्यवस्थायां क्षीरावस्था अस्ति। यदा च नास्ति, तदा कामसतीं विनाशयेत्? यदि विनाशयेत्, खरविषाणतीक्ष्णतामपि विनाशयेत्। तस्मादन्ययाप्यवस्थया नैवान्यावस्था निरुध्यते ॥ २८ ॥

20 अत्राह—यद्यपि तयैवावस्थया सैवावस्था, अन्यया वा अवस्थया अन्यावस्था न निरुध्यते, तथापि क्षीरावस्थायास्तावन्निरोधोऽस्ति, ततश्च उत्पादोऽपि स्यादिति। उच्यते। अहो बत अतिजडतामात्मनो भवान् प्रकटयति। ननु च पूर्वोक्तेन न्यायेन

**यदैवं सर्वधर्माणामुत्पादो नोपपद्यते ।**

इत्युक्तम्,

25 **तदैवं सर्वधर्माणां निरोधो नोपपद्यते ॥ २९ ॥**

इति स्फुटतरमेव प्रतिपादितं भवति ॥ २९ ॥

अपि च। निरोधो नाम यदि कश्चित् स्यात्, स सतो वा भावस्य स्यादसतो वा। तत्र—

B 170 **सतश्च तावद्भावस्य निरोधो नोपपद्यते ।**

स्वभावादप्रच्युतस्य भावस्य निरोधो न युक्तः। यस्मात्—

**एकत्वे न हि भावश्च नाभावश्चोपपद्यते ॥ ३० ॥**

निरोधो हि नाम अभावः । स यस्य भवति, स नैव भवति । ततश्च सतो भावस्य निरोध इति ब्रुवता भावाभावयोरेकाधिकरणता अभ्युपगता भवति । एकत्वे सति उभयं न युज्यते । यदि तदानीं भावः स्यात्, तदा निरोधेनाभावेनावेशोद्भावव्यपदेशोऽयुक्तः[1] । अथ अभावः, सोऽप्यस्य न युज्यते, अभावविरोधिना भावरूपेणावियोगात् । तस्मादेकत्वे सति भावाभावयोः स पदार्थो नैव भावो नाप्यभाव इति युज्यते । अथवा, परस्परविरुद्धत्वादालोकान्धकार- 5 वदेकत्वे सति न हि भावश्च नाभावश्चोपपद्यते । एवं तावत्सतो भावस्य निरोधो न युक्तः ॥ ३० ॥

इदानीम्—

**असतोऽपि न भावस्य निरोध उपपद्यते ।**

अविद्यमानस्याभावस्य न विनाशोऽस्ति वन्ध्यातनयस्येव, अविद्यमानत्वात् । अत एवाह—

**न द्वितीयस्य शिरसश्छेदनं विद्यते यथा ॥ ३१ ॥** 10

प्रसिद्धासत्त्वस्यैव नराणां[2] द्वितीयस्य शिरसो दृष्टान्तत्वेनोपादानान्निर्देशापूर्णत्वान्नास्तीति[3] नोपात्तम् । तदेवमसतो भावस्य निरोधो न संभवति, सतोऽपि न । यश्चोभयथापि न संभवति, स केनात्मना स्थितः ? नास्त्येव निरोध इति प्रतीयताम् ॥ ३१ ॥ B 171

किं चान्यत् । यदि निरोधो नाम भावानां निरोधक इति कल्प्यते, तस्येदानीं किमन्यो निरोध इष्यते, उत न ? यदि इष्यते तन्न युज्यते । 15

**न स्वात्मना निरोधोऽस्ति निरोधो न परात्मना ।**

कथं पुनर्नास्तीति प्रतिपादयन्नाह—

**उत्पादस्य यथोत्पादो नात्मना न परात्मना ॥ ३२ ॥**

तत्र यथा—

अनुत्पन्नोऽयमुत्पादः स्वात्मानं जनयेत्कथम् । 20

इत्यादिना उत्पादः स्वात्मानं नोत्पादयति, एवं निरोधोऽपि स्वात्मानं न निरोधयति । कथमिति ? उच्यते—

[4]अनिरुद्धो निरोधोऽयं स्वात्मानं नाशयेत्कथम् ।
अथ नष्टो नाशयति नष्टे किं नाश्यते पुनः ॥

इति सममुत्पादेन वक्तव्यम् । एवं च स्वात्मना न निरोधोऽस्ति । निरोध इदानीं परात्मनापि 25 नास्ति । कथम् ? तत्र यथा उत्पादे गदितम्—'अन्य उत्पादयत्येनम्' ( ७.१९ ) इत्यादि, एवं निरोधेऽपि वक्तव्यम्— B 172

---

[1] Mss. आवेशोद्भावव्यपदेशो युक्तः for आवेशाद्भावव्यपदेशोऽयुक्तः which is confirmed by T. [2] T seems to om. नराणां. [3] Mss. and P read दृष्टान्तत्वेनोपादानात्परिपूर्णतानिर्देशः सेति नोपात्तम्. Our text is confirmed by T. [4] This stanza and the following,- corresponding to 7:13 and 7·19, do not figure as part of the text of *Madhyamakakārikā* in T.

अन्यो विनाशयत्येनं नाशो यद्यनवस्थितिः ।
अथाविनाशो नष्टोऽयं सर्वं नश्यतु ते तथा ॥

इति । तदेवं परात्मनापि निरोधो न संभवतीति नास्ति निरोधस्य निरोधः ॥

अथ मन्यसे—नास्त्येव निरोधस्य निरोध इति, तदयुक्तम् । यदि हि निरोधस्य निरोधो न
5 स्यात, तदा निरोधरहितत्वात्संस्कृतलक्षणमवहीयते । तदेवं यदि विनाशस्य विनाशः परिकल्प्यते,
तथापि न युक्तो विनाशः । अथ न परिकल्प्यते, तथापि न युक्त इति । कथं त्विदानीं विनाशो
योक्ष्यते परस्य[1] ? अथ स्यात्—तथापि एवमेव विचारे सति विनाशो भवतोऽपि न युज्यते, ततः य
उभयोर्दोषः, न तेनैकश्चोद्यो भवतीति । उच्यते । नैवेदं चोद्यं ममापतति । किं कारणम्[2] ? ये
स्वात्मना निःस्वभावा भावाः, ते च निःस्वभावा एव सन्तो बालानामिदंसत्याभिनिवेशिनां
10 व्यवहारपथमुपयान्ति अविचारप्रसिद्धेनैव न्यायेनेति तेषु नास्ति यथोदितविचारावतारोऽस्माकम् ।
मायास्वप्नगन्धर्वनगरादिवत्तु लौकिकाः पदार्था निरुपपत्तिका एव सन्तः सर्वलोकस्याविद्या-
B 173 तिमिरोपहतमतिनयनस्य[3] प्रसिद्धिमुपगता इति परस्परापेक्षयैव केवलं प्रसिद्धिमुपगता बालैरभ्युप-
गम्यन्ते । यथोक्तं शतके—

अलातचक्रनिर्माणस्वप्नमायाम्बुचन्द्रकैः ।
15 धूमिकान्तःप्रतिश्रुत्कामरीच्यभ्रैः समो भवः ॥
(चतुःशतक—१३.२५)

तस्मात्सति उत्पादे उत्पाद्यम्, सति उत्पाद्ये उत्पादः । सति निरोधे निरोध्यम्, सति
निरोध्ये निरोधः, इत्येवं लौकिकस्य व्यवहारस्याभ्युपगमात्कुतोऽस्मत्पक्षे समप्रसङ्गिता भवितुमर्हति ?

यस्तु विनाशस्य अहेतुकत्वमभ्युपेत्य क्षणिकतां संस्काराणामाह, तस्य निर्हेतुकत्वात्
खपुष्पवद्विनाशाभावात् कुतः क्षणिकत्वं भावानां सेत्स्यति, कुतो विनाशरहितानां संस्कृतत्वमपीति
20 सर्वमेव असमञ्जसं तस्य जायते । जातिप्रत्ययं जरामरणं संस्कृतलक्षणानां च संस्कारस्कन्धान्तर्भावं
वर्णयता भगवता ननु सहेतुकत्वं स्पष्टमादर्शितं विनाशस्य । जातिमात्रापेक्षत्वाच्चास्य क्षण-
भङ्गोऽपि सुखसाध्य इति सर्वं सुस्थं जायते ॥

B 174 अथ स्यात्—विनाशो हि नाम अभावः, यश्च अभावः, किं तस्य हेतुना कर्तव्यम् ?
अतो निर्हेतुको विनाश इति । ननु च भावेऽपि हेत्वभावप्रसङ्गो भवति । भावो हि नाम
25 विद्यमानः, यश्च विद्यमानः तस्य[4] च किं हेतुना प्रयोजनम् ? न हि जातं पुनरपि जन्यते ।
तस्मात्सर्वत्रैव हेत्वभावप्रसङ्गादयुक्तमेतत् ॥

अपि च । यथा उत्पादः सहेतुकः पूर्वमभावात्पश्चाच्च भावात्, एवं विनाशोऽपीष्यताम् ।
विनाशो हि न सर्वदा भवति, उत्पादात्पूर्वमभावात्पश्चाच्च भावात् । यच्चोच्यते—यश्चाभावः तस्य

---

१ Mss. परस्परम् for परस्य which is confirmed by T. २ T seems to om. किं कारणम्.
३ Mss. °मलिनचेतसः for °मतिनयनस्य which is confirmed by T. ४ T and P तस्यैव किं for तस्य च किं.

किं हेतुना कर्तव्यमिति, तदयुक्तम्। यस्मान्न वयं विनाशस्य हेतुना किंचित्क्रियमाणमिच्छामः, किं तर्हि विनाश एव क्रियते इति वर्णयामः। नन्वेवं सति क्रियमाणत्वाद्विनाशोऽपि भावः प्राप्नोतीति चेत्, इष्यत एवैतत्। विनाशो हि स्वरूपापेक्षया भावः, रूपादिधर्मनिवृत्तिस्वभावत्वात्तु न भावः। अपि च। मरणमपि द्विविधकार्यप्रत्युपस्थापनं संस्कारविध्वंसनं च करोति। अपरिज्ञानानुपच्छेदं (?) चेत्यागमात् कथं न सहेतुको विनाशः? अपि च। कल्पिताभावलक्षणायाश्च शून्यतायाः परेण 5 B 175 भावरूपतामभ्युपगच्छता कथमभावस्य भावत्वं नाभ्युपगतं भवति? भावत्वाच्च कथमसंस्कृतत्वं शून्यतायाः स्यात्? अतः सर्वमभ्युपेतं विहीयते भवता। अत एव वक्ष्यति—

भवेदभावो भावश्च निर्वाणमुभयं कथम्।
न संस्कृतं हि निर्वाणं भावाभावौ च संस्कृतौ ॥

[म० शा०–२५·१३]

इत्यलं प्रसङ्गेन। प्रकृतमेव व्याख्यास्यामः ॥ ३२ ॥ 10

अत्राह—यदि उत्पादस्थितिभङ्गाः संस्कृतस्य निषिद्धाः, तथापि संस्कृतमस्ति विशेषलक्षणयुक्तम्। तथाहि काठिन्यादिकं सास्नादिकं[1] च तस्य विशेषलक्षणमुपदिश्यते। तस्मात्संस्कृतस्य B 176 सद्भावात्तल्लक्षणमप्यस्तीति। उच्यते। स्यादेवं यदि संस्कृतमेव वस्तु स्यात्। कुतः? यस्मात्—

**उत्पादस्थितिभङ्गानामसिद्धेर्नास्ति संस्कृतम्।**

यदा यथोक्तेन न्यायेन उत्पादस्थितिभङ्गा एव निषिद्धाः, तदा कुतः संस्कृतं वस्तु 15 तद्विशेषलक्षणमप्यस्तीति ॥

अत्राह—विद्यत एव संस्कृतम्, तत्प्रतिपक्षासंस्कृतसद्भावात्। उच्यते। स्यादेतदेवम्, यदि असंस्कृतमेव स्यात्। यस्मात्—

**संस्कृतस्याप्रसिद्धौ च कथं सेत्स्यत्यसंस्कृतम् ॥ ३३ ॥**

अत्रैके आकाशप्रतिसंख्यानिरोधनिर्वाणान्यसंस्कृतानीति कल्पयन्ति। अपरे शून्यतां 20 तथतालक्षणामसंस्कृतां परिकल्पयन्ति। तदेतत्सर्वं संस्कृतस्याप्रसिद्धौ सत्यां नास्त्येवेति स्पष्टमादर्शितम् ॥ ३३ ॥

अत्राह—यदि उत्पादस्थितिभङ्गा न सन्तीत्यवधारितम्, यत्तर्हि इदमनावरणज्ञानिना B 177 मुनिना—

"संस्कृतस्य भिक्षवः उत्पादोऽपि प्रज्ञायते, व्ययोऽपि, स्थित्यन्यथात्वमपि" 25

[=अङ्गुत्तर–१; मज्झिम]

इत्युदाहृतम्, तत्कथं वेदितव्यमिति? उच्यते—

**यथा माया यथा स्वप्नो गन्धर्वनगरं यथा।**
**तथोत्पादस्तथा स्थानं तथा भङ्ग उदाहृतम् ॥ ३४ ॥**

---

१. Mss. om. सास्नादिकं which is found in T.

यथा मायादयः स्वभावेनानुत्पन्ना अविद्यमाना मायादिशब्दवाच्या मायादिविज्ञानगम्याश्च लोकस्य, एवमेतेऽपि लोकप्रसिद्धिमात्रेण उत्पादादयः स्वभावेन अविद्यमाना अपि भगवता तथाविधविनेयजनानुग्रहचिकीर्षुणा निर्दिष्टा इति । अत एवोक्तम्—

B 178 त्वक्स्नायुमांसास्थिसमुच्छ्रये च
5 उत्पाद्य संज्ञां मम पत्निरेषा ।
मूढा हि बाला जनयन्ति रागं
स्त्रियो न जानन्ति यथैव मायाम् ॥
यथा कुमारी सुपिनान्तरस्मिं
सा पुत्र जातं च मृतं च पश्यति ।
10 जातेऽतितुष्टा मृति दौर्मनस्थिता
तथोपमान् जानथ सर्वधर्मान् ॥

[समाधिराजसूत्र—९·१७]

यथैव गन्धर्वपुरं मरीचिका
यथैव माया सुपिनं यथैव ।
स्वभावशून्या तु निमित्तभावना
15 तथोपमान् जानथ सर्वधर्मान् ॥

[समाधिराजसूत्र—९·११]

B 179 संस्कृतासंस्कृतधर्मविविक्ता[1]
नास्ति विकल्पन तेषमृषीणाम् ।
सर्वगतीषु असंस्कृतप्राप्ता
दृष्टिगतेहि सदैव विविक्ता ॥
20 नित्यमरक्त अदुष्ट अमूढाः
तस्य सभावसमाहितचित्ता ।
एष समाधिबली बलवन्तो
यो इमु जानति शून्यकधर्मान् ॥ इति ॥ ३४ ॥

[समाधिराजसूत्र—३७·२७—२८]

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
25 संस्कृतपरीक्षा नाम सप्तमं प्रकरणम् ॥

---

१. P संस्कृतासंस्कृतसर्वविविक्ता for the line.

## कर्मकारकपरीक्षा अष्टमं प्रकरणम् ।

अत्राह — विद्यन्त एव संस्कृतस्वभावतो विज्ञानादयः संस्कृता धर्माः, तद्धेतुककर्मकारकसद्भावात् । उक्तं हि भगवता — B 180

अविद्यानुगतोऽयं भिक्षवः पुरुषपुद्गलः पुण्यानपि संस्कारानभिसंस्करोति, अपुण्यानपि, आनिञ्ज्यानपि संस्कारानभिसंस्करोति ।

इत्यादिना कर्मणां कारको व्यपदिष्टः, तत्कर्मफलं च विज्ञानादिकमुपदिष्टम् । यस्य च कारकोऽस्ति, तदस्ति, तद्यथा घटः[1] । यन्नास्ति, न तस्य कारकः, तद्यथा कूर्मरोमप्रावारस्येति । उच्यते । स्याद्विज्ञानादिकं संस्कृतं यदि तस्य निष्पादककर्मकारकौ स्याताम् । न तु स्तः । यस्मात् — 5

**सद्भूतः कारकः कर्म सद्भूतं न करोत्ययम् ।**
**कारको नाप्यसद्भूतः कर्मासद्भूतमीहते ॥ १ ॥** 10

तत्र करोतीति कारकः कर्ता । कुर्वाणस्यैव किंचित् कारकव्यपदेशो नाकुर्वाणस्य । तच्च करणं सद्भूतस्य वा कर्तुः परिकल्प्येत, असद्भूतस्य वा, सदसद्भूतस्य वा? क्रियते इति कर्म कर्तुरीप्सिततमम् [पा० १·४·४९] । तदपि त्रिविधम्, सद्भूतमसद्भूतं सदसद्भूतं च । तत्र सद्भूतः कारकः क्रियायुक्तः सद्भूतं क्रियायुक्तं कर्म न करोतीत्येका प्रतिज्ञा । इदानीमसद्भूतोऽपि क्रियाकारकरहितोऽसद्भूतं क्रियारहितं कर्म न करोतीत्यपरा प्रतिज्ञा ॥ १ ॥ B 181 15

तत्राद्यां प्रसाधयितुमाह—

**सद्भूतस्य क्रिया नास्ति कर्म च स्यादकर्तृकम् ।**

क्रियानिबन्धनत्वात्कारकव्यपदेशस्य, करोति क्रियायुक्त एव कश्चित्सद्भूतः कारकव्यपदेशं लभते, ततश्च तस्यैवंविधस्य क्रियाहेतुकलब्धकारकव्यपदेशस्य अपरा क्रिया नास्ति यया कर्म कुर्यात् । क्रियाभावाच्च यदा कारकः कर्म न करोति, तदा कारकनिरपेक्षमकर्तृकं कर्म स्यात् । न चाकर्तृकं कर्म संभवति वन्ध्यासूनोरिव घटकरणमिति । एवं तावत् 20

सद्भूतस्य क्रिया नास्ति कर्म च स्यादकर्तृकम् ।

इति दोषप्रसङ्गात् सद्भूतः कारकः कर्म न करोति ।

इदानीं सद्भूतमपि कर्म कारको न करोतीति प्रतिपादयन्नाह —

**सद्भूतस्य क्रिया नास्ति कर्ता च स्यादकर्मकः ॥ २ ॥** 25

सद्भूतं नाम कर्म क्रियायुक्तम् । तस्येदानीं क्रियानिबन्धनलब्धकर्मव्यपदेशस्य अपरा क्रिया नास्ति यया कर्म क्रियेतेति । एवं तावत्सद्भूतस्य कर्मणः क्रिया नास्ति । यदा नास्ति परा क्रिया, तदा कारकस्तत्सद्भूतं कर्म नैव करोति । यदा च न करोति कर्मणो द्वितीयक्रियाभावात्, तदा

---

१. Mss. घद्यः for घटः.

अकर्मक एव अविद्यमानकर्मक एव तस्य कर्मणः कारकः स्यात्। न चैतद्युक्तम्। न हि अकृतानन्तर्यकर्मणः आनन्तर्यकर्मकारकत्वं दृष्टमिति ॥ २ ॥

B 182 एवं सद्भूतः कारकः सद्भूतं कर्म न करोति इति संसाध्य इदानीं यथा असद्भूतमपि कर्म असद्भूतः कारको न करोति तथा प्रतिपादयन्नाह—

5 **करोति यद्यसद्भूतोऽसद्भूतं कर्म कारकः।**
**अहेतुकं भवेत्कर्म कर्ता चाहेतुको भवेत् ॥ ३ ॥**

असद्भूतः कारको यः क्रियारहितः। क्रिया च कारकव्यपदेशे हेतुरिति क्रियारहितः कारकोऽपि निर्हेतुकः स्यात्। कर्माप्यसद्भूतं निर्हेतुकं स्यात् ॥ ३ ॥

सति च अहेतुकवादाभ्युपगमे कार्यं च कारणं च सर्वमपोदितं स्यादित्याह—

10 **हेतावसति कार्यं च कारणं च न विद्यते।**

सत्येव हि हेतोरभ्युपगमे हेतुना यन्निष्पाद्यते तत् कार्यम्, तस्य च यो निष्पादकः, तत्कारणमिति युज्यते। तद्यथा घटस्य मृद्[1] हेतुः, घटः कार्यम्, तस्य च चक्रादयः सहकारिकारणम्। अहेतुकवादाभ्युपगमे तु हेत्वनपेक्षत्वान्मण्डूकजटाशिरोमणिमयघटवन्न[2] स्यादयं घटः। [3]असति घटे कुतस्तत्कारणमिति। एवम्—

15 हेतावसति कार्यं च कारणं च न विद्यते।

ततश्च—

**तदभावे क्रिया कर्ता करणं च न विद्यते ॥ ४ ॥**

B 183 तदभावे कार्यकारणाभावे, किं कुर्वाणस्य क्रिया संभवेत्, कस्यां वा क्रियायां कुम्भकारस्य स्वातन्त्र्यात्कर्तृत्वं स्यात्? न चापि मृदां तादात्म्यप्रवृत्त्या साधकतमत्वेन करणत्वं युज्यत इति।

20 एवं तावत्—

तदभावे क्रिया कर्ता करणं च न विद्यते ॥

ततश्च—

**धर्माधर्मौ न विद्येते क्रियादीनामसंभवे।**

इह यदा देवदत्तः प्राणातिपातविरतिक्रियास्वातन्त्र्यात्कर्ता सन् स्वतन्त्रकार्येण करण-

25 भूतेन प्राणातिपातविरतिक्रियां करोति, तदास्य धर्म उपजायते। एवं दशस्वपि कुशलेषु कर्मपथेषु कुशलक्रियानिष्पाद्येषु रत्नत्रयमातापितृतदन्यपूज्यपूजादिलक्षणेषु च कुशलधर्मप्रारम्भेषु योज्यम्। एवमधर्मेऽपि प्राणातिपातादिलक्षणे कुशलविपर्ययेण क्रियाकर्तृकरणानामभावे सति कर्मणामभावप्रसङ्ग उद्भावनीयः ॥

यदा चैवं धर्माधर्मौ न संभवतः, तदा तत्फलमपि नास्त्येवेति प्रतिपादयन्नाह—

---

१. Mss. मृदा for मृद्. २. T आकाशपुष्प° for मण्डूकजटाशिरोमणि°. ३. Mss. सति for असति.

**धर्मे चासत्यधर्मे च फलं तज्जं न विद्यते॥ ५॥**

धर्माधर्मजनितमिष्टानिष्टफलं सुगतिदुर्गत्योर्धर्माधर्मयोरभावे सति न स्यात्॥ ५॥

ततश्च—

**फलेऽसति न मोक्षाय न स्वर्गायोपपद्यते।**
**मार्गः** 5

यदि हि फलमिष्टानिष्टं स्यात, स्याल्लौकिकस्य मार्गस्य ध्यानारूप्यसमाधिसमापत्तिलक्षणं स्वर्गः, तदानीं तदर्थं लौकिकमार्गभावना ज्यायसी स्यात्, कुगतिगमनकर्मपथविरतिसाफल्यं च स्यात्। यदि च मोक्षलक्षणं निर्वाणं फलं स्यात्, तदर्थं लोकोत्तरार्याष्टाङ्गमार्गभावनासाफल्यं स्यात्। यदा तु फलं नास्ति, तदा— B 184

फलेऽसति न मोक्षाय न स्वर्गायोपपद्यते। 10

मार्गः।

किं च। एवं फलाभावे सति—

**सर्वक्रियाणां च नैरर्थक्यं प्रसज्यते॥ ६॥**

या अपि ह्येताः कृषिवाणिज्यवल( भृति ? )गतादिकाः क्रियाः फलार्थं प्रारभ्यन्ते, ता अपि सर्वाः फलाभावे सति नोपपद्यन्त इति। एवं सर्वक्रियाणां नैरर्थक्यं प्रसज्यते भवताम्। न चासां नैरर्थक्यम्। तस्मान्निरवशेषदोषविषवृक्षाकरभूतोऽयं स्वर्गापवर्गापवादी नरकादिर्महापाय-प्रपातवर्तनहेतुः दृष्टादृष्टहेतुपदार्थविरोधीति कृत्वा, सद्भिः असद्भूतः कारकोऽसद्भूतं कर्म करोतीति पक्षो निकृष्ट एवेति त्याज्यः॥ ६॥ 15 B 185

तदेवं प्रतिज्ञाद्वयं संसाध्य इदानीमुभयरूपः कारकः, उभयरूपमपि कर्म न करोतीत्याह— 20

**कारकः सदसद्भूतः सदसत्कुरुते न तत्।**

तत्र यदेतदसद्भूतं कर्म क्रियायुक्तमक्रियायुक्तं च, तत् सदसद्भूतः कारको न करोतीति। यस्मात्—

**परस्परविरुद्धं हि सच्चासच्चैकतः कुतः॥ ७॥**

एकः पदार्थः एकस्मिन् काले क्रियायुक्तश्चाक्रियायुक्तश्चेति न युज्यत एवैतत्। ततश्च सदसद्भूतोऽपि कारकः सदसद्भूतं कर्म न करोति, अविद्यमानत्वादित्यभिप्रायः॥ ७॥ 25

एवं समे पक्षे दूषणमुद्भाव्य विषमपक्षस्यापि निराचिकीर्षया आह—

---

१. T om. इष्टानिष्टं. २. T om. कुगतिगमनकर्मपथविरतिसाफल्यं च स्यात्. ३. T om. °साफल्यं. ४. T om. °विषवृक्ष° ५. Mss. सन्मार्गापवर्गावादी for स्वर्गापवर्गापवादी which is confirmed by T. ६. T om. °वर्तन°. ७. Mss. न हि for न तत्.

**सता च क्रियते नासन्नासता क्रियते च सत् ।**
**कर्त्रा**

सता सद्भूतेन तावत्कर्त्रा क्रियायुक्तेन असद्भूतमसदक्रियायुक्तं कर्म न क्रियते । यस्मात्—

**सर्वे प्रसज्यन्ते दोषास्तत्र त एव हि ॥ ८ ॥**

B 186 5 सद्भूतस्य क्रिया नास्ति कर्म च स्यादकर्तृकम् । [ ८.२ ]

इत्येवं तावत् सद्भूतः कारकः कर्म न करोति, नाप्यसद्भूतं कर्म क्रियते । असद्भूतं हि कर्म अहेतुकं भवेत् । ततश्च—

हेतावसति कार्यं च कारणं च न विद्यते । [ ८.४ ]

इत्यादिना सर्वं दूषणमापद्यते । तस्मात्पूर्वोक्तैरेव हेतुभिर्दूषितत्वादस्य विषमपक्षस्य न 10 पुनर्हेतोरुपादानमनुष्ठीयते । यथा चैतत् सता कर्त्रा असत्कर्म न क्रियते इति प्रतिपादितम्, एवमसता कर्त्रा अक्रियायुक्तेन सत्कर्म न क्रियते इति व्याख्येयमुक्तपथानुसारेण ॥ ८ ॥

एवं तावद्विषमपक्षे एकैकपदपरामर्शेन दूषणमभिधाय इदानीमेकैकस्य पदस्य पदद्वय-परामर्शेन दूषणाभिधानमाह—

**नासद्भूतं न सद्भूतः सदसद्भूतमेव वा ।**
15 **करोति कारकः कर्म पूर्वोक्तैरेव हेतुभिः ॥ ९ ॥**

स कारकः सद्भूतः असद्भूतं कर्म सदसद्भूतमेव वा न करोतीति । कथमित्याह — पूर्वोक्तैरेव हेतुभिरिति । तत्र 'सद्भूतस्य क्रिया नास्ति' इत्यादिना सद्भूतः कारको न करोति । असद्भूतमपि कर्म न क्रियते 'अहेतुकं भवेत्कर्म' 'हेतावसति कार्यं च' इत्यादिना विहितदोषात् । सदसद्भूत-मपि कर्म न क्रियते—

20 परस्परविरुद्धं हि सच्चासच्चैकतः कुतः [ ८.७ ]

इति वचनात् । एवं तावत्सद्भूतः कारकोऽसद्भूतं सदसद्भूतं च कर्म न करोति ॥ ९ ॥

B 187 इदानीमसद्भूतोऽपि कारकः सद्भूतं कर्म सदसद्भूतं च कर्म न करोतीत्याह—

**नासद्भूतोऽपि सद्भूतं सदसद्भूतमेव वा ।**
**करोति कारकः कर्म पूर्वोक्तैरेव हेतुभिः ॥ १० ॥**

25 असद्भूतः कारको निर्हेतुको भवेत् । 'हेतावसति कार्यं च', इत्यादिना उक्तदोषादसद्भूतः कारको न करोति ।

सद्भूतस्य क्रिया नास्ति कर्ता च स्यादकर्मकः । [ ८.२ ]

इति प्रसङ्गात् सद्भूतं कर्म न क्रियते । सदसद्भूतमपि कर्म न क्रियते,

परस्परविरुद्धं हि सच्चासच्चैकतः कुतः । [ ८.७ ]

30 इति वचनात् ॥ १० ॥

इदानीं सदसद्भूतोऽपि कारकः एकैक एवोभयरूपः सन् यथा सद्भूतमसद्भूतं च भिन्नसंकेतं कर्म न करोति तथा प्रतिपादयन्नाह—

**करोति सदसद्भूतो न सन्नासच्च कारकः।**
**कर्म तत्तु विजानीयात्पूर्वोक्तैरेव हेतुभिः॥ ११॥**

परस्परविरुद्धं हि सच्चासच्चैकतः कुतः। [८·७]　　5　B 188

इति वचनात्सदसद्भूतः कारको न करोति।

सद्भूतस्य क्रिया नास्ति कर्ता च स्यादकर्मकः। [८·२]

इति प्रसङ्गात्सद्भूतं कर्म न क्रियते। असद्भूतमपि कर्म अहेतुकं 'हेतावसति कार्यं च' इत्यादिनोक्तदोषान्न क्रियते। यतश्चैवं समपक्षेषु विषमपक्षेषु च कर्तुः कर्मणश्च सर्वथा सिद्धिरयुक्ता, तस्माद्यदुक्तं विद्यन्त एव विज्ञानादयः संस्कृता धर्माः संस्कृतस्वभावाः तद्धेतुककर्मकारकसद्भावादिति, तदयुक्तम्॥　　10

अत्राह—किमवधारितमेतद्भवता न सन्ति भावा इति? न हि। भवतस्तु सस्वभाववादिनः स्वभावस्य भावानां वैधुर्यात्सर्वभावापवादः संभाव्यते। वयं तु प्रतीत्योत्पन्नत्वात्सर्वभावानां स्वभावमेवनोपलभामहे, तत्कस्यापवादं करिष्यामः? यथोक्तमार्यरत्नावल्याम्—

मरीचि तोयमित्येतदिति मत्वागतोऽत्र सन्।[1]　　15
यदि नास्तीति तत्तोयं गृह्णीयान्मूढ एव सः॥
मरीचिप्रतिमं लोकमेवमस्तीति गृह्णतः।
नास्तीति चापि मोहोऽयं सति मोहे न मुच्यते॥
अज्ञानकल्पितं पूर्वं पश्चात्तत्त्वार्थनिर्णये।
यदा न लभते भावमेवाभावस्तदा कुह॥ इति॥ ११॥

तदेवं निःस्वभावानां सर्वभावानां कुतो यथोक्तप्रकारसिद्धिः? तस्माल्लौकिकं विपर्यासमभ्युपेत्य सांवृतानां पदार्थानां मरीचिकाजलकल्पानामिदंप्रत्ययतामात्राभ्युपगमेनैव प्रसिद्धिर्नान्येनेत्याह—　　20　B 189

**प्रतीत्य कारकः कर्म तं प्रतीत्य च कारकम्।**
**कर्म प्रवर्तते, नान्यत्पश्यामः सिद्धिकारणम्॥ १२॥**　　25

इह अकुर्वाणस्य कर्मनिरपेक्षस्य कारकत्वाभावात् कर्मपेक्ष्य कारकस्य कारकत्वं भवति। कारकेण[2] चाक्रियमाणस्य कस्यचित्कर्मत्वाभावात् क्रियमाणस्यैव कर्मव्यपदेशात्, तं कारकं प्रतीत्य कर्म प्रवर्तते इत्येवं कर्मकारकयोः परस्परापेक्षिकीं सिद्धिं मुक्त्वा नान्यत्सिद्धिकारणं पश्यामः॥ १२॥

यथा च कर्मकारकयोः परस्परापेक्षिकी सिद्धिः, एवमन्येषामपि भावानामित्यतिदिशन्नाह—

---

१. Mss. परिचिन्तोयं for मरीचिं तोयं which is confirmed by T. २. Mss. कारणेन for कारकेण which is confirmed by T.

एवं विद्यादुपादानं व्युत्सर्गादिति कर्मणः ।
कर्तुश्च

एवमित्यनेन अनन्तरां कर्मकारकप्रज्ञप्तिं दर्शयति । उपात्तिरुपादानम् । अनेन चोपात्तिक्रियामाह । सा च स्वसाधनं कर्तारमुपादातारं कर्म चोपादानं संनिधापयति । तयोश्च उपादेयोपा-
5 दात्रोः परस्परापेक्षयोः कर्मकारकवदेव सिद्धिर्न स्वाभाविकी । कस्मात्पुनः स्वाभाविकी न भवति
B 190 इत्याह – व्युत्सर्गादिति कर्मणः, कर्तुश्चेति । इतिशब्दो हेतुपरामर्शी । व्युत्सर्गो व्युदासः । ततश्च अयमर्थ उपपद्यते – यैरेव हेतुभिः कर्मणश्च व्युत्सर्गोऽस्माभिरुक्तः, तैरेव हेतुभिः उपादाता उपादेयं च प्रतिषिद्धं वेदितव्यम् । न च केवलमनयोरन्योन्यापेक्षिकी सिद्धिः कर्तुश्च कर्मणश्च प्रतिषेधेनावसेया, अपि च

10 कर्मकर्तृभ्यां शेषान् भावान् विभावयेत् ॥ १२ ॥

प्राज्ञ इति वाक्यशेषः । कर्मकारकोपादेयोपादातृव्यतिरिक्ता येऽन्ये भावा जन्यजनकगन्तृगमनद्रष्टव्यदर्शनलक्ष्यलक्षणोत्पाद्योत्पादकाः, तथा[२] अवयवावयविगुणगुणिप्रमाणप्रमेयादयो निरवशेषा भावाः, तेषां कर्तृकर्मविचारेण स्वभावतोऽस्तित्वं प्रतिषिध्य परस्परापेक्षिकीमेव सिद्धिं प्राज्ञो निर्मुमुक्षुर्जातिजरामरणादिबन्धनेभ्यो मोक्षाय विभावयेत् ॥

15 एषां च विस्तरेण विचारो मध्यमकावतारादिभ्योऽवसेयः ॥

ननु च शेषान् भावान् विभावयेदित्यनेनैव उपादानोपादात्रोरधिगतत्वादुपादानोपादानं पुनरयुक्तम् । सत्यमेतत् । तथापि तत्त्वविचारे प्राधान्यज्ञापनार्थमुपादानोपादात्रोर्भेदेनोपादानम्,
B 191 तथा हि उत्तरेषु प्रकरणेषु भूयसा अनयोरेव विचारो भविष्यतीति । अत एवोक्तं भगवता आर्योपालिपरिपृच्छायाम्—

20 भय[३] दर्शित नैरयिकं मे सत्त्वसहस्र सवेजित नैके ।
न च विद्यति कश्चिह सत्त्व यो च्युतु गच्छति घोरमपायम् ॥
न च कारकु कारणं सन्ति येहि कृता असितोमरशस्त्राः ।
कल्पवशेन तु पश्यति तत्र कायि पतन्ति अपायित शस्त्राः ॥
चित्रमनोरम सज्जितपुष्पाः स्वर्णविमान जलन्ति मनोज्ञाः ।
25 तेष्वपि कारकु नास्तिह कश्चि तेऽपि च स्थापित कल्पवशेन ॥
कल्पवशेन विकल्पितु लोकः संज्ञगहेण विकल्पितु बालः ।
B 192 सो च गहो अगहो असभूतो मायमरीचिसमा हि विकल्पाः ॥ इति ॥ १३ ॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
कर्मकारकपरीक्षा नाम अष्टमं प्रकरणम् ॥

---

१. Mss. विद्यानुपादानं for विद्यादुपादानं. २. Mss. अथ for तथा which is confirmed by T. ३ This very citation occurs in chapter I on page 18.

९

## पूर्वपरीक्षा नवमं प्रकरणम् ।

अत्राह — यदुक्तम् — 'एवं विद्यादुपादानं व्युत्सर्गादिति कर्मणः । कर्तुश्च' [८·१३] इति, तदयुक्तम् । यस्मात् — B 193

**दर्शनश्रवणादीनि वेदनादीनि चाप्यथ ।**
**भवन्ति यस्य प्रागेभ्यः सोऽस्तीत्येके वदन्त्युत ॥ १ ॥** 5

यस्य उपादातुः दर्शनश्रवणघ्राणरसनादीनि वेदनास्पर्शमनस्कारादीनि च भवन्ति, स उपादाता पूर्वमेभ्य उपादानेभ्योऽस्तीति सांमितीया वदन्ति ॥ १ ॥

किं कारणम् ? यस्मात् —

**कथं ह्यविद्यमानस्य दर्शनादि भविष्यति ।**
**भावस्य तस्मात्प्रागेभ्यः सोऽस्ति भावो व्यवस्थितः ॥ २ ॥** 10

इह विद्यमान एव देवदत्तो धनोपादानं कुरुते नाविद्यमानो वन्ध्यातनयः । एवं यदि तावत्पुद्गलो दर्शनादिभ्यः पूर्वं व्यवस्थितो न स्यात्, नासौ दर्शनादिकस्योपादानमकरिष्यत् । तस्मादस्ति असौ धनात्प्रागेव स्थितदेवदत्तवत् दर्शनादिभ्यः पूर्वं पुद्गलो योऽस्य उपादानं करिष्यतीति ॥ २ ॥ B 194

उच्यते — 15

**दर्शनश्रवणादिभ्यो वेदनादिभ्य एव च ।**
**यः प्राग्व्यवस्थितो भावः केन प्रज्ञप्यतेऽथ सः ॥ ३ ॥**

यौऽसौ पुद्गलो दर्शनादिभ्यः पूर्वमस्तीति व्यवस्थाप्यते, स केन प्रज्ञप्यताम् ? पुद्गलप्रज्ञप्तेर्हि दर्शनादिकं कारणम् । स यदि तेभ्यः प्राग्व्यवस्थितोऽस्तीति कल्प्यते, तदा दर्शननिरपेक्षः स्याद् घटादिव पटः । यश्च स्वकारणनिरपेक्षः स निर्हेतुको धनादिनिरपेक्षः 20 धनिकवन्नास्तीत्यभिप्रायः ॥ ३ ॥

किं चान्यत् —

**विनापि दर्शनादीनि यदि चासौ व्यवस्थितः ।**
**अमून्यपि भविष्यन्ति विना तेन न संशयः ॥ ४ ॥**

यदि मन्यसे — दर्शनादिभ्यः पूर्वं पुद्गलो नामास्ति, स दर्शनादिकमुपादानमुपादत्ते इति । 25 नन्वेवं सति निरस्तसंशयममून्यपि दर्शनादीनि विना पुद्गलेन भविष्यन्ति । तथाहि देवदत्तो धनसंबन्धात्पूर्वं धनव्यतिरिक्तो व्यवस्थितः सन् अर्थान्तरभूतमेव पृथक्सिद्धं धनमुपादत्ते । एवमुपादातुरपि स्वात्मव्यतिरेकेणार्थान्तरभूतं दर्शनादिकमुपादानं स्यात् ॥ ४ ॥

न तु संभवतीत्याह — 30 B 195

**अज्यते केनचित्कश्चित् किंचित्केनचिदज्यते ।**
**कुतः किंचिद्विना कश्चित् किंचित्कंचिद्विना कुतः ॥ ५ ॥**

इह बीजाख्येन कारणेन किंचित्कार्यमभिव्यज्यतेऽङ्कुराख्यम्, तेन च कार्येण किंचित् कारणमभिव्यज्यते बीजाख्यम्—अस्येदं कारणमिदमस्य कार्यमिति। एवं यदि केनचिद्दर्शनादिके-नोपादानेन कश्चिदात्मस्वभावोऽभिव्यज्यते अस्यायमुपादातेति, केनचिच्चात्मना किंचिदुपादानं दर्शनादिकमभिव्यज्यते इदमस्योपादानमिति, तदानीं स्यात्परस्परापेक्षयोरुपादानोपादात्रोः सिद्धिः।
5 यदा तु उपादातारं विना पृथक् सिद्धं दर्शनादिकमभ्युपगम्यते, तदा तन्निराश्रयमसदेव। तस्मान्नास्त्युभयोरपि सिद्धिः, इति न युक्तमेतत्—दर्शनादिभ्यः पृथगवस्थित उपादातेति ॥ ५ ॥

अत्राह—यदुक्तं दर्शनश्रवणादिभ्य इत्यादि, अत्रोच्यते। यदि सर्वेभ्यो दर्शनादिभ्यः प्रागवस्थित इत्यभ्युपगतं स्यात्, स्यादेष दोषः। यदा तु—

**सर्वेभ्यो दर्शनादिभ्यः कश्चित्पूर्वो न विद्यते।**

10 किं तर्हि एकैकस्मात्पूर्वो विद्यते। यदा चैवम्, तदा—

**अज्यते दर्शनादीनामन्येन पुनरन्यदा ॥ ६ ॥**[1]

यदा दर्शनेन द्रष्टेत्यभिव्यज्यते, न तदा श्रवणादीन्युपादाय प्रज्ञप्यते, ततश्च पूर्वोक्त-दोषानवसर इति ॥ ६ ॥

B 196 उच्यते। एतदपि न युक्तं दर्शनादिरहितस्य निरुपादानस्य निर्हेतुकस्य निरञ्जनस्या-
15 स्तित्वासंभवात्।

**सर्वेभ्यो दर्शनादिभ्यो यदि पूर्वो न विद्यते।**

इति परिकल्प्यते, एवमपि—

**एकैकस्मात्कथं पूर्वो दर्शनादेः स विद्यते ॥ ७ ॥**

यो हि सर्वेभ्यः पूर्वो न भवति, स एकैकस्मादपि न भवति। तद्यथा सर्वेभ्यो वृक्षेभ्यः
20 प्राग् वनं नास्ति, तदा एकैकस्मादपि नास्ति। सर्वासां च सिकतानां तैलजननाभावे सति एकैकस्या अपि सिकतायास्तैलं नास्ति। अपि च। यो ह्येकैकस्मात्पूर्वो भवति, ननु स सर्वेभ्योऽपि पूर्व एवेत्यभ्युपगतं भवति। एकैकव्यतिरेकेण सर्वस्याभावात्। तस्मान्न युक्तमेकैकस्मात्पूर्वो विद्यत इति ॥ ७ ॥

इतश्च न युक्तम्—यस्मात्—

25 **द्रष्टा स एव स श्रोता स एव यदि वेदकः।**

तदा—

**एकैकस्माद्भवेत्पूर्वं**

न च युक्तं वक्तुं स एव द्रष्टा स एव श्रोतेति। यदि स्यात्, तदा दर्शनक्रियारहित-स्यापि श्रोतुर्द्रष्टृत्वं स्यात्, श्रवणक्रियारहितस्यापि द्रष्टुः श्रोतृत्वं स्यात्। न चैवं दृष्टं यद्दर्शनक्रिया-
30 रहितोऽपि द्रष्टा स्यात्, श्रवणक्रियारहितश्च श्रोतेति। अत एवाह—

---

१. Mss. दरनादीनामप्येव पुनरन्यदा for दर्शनादीना...रन्यदा which is confirmed by T.

**एवं चैतन्न युज्यते ॥ ८ ॥**

इति । प्रतिक्रियं च कारकभेदात्कुत एतदेवं भविष्यतीति प्रतिपादयन्नाह – एवं चैतन्न युज्यत इति ॥ B 197

आचार्यबुद्धपालितस्तु व्याचष्टे–एकत्वे हि आत्मनः इन्द्रियान्तरगमनप्रसङ्गः पुरुषस्य स्यात्, वातायनान्तरोपगमनवदिति । अस्य आचार्यभावविवेको दूषणमाह – सर्वगतस्यात्मनो 5 नेन्द्रियान्तरगमनमस्तीत्ययुक्तः प्रसङ्गदोष इति । तदेतदयुक्तं स्वयूथ्यपरिकल्पितपुद्गलवादनिरासस्य प्रस्तुतत्वात्, तस्य च सर्वगतत्वाप्रतिज्ञानात् । तस्माद् युक्त एव प्रसङ्गदोषः ॥ ८ ॥

अथापि यथोक्तदोषपरिजिहीर्षया –

**द्रष्टान्य एव श्रोतान्यो वेदकोऽन्यः पुनर्यदि ।**

परिकल्प्यते, तदपि न युक्तम् । एवं हीष्यमाणे – 10

**सति स्याद् द्रष्टरि श्रोता बहुत्वं चात्मनां भवेत् ॥ ९ ॥** B 198

तद्यथा गोरन्योऽश्वः न हि गवि सति न भवति यौगपद्येन, एवं यदि द्रष्टुरन्यः श्रोता स्यात्, स द्रष्टर्यपि सति स्याद्यौगपद्येन । न चैवमिष्यते इति नास्त्यन्यत्वम् । अपि च । एवं सति बहव एवात्मानः प्राप्नुवन्ति द्रष्टृश्रोतृवेदकादीनां पृथक् पृथक् सिद्ध्युपगमात् । तस्मादेकैकस्मादपि दर्शनादेः पूर्वं नास्ति पुद्गलो नाम कश्चित् ॥ ९ ॥ 15

अत्राह – विद्यत एव पूर्वं स सर्वेभ्यो दर्शनादिभ्य आत्मा । अथ मतम् – यद्यस्ति, केन प्रज्ञप्यते स इति यदुच्यते, इह दर्शनादिभ्यः पूर्वं नामरूपावस्थायां चत्वारि महाभूतानि सन्ति यतः क्रमान्नामरूपप्रत्ययं षडायतनमिति दर्शनश्रवणादीन्युत्पद्यन्ते । तस्माद्दर्शनादिभ्यः पूर्वं चतुर्महाभूतोपादानमेवास्तीति । एवमपि –

**दर्शनश्रवणादीनि वेदनादीनि चाप्यथ ।** 20
**भवन्ति येभ्यस्तेष्वेष भूतेष्वपि न विद्यते ॥ १० ॥**

येभ्यो महाभूतेभ्यो दर्शनादिकमुत्पद्यते, तेष्वपि महाभूतोपादाननिमित्तकोऽप्येष न युज्यते पूर्वेणैव हेतुनेत्यभिप्रायः । तत्र यथा पूर्वमुक्तम् –

कुतः किंचिद्विना कश्चित्किंचित्कंचिद्विना कुतः ।

इति, इहापि तथैव वक्तव्यम् । महाभूतोपादानाद्यश्चात्मा पूर्वं सिद्धः स्यात्, स महा- 25 B 199 भूतान्युपादाय स्यात् । न चैवम्, निर्हेतुकत्वात् । यश्च नास्ति, स कथं महाभूतान्युपादास्यति ? इति दर्शनोपादानवद्भूतोपादानेऽपि दूषणमुक्तमेवेति न पुनरुच्यते ॥ १० ॥

अत्राह – यद्यप्येवमात्मा प्रतिषिद्धः, तथापि दर्शनादिकमस्ति, अप्रतिषेधात् । न च अनात्मस्वभावानां[1] घटादीनां दर्शनादिसंबन्धोऽस्ति । तस्मात्संबन्धी विद्यत एवात्मेति । उच्यते । स्यादात्मा यदि दर्शनादीन्येव स्युः । न तु सन्ति । यस्य दर्शनादीन्युपादानं स यदा नास्तीति 30

---

1. Mss. अनात्मास्वभावानां for अनात्मस्वभावानां.

प्रतिपादितम्, तदा तस्मिन्नात्मनि उपादातरि असति, कुतो दर्शनादीनामुपादानभूतानामस्तित्व-मित्याह—

**दर्शनश्रवणादीनि वेदनादीनि चाप्यथ ।**
**न विद्यते चेद्यस्य स न विद्यन्त इमान्यपि ॥ ११ ॥**

5 यस्य दर्शनादीनि परिकल्प्यन्ते स यदा नास्तीत्युक्तम्, ननु तदैव दर्शनादिकमपि नास्तीति स्पष्टमादर्शितं भवति । ततश्च दर्शनाद्यभावान्नास्त्येवात्मेति ॥ ११ ॥

अत्राह—किं खलु भवतो निश्चितमेतन्नास्त्येवात्मेति ? केन एतदुक्तम्[1] ? ननु च अनन्तरमेवोक्तं दर्शनाद्यभावादात्मापि नास्तीति । उक्तमेतदस्माभिः । न तु अस्यार्थो भवता सम्यग्निश्चितः । यतो भावरूप आत्मेति परिकल्पितः, स स्वभावतो न विद्यते,

B 200 10 तस्य च मया स्वभावाभिनिवेशनिवर्तकमेव वचनमुक्तमसद्विपर्यासप्रतिपक्षेण, न तु अस्य अभावः परिकल्पितः । द्वयं ह्येतत् परित्याज्यं यश्च भावेष्वभिनिवेशः, यश्च अभावेषु अभिनिवेश इति । यथोक्तमार्यदेवेन—

यस्त्वात्मा ममानात्मा तेनात्मानियमान्न सः ।
नन्वनित्येषु भावेषु कल्पना नाम जायते ॥

[ चतुःशतक—१०·३ ]

15 इति ॥ ११ ॥

एतदेव प्रतिपादयन्नाह—

**प्राक् च यो दर्शनादिभ्यः सांप्रतं चोर्ध्वमेव च ।**
**न विद्यतेऽस्ति नास्तीति निवृत्तास्तत्र कल्पनाः ॥ १२ ॥**

प्राक् तावद्दर्शनादिभ्य आत्मा नास्ति, तत्र हि तस्यास्तित्वाभावात् । दर्शनादिसहभूतोऽपि

20 नास्ति, पृथक्पृथगसिद्ध्योः सहभावादर्शनात् शशशृङ्गयोरिव । आत्मोपादानयोश्च परस्परनिरपेक्षयोः पृथक्पृथगसिद्धत्वात् सांप्रतमपि नास्ति । ऊर्ध्वमपि । यदि हि पूर्वं दर्शनादीनि स्युः, उत्तरकाल-

B 201 मात्मा स्यात्, तदानीमूर्ध्वं संभवेत् । न चैवम्, अकर्तृकस्य कर्मणोऽसिद्धत्वात् । यश्चैवमात्मा दर्शनादिभ्यः प्राक् पश्चाद् युगपच्च परीक्ष्यमाणो नास्ति, तस्य इदानीमनुपलब्धस्वभावस्य अस्तित्वं नास्तित्वं वा कः परिकल्पयेत्प्राज्ञः ? तस्मात्कर्मकारकवदेव उपादानोपादात्रोः परस्परापेक्षा

25 सिद्धिर्न स्वाभाविकीति स्थितम् ॥

अत एवोक्तं भगवता आर्यसमाधिराजभट्टारके—

तहि कालि सो दशबलो अनघो
जिनु भाषते इमु समाधिवरम् ।
सुपिनोपमा भवगती सकला

30 न हि कश्चि जायति न चो म्रियते ॥

---

१. Mss. एतद्युक्तम् for एतदुक्तम्.

न च सत्त्वु लभ्यति न जीवु नरो
इमि धर्म फेनकदलीसदृशाः ।
मायोपमा गगनविद्युसमा
दकचन्द्रसंनिभ मरीचिसमाः ॥
न च अस्मि लोकि मृतु कश्चि नरो  5
परलोक संक्रमति गच्छति वा ।
न च कर्म नश्यति कदाचि कृतं
फलु देति कृष्णशुभ संसरतो ॥
न च शाश्वतं न च उच्छेद पुनो
न च कर्मसंचयु न चापि स्थितिः ।  10
न च सोऽपि कृत्व पुनरास्पृशति
न च अन्यु कृत्व पुन वेदयते ॥
न च संक्रमो न च पुनागमनं  B 202
न च सर्वमस्ति न च नास्ति पुनः ।
न च दृष्टिस्थानगतिशुद्धिरिह  15
न च सत्त्वचारसुपशान्तगति ॥
अनुत्पाद शान्त अनिमित्तपदं
सुगतान गोचर जिनान गुणा ।
बल धारणी दशबलान बलं
बुद्धानियं वृषभिता परमा ॥  20

[ समाधिराजसूत्र—२९.१३-१८ ]

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
पूर्वपरीक्षा नाम नवमं प्रकरणम् ॥

## अग्नीन्धनपरीक्षा दशमं प्रकरणम् ।

B 203 अत्राह — यदिदमुक्तं तस्मात्कर्मकारकवदेव उपादानोपादात्रोरपि न स्वाभाविकी सिद्धिरिति, तदयुक्तम्, सापेक्षाणामपि पदार्थानां सस्वाभाव्यदर्शनात् । तथा हि अग्निरिन्धनमपेक्ष्य भवति । न च निःस्वभावोऽग्निः, तस्य औष्ण्यदाहकत्वादिस्वभावकार्योपलम्भात् । एवमग्निमपेक्ष्य इन्धनं भवति । न च तन्निःस्वभावम्, बाह्यमहाभूतचतुष्टयस्वभावत्वात् । एवमुपादानसापेक्षोऽप्युपादाता स्वभावतो भविष्यति, उपादातृसापेक्षं चोपादानमित्यग्नीन्धनवदेतौ भविष्यत उपादानोपादाताराविति । उच्यते । स्यादेतदेवम्, यदि अग्नीन्धने एव स्याताम्, न तु स्तः । कथम्? इह यदि अग्नीन्धने स्याताम्, नियतं ते एकत्वेन वा स्यातामन्यत्वेन वा? उभयथा तु न युज्यत इत्याह—

> **यदिन्धनं स चेदग्निरेकत्वं कर्तृकर्मणोः ।**
> **अन्यश्चेदिन्धनादग्निरिन्धनादप्यृते भवेत् ॥ १ ॥**

B 204 तत्र इध्यते यत् तदिन्धनम्, दाह्यं काष्ठादिकसंभूतम् । तस्य दग्धा कर्ता अग्निः । तत्र यदि तावद् यदिन्धनं स एवाग्निरिति परिकल्प्यते, तदा कर्तृकर्मणोरेकत्वं स्यात् । न चैवं दृष्टम्, घटकुम्भकारयोश्छेत्तृच्छेत्तव्ययोश्चैकत्वप्रसङ्गात्, तस्य चानभ्युपगमात् । अथ अन्यत्वम्, एवमपि यदि इन्धनादन्योऽग्निः स्यात्, तदा इन्धननिरपेक्षस्याग्नेरुपलब्धिः स्यात् । न हि घटादन्यः पटस्तन्निरपेक्षो न दृष्टः । न चैवमिन्धननिरपेक्षोऽग्निरिति न युक्तमेतत् ॥ १ ॥

अपि च । यदि इन्धनादन्योऽग्निः स्यात्, तदानीम्—

> **नित्यप्रदीप्त एव स्यादप्रदीपनहेतुकः ।**
> **पुनरारम्भवैयर्थ्यमेवं चाकर्मकः सति ॥ २ ॥**

इन्धनात्पृथग्भूतोऽग्निरिष्यमाणो नित्यप्रदीप्त एव स्यात्, अप्रदीपनहेतुकश्च स्यात्, पुनरारम्भवैयर्थ्यं च स्यात्, एवं च सति अकर्मक एव स्यात् ॥ २ ॥

अमुमेवार्थं प्रतिपादयितुकाम आह—

> **परत्र निरपेक्षत्वादप्रदीपनहेतुकः ।**
> **पुनरारम्भवैयर्थ्यं नित्यदीप्तः प्रसज्यते ॥ ३ ॥**

इति । तत्र प्रदीप्यते तदिति प्रदीपनमिन्धनम् । प्रदीपनं हेतुरस्येति प्रदीपनहेतुकः, न प्रदीपनहेतुकः अप्रदीपनहेतुकः । यदि प्रदीपनादन्योऽग्निः स्यात्, तदा इन्धननिरपेक्षः स्यात् । यो हि यस्मादन्यः, स तन्निरपेक्षो दृष्टः, घटादिव पटः । ततश्च परत्र निरपेक्षत्वादप्रदीपनहेतुकः स्यात्, प्रदीपनसापेक्षस्य हि अग्नेः तदभावे स्यान्निर्वाणम् । यदा तु प्रदीपननिरपेक्षः, तदा निर्वाणप्रत्ययवैकल्यान्नित्यप्रदीप्त एव भवेत् । नित्यप्रदीप्ते चाग्नौ सति अग्नेरपरिनिर्वाणार्थं

---

१. P उष्ण° for औष्ण्य°; Mss. तस्यास्तु दाहकत्वादिस्वभाव°; T दाहकत्वस्वभाव°. २. Mss. तदानीम् for तदिन्धनम्. ३. Mss. तदालम्बनवैयर्थ्य for पुनरारम्भवैयर्थ्यम्. ४. T घटपटवत् for घटादिव पटः.

चास्य उपादानसंधुक्षणादिकं व्यर्थमेव स्यात्। एवं च सति अकर्मकोऽग्निः कर्ता स्यात्। न च अविद्यमानकर्मकस्य कर्तृत्वं वन्ध्यासुतस्येव[1]। तस्मादिन्धनादग्नेरन्यत्वमिति न युज्यते॥ ३॥

अत्राह – यदेतदुक्तम्—

अन्यश्चेदिन्धनादग्निरिन्धनादप्यृते भवेत्।

इति, तदयुक्तम्। इहान्यत्वेऽपि सति अग्नीन्धनयोर्न विनैव इन्धनेन अग्नेरस्तित्वम्। 5
यस्माज्ज्वालापरिगतो[2]ऽर्थो दाह्यत्वलक्षणः इन्धनम्। तदाश्रयेण च अग्निरुपलभ्यते न पृथक्। यदा चैतदेवम्, अग्निसंबन्धादेवेन्धनव्यपदेशो भवति, इन्धनाश्रयेण चाग्निरुपलभ्यते न पृथक्, तदा अन्यश्चेदिन्धनादग्निरित्यादिदोषप्रसङ्गस्य नास्त्येवावसर इति। अस्य पक्षस्याप्ययुक्ततामुद्भावयन्नाह –

**तत्रैतस्मादिध्यमानमिन्धनं भवतीति चेत्।**
**केनेध्यतामिन्धनं तत्तावन्मात्रमिदं यदा॥ ४॥** 10

यदि मन्यसे ज्वालापरिगतोऽर्थो दाह्यलक्षणः इन्धनम्, तदाश्रयश्चाग्निरिति, एवमपि परिकल्प्यमाने इन्धनमग्निर्दहतीति नोपपद्यते। यस्मात्

केनेध्यतामिन्धनं तत्तावन्मात्रमिदं यदा।

इहेन्धनमग्निर्दहतीति परिकल्प्यमाने ज्वालापरिगतं दाह्यमिन्धनमिति, न चैतद्व्यतिरेकेणा- B 206
परमग्निं पश्यामो येनेन्धनं दह्येत। यस्मादेतावन्मात्रमिदमुपलभ्यते यदुत ज्वालापरिगतं 15
दाह्यमात्रम्। यदा चैतद्व्यतिरिक्तो नास्त्यग्निः, तदा केन तदिन्धनं दाह्यताम्? तावन्मात्रमिदं यदा, इध्यमानमात्रमिदं यदेत्यर्थः। तस्मान्नाग्निरिन्धनं दहति तद्व्यतिरिक्ताग्न्यभावात्। यदा चैवम्, तदा कुतः कस्यचिज्ज्वालापरिगतिरिति[3] स एव दोषो न वेपते[4]॥ ४॥

अपि च। अन्यत्वाभ्युपगमेऽग्नीन्धनयोरिध्यमानव्यपदेशाभावात्कुत इध्यमानमिन्धनम्, कुतो वा इन्धनमग्निर्धक्ष्यतीति प्रतिपादयन्नाह – 20

**अन्यो न प्राप्स्यतेऽप्राप्तो न धक्ष्यत्यदहन् पुनः।**
**न निर्वास्यत्यनिर्वाणः स्थास्यते वा स्वलिङ्गवान्॥ ५॥**

यदि इन्धनादन्योऽग्निः स्यात्, सोऽन्यत्वादन्धकारमिवेन्धनं न प्राप्नुयात्। न च धक्ष्यति अप्राप्तत्वाद्विप्रकृष्टदेशावस्थितमिवेत्यभिप्रायः। एवं च इध्यमानमिन्धनं भवतीति नोपपन्नमेव। ततश्च अग्नेर्निर्वाणं न स्यात्। अनिर्वाणश्च स्वलिङ्गवानेव स्थास्यति, प्रदीप्त इत्यर्थः। वाशब्दोऽ 25
वधारणे द्रष्टव्यो विकल्पार्थो वा। स्वलिङ्गवानेव अग्निः स्थास्यति, यदि वा नास्त्यन्यत्वमग्नेरिन्धना-दिति। समुच्चये वा। अन्यो न प्राप्स्यति न धक्ष्यति न च निर्वास्यति स्वलिङ्गवांश्च स्थास्यति। तस्मादयुक्तमिन्धनादन्यत्वमग्नेः॥ ५॥

१. Mss. °सुतस्य च for °सुतस्येव. २. Mss. °परिगलितो for °परिगतो. Our text is confirmed by T and similar passages below. ३. Mss. °परिगत इति for °परिगतिरिति. ४. Note an unusual use of न वेपते for न गच्छति or तदवस्थः एव.

अत्राह—अयुक्तमग्नीन्धनयोरन्यत्वम्, यस्मान्न प्राप्स्यतेऽप्राप्तो न धक्ष्यत्यदहन् पुनरित्यादि, तदयुक्तम्। दृष्टा हि अन्यत्वे स्त्रीपुरुषयोः प्राप्तिः, एवमग्नीन्धनयोरपि भविष्यतीति। उच्यते—

B 207
**अन्य एवेन्धनादग्निरिन्धनं प्राप्नुयाद्यदि।**
**स्त्री संप्राप्नोति पुरुषं पुरुषश्च स्त्रियं यथा॥ ६॥**

5 स्यादेतदेवम्, यदि स्त्रीपुरुषवत्परस्परानपेक्षा अग्नीन्धनयोः सिद्धिः स्यात्॥ ६॥

न त्वस्तीत्याह—

**अन्य एवेन्धनादग्निरिन्धनं काममाप्नुयात्।**
**अग्नीन्धने यदि स्यातामन्योन्येन तिरस्कृते॥ ७॥**

न त्वेवं संभवति यदिन्धननिरपेक्षोऽग्निः स्यात्, अग्निनिरपेक्षं चेन्धनमिति। तस्माद् 10 दृष्टान्तवैयर्थ्यम्। अन्योन्यापेक्षाधीनजन्मनां[1] सत्यन्यत्वे येषां प्राप्तिः सिद्धा, तेषामेव दृष्टान्तत्वेनोपादानं न्याय्यं स्यात्। ते च न संभवन्तीति न युक्तमेतदन्यत्वे सति प्राप्तिरस्तीति॥ ७॥

अत्राह—यद्यपि अग्नीन्धनयोः स्त्रीपुरुषवत्परस्पर[2]निरपेक्षा सिद्धिर्नास्ति, तथापि परस्परापेक्षा तावदस्ति। ततश्च अस्त्येवाग्नीन्धनयोः स्वरूपसिद्धिः परस्परसापेक्षत्वात्। न हि अविद्यमानयोर्वन्ध्यापुत्रदुहित्रोः परस्परापेक्षता दृष्टेति। उच्यते। एवमपि—

B 208 15
**यदीन्धनमपेक्ष्याग्निरपेक्ष्याग्निं यदीन्धनम्।**
**कतरत्पूर्वनिष्पन्नं यदपेक्ष्याग्निरिन्धनम्॥ ८॥**

अस्येन्धनस्य अयमग्निर्दाहकः कर्ता, इत्येवं यदि इन्धनमपेक्ष्याग्निर्व्यवस्थाप्यते, अस्याग्नेरिदमिन्धनं कर्मेत्येवमग्निमपेक्ष्य यदीन्धनम्, तत् कतरदनयोः पूर्वनिष्पन्नम्? किमिन्धनं यदपेक्ष्याग्निः स्यात्, उत अग्निर्यमपेक्ष्येन्धनं स्यात्? तत्र यदि इन्धनं पूर्वनिष्पन्नमिति कल्प्यते, तदयुक्तम्, 20 अग्निनिरपेक्षस्य अनिध्यमानस्येन्धनत्वाभावात्, तृणादेः सर्वस्य चैव इन्धनत्वप्रसङ्गात्। अथ पूर्वमग्निः पश्चादिन्धनमिति, तदप्ययुक्तम्, इन्धनात्पूर्वसिद्धस्याग्नेरसंभवात्, निर्हेतुकत्वप्रसङ्गात्, पश्चाच्चापेक्षया निष्प्रयोजनत्वात्। तस्मान्नास्ति अत्र किंचित्पूर्वसिद्धं यदपेक्ष्य इतरस्य सिद्धिः स्यात्॥ ८॥

अथापि मन्यसे—पूर्वमिन्धनं पश्चादग्निरिति, एवमपि

25
**यदीन्धनमपेक्ष्याग्निरग्नेः सिद्धस्य साधनम्।**

भविष्यति। यदि इन्धनमपेक्ष्याग्निर्भविष्यतीति परिकल्प्यते, एवं तर्हि सिद्धस्य सतोऽग्नेः पुनरपि साधनं स्यात्। विद्यमानस्यैव पदार्थस्य सिद्धरूपस्यापेक्षा युज्यते। न हि अविद्यमानो देवदत्तो गृहे कंचिदपेक्षते। एवं यदि अग्निर्विद्यमानो न स्यात्, नासाविन्धनमपेक्षते। तस्मादस्तित्वमग्नेरभ्युपेयम्। तदा च किमस्य इन्धनस्यापेक्षया पुनः कर्तव्यम्? न हि सिद्धोऽग्निः पुनरिन्धनेन

१. Mss. corrupt: अन्योन्यापेक्षायोर्न जन्मना। T अन्यत्वे सत्यपि परस्परापेक्षाधीना जाता ये प्रापकाः सिद्धास्तेषामेव. २. Mss. परस्परापेक्षा for परस्परनिरपेक्षा.

कर्तव्यो यदर्थमिन्धनापेक्षासाफल्यं स्यात् । तस्मादिन्धनमपेक्ष्याग्निर्भवतीति न युक्तम् । अपि च । यदि इन्धनमपेक्ष्याग्निर्भवतीति परिकल्प्यते –

**एवं सतीन्धनं चापि भविष्यति निरग्निकम् ॥ ९ ॥**

यदि इन्धनमसिद्धं स्यात्, नैव तदग्निना अपेक्ष्येत, असिद्धस्यापेक्षायोगात् । तस्मान्निरग्निकस्येन्धनस्य सिद्धिरभ्युपेया, न चैवमेतदिति न युक्तमेतदिति ॥ ९ ॥　B 208　5

अथ मतम् – यौगपद्येनैव इन्धनसिद्ध्या अग्निसिद्धिः, अग्निसिद्ध्या च इन्धनसिद्धिः । ततश्च एकस्यापि पूर्वसिद्ध्यनभ्युपगमात्, तत्र यदुक्तम् –

कतरत्पूर्वनिष्पन्नं यदपेक्ष्याग्निरिन्धनम् ।

इति, तदयुक्तमिति । उच्यते । एवमपीष्यमाणे उभयस्यापि नास्ति सिद्धिः । यस्मात् –

**योऽपेक्ष्य सिध्यते भावस्तमेवापेक्ष्य सिध्यति ।　10**
**यदि योऽपेक्षितव्यः स सिध्यतां कमपेक्ष्य कः ॥ १० ॥**

तत्र यदि यः अग्न्याख्यो भावः यमिन्धनाख्यं भावमपेक्ष्य सिध्यति, इन्धनाख्यश्च भावः योऽग्निना आत्मसिद्ध्यर्थमपेक्षितव्यः, स यदि तमेव अग्न्याख्यं पदार्थमपेक्ष्य सिध्यति, कथ्यतामिदानीं सिध्यतां कमपेक्ष्य कः इति । यदा च अग्न्यभावे सति इन्धनस्य सिद्धिरेव नास्ति, तदा अकारणस्येन्धनस्याभावात् कुतस्तद्धेतुकोऽग्निः प्रसेत्स्यति ? एवं य इन्धनाख्यो भावः 15 यमग्न्याख्यं भावमपेक्ष्य सिध्यति, अग्न्याख्यश्च भावो यः इन्धनाख्येन आत्मसिद्ध्यर्थमपेक्षितव्यः, स यदि तमेवेन्धनाख्यं भावमपेक्ष्य सिध्यति, कथ्यतां किमिदानीं सिध्यतां कमपेक्ष्य कः इति । यदा हि इन्धनाभावे सति अग्नेः सिद्धिर्नास्ति, तदा निष्कारणस्याग्नेरभावात् कुतस्तद्धेतुकमिन्धनम् ? ॥ १० ॥

इतश्च अग्नीन्धनयोः परस्परापेक्षयापि सिद्धिरसती, सिद्धासिद्धयोरपेक्षाभावादिति 20 प्रतिपादयन्नाह —

**योऽपेक्ष्य सिध्यते भावः सोऽसिद्धोऽपेक्षते कथम् ।　B 209**
**अथाप्यपेक्षते सिद्धस्त्वपेक्षास्य न युज्यते ॥ ११ ॥**

यो हि अग्न्याख्यो भावः इन्धनाख्यं भावमपेक्ष्य सिध्यति, सः असिद्धो वा इन्धनमपेक्षते सिद्धो वा ? यदि असिद्धः, तदा असिद्धत्वात् खरविषाणवन्नेन्धनमपेक्षेत । अथ सिद्धः, सिद्धत्वात् 25 किमस्येन्धनापेक्षया ? न हि सिद्धं पुनरपि साध्यते वैयर्थ्यात् । एवमिन्धनेऽपि वाच्यम् । तस्मान्नाग्नीन्धनयोः परस्परापेक्षया यौगपद्येन वा सिद्धिरिति ॥ ११ ॥

यतश्चैवम्, तस्मात् –

**अपेक्ष्येन्धनमग्निर्न**

अथ स्यात् – अनपेक्ष्याग्निस्तर्हि भविष्यतीति । एतदपि न युक्तमित्याह –　30

नानपेक्ष्याग्निरिन्धनम् ।

अन्यत्वप्रतिषेधादहेतुकत्वप्रसङ्गाच्च । यथा च अग्निरपेक्ष्य वा अनपेक्ष्य वा इन्धनं न संभवति, एवमिन्धनमपीत्याह—

अपेक्ष्येन्धनमग्निं न नानपेक्ष्याग्निमिन्धनम् ॥ १२ ॥

5 एतच्च अनन्तरमेव गतार्थत्वान्न पुनरुच्यते ॥ १२ ॥

B 210 अत्राह—किमनया अस्माकमतिसूक्ष्मेक्षिकया प्रयोजनम्, ये वयं ब्रूमः—यस्मादग्निना इध्यमानमिन्धनं प्रत्यक्षत उपलभ्यते, तस्मात्ते एव अग्नीन्धने इति । उच्यते । स्यादेतदेवम्, यदि अग्निरिन्धनं दहेत्[1] । यदि इन्धनेऽग्निः संभवेत्, स इन्धनं दहेत् । न तु संभवतीत्याह—

आगच्छत्यन्यतो नाग्निरिन्धनेऽग्निर्न विद्यते ।

10 इन्धनव्यतिरिक्तात्तावत्कुतश्चिदन्यतोऽग्नेरागमनं नास्ति, तस्य अदृष्टत्वात् । निरिन्धनस्य चाहेतुकस्याग्नेरागमनाभावात्, सेन्धनस्य चागमने प्रयोजनाभावात्, तत्रापि चेन्धने तुल्यपर्यनुयोगात्, अनवस्थाप्रसङ्गाच्च आगच्छत्यन्यतो नाग्निः । तथा इन्धनेऽप्यग्निर्न संभवति तत्रानुपलभ्यमानत्वात् ॥

अथ स्यात्—विद्यमानस्यापि मूलोदकादिवदभिव्यञ्जकप्रत्ययवैकल्यात्पूर्वमनुपलभ्यमानत्वम्, अरणिनिघर्षणादभिव्यञ्जकप्रत्ययसंभवात्तु पश्चादुपलब्धिरिति । इदमेव तावत्संप्रधार्यते—किं 15 पुनर्मूलोदकादीनामभिव्यञ्जकैः प्रत्ययैः क्रियत इति । तत्र स्वरूपं तावन्न क्रियते विद्यमानत्वात् । अभिव्यक्तिः क्रियत इति चेत्, केयमभिव्यक्तिर्नाम ? प्रकाशतेति चेत्, एवं तर्हि सैव क्रियते पूर्वमविद्यमानत्वादस्याः । सत्कार्यवादत्यागश्चैवं जायते अभिव्यक्तेः पूर्वमविद्यमानत्वात्पश्चाच्च भावात् । स्वरूपस्य चोत्पत्तिप्रत्ययनिरपेक्षत्वात्खपुष्पवदभिव्यक्तिप्रत्ययसापेक्षतापि न स्यात् । अपि च । इयमभिव्यक्तिरभिव्यक्तस्य वा भावस्य परिकल्प्येत अनभिव्यक्तस्य वा ? तत्र तावद् यदभिव्यक्तं 20 तन्नाभिव्यज्यते, तस्याभिव्यक्तिवैयर्थ्यात् अनिष्टदोषप्रसङ्गाच्च । अनभिव्यक्तमपि नाभिव्यज्यते खपुष्पवदनभिव्यक्तत्वात्[2] । इत्येवमभिव्यक्तिर्न संभवति ॥

B 211 अथापि स्यात्—विद्यमानस्यैव प्रत्ययैः स्थौल्यं क्रियते इति, एवमपि यदेव स्थौल्यं पूर्वं नास्तीति तदेव क्रियत इति कुतः स्थौल्यापादनमभिव्यक्तिः ? सौक्ष्म्यस्य[3] च निर्हेतुकस्यासंभवात् कस्य स्थूलतापादनादभिव्यक्तिः स्यादिति । तदेवं सर्वथा इन्धने अग्नेर्न संभव इति इन्धनेऽग्निर्न 25 विद्यते । न चाविद्यमानाग्निना इन्धनस्य दहनमुपजायते इत्यसत्यमेवैतदुपलभते भवान् ॥

अपि च । यथा पूर्वं गतागतगम्यमानानां दूषणमुक्तम्—

अत्रेन्धने शेषमुक्तं गम्यमानगतागतैः ॥ १३ ॥

अग्निना इन्धनं दह्यमानमुपलभ्यते इत्यत्र इन्धनप्रस्तावे शेषं दूषणं गम्यमानगतागतदूषणेन वेदितव्यम्, उक्तपाठविपर्ययेण—

---

१. After दहेत् T adds न तु दहति, तथा. २. Mss. °वदभिव्यक्तत्वात् for °वदनभिव्यक्तत्वात्. ३. Mss. स्थौल्यस्य. Our text is based on T.

दग्धं न दह्यते तावददग्धं नैव दह्यते ।

दग्धादग्धविनिर्मुक्तं दह्यमानं न दह्यते ॥

इत्यादिना । यत एवम्, अतो नास्त्यग्निना इन्धनस्य दहनमिति वेदितव्यम् ॥ १३ ॥

इदानीं यथोपपादितमर्थं निगमयन्नाह—

**इन्धनं पुनरग्निर्न नाग्निरन्यत्र चेन्धनात् ।** 5

**नाग्निरिन्धनवान्नाग्नाविन्धनानि न तेषु सः ॥ १४ ॥**

तत्र B 212

यदिन्धनं स चेदग्निरेकत्वं कर्तृकर्मणोः ।

भवेत्, इत्यनेन अग्नीन्धनयोरेकत्वप्रतिषेधात्

इन्धनं पुनरग्निर्न, 10

अन्यश्चेदिन्धनादग्निरिन्धनादप्यृते भवेत् ।

इत्यादिना अन्यत्वस्य प्रतिषेधात्

नाग्निरन्यत्र चेन्धनात् ।

तत्त्वान्यत्वोभयपक्षप्रतिषेधादेव तद्वत्पक्षाधाराधेयपक्षाणामप्यर्थतः प्रतिषिद्धत्वात्तानपि निगमयन्नाह—

नाग्निरिन्धनवान्नाग्नाविन्धनानि न तेषु सः । 15

इति । तत्राग्निरिन्धनवान्न भवति । इन्धनमस्यास्मिन् वा विद्यत इति व्यतिरेकेण वा व्युत्पादेन अव्यतिरेकेण वा । तत्र व्यतिरेकेण—तद्यथा गोमान् देवदत्तः । अव्यतिरेकेण—बुद्धिमान् देवदत्तो रूपवानित्यादि । अग्नीन्धनयोश्च पक्षद्वयस्यापि प्रतिषिद्धत्वादिन्धनवानग्निरिति प्रतिषेधो विहितः । अन्यच्च । कुण्डं दध्न आधारतां प्रतिपद्यते । न चेन्धनादन्यत्वमग्नेरस्तीति नाग्नाविन्धनानीति युज्यते । नापि इन्धनेऽस्त्यग्निः, अन्यत्वप्रतिषेधादिति । एवमाधाराधेयताप्रतिषेधोऽप्यर्थत 20 उपपादित एव ॥ १४ ॥

यथा चाग्निः पञ्चधा विचार्यमाणो न संभवति, एवमात्मापि, इत्यतिदिशन्नाह—

**अग्नीन्धनाभ्यां व्याख्यात आत्मोपादानयोः क्रमः ।**

**सर्वो निरवशेषेण**

तत्र उपादीयते इत्युपादानं पञ्चोपादानस्कन्धाः । यस्तानुपादाय प्रज्ञप्यते, स उपादाता 25 ग्रहीता निष्पादक आत्मेत्युच्यते । अहंकारविषयत्वादाहित उत्पादितोऽहंमानोऽस्मिन्निति । तदस्यात्मन B 213 उपादानस्य च यः क्रमः सिद्धिः, स सर्वोऽग्नीन्धनाभ्यां व्याख्यातोऽवगन्तव्यो निरवशेषेण ॥

---

१. Mss. तामपि गमयन्. Our reading is confirmed by T. २. Mss. इत्युपादानम् । यश्चोपादानस्कन्धांस्तानुपादाय. Our reading is based on T. ३. Mss. आदित for आहित.

कः पुनः सर्वस्य निरवशेषस्य च भेदः ? सर्वग्रहणेनैव पञ्च पक्षाः समनन्तरप्रक्रान्ता अभिसंबध्यन्ते । सर्वे एते पञ्चापि पक्षाः अग्नीन्धनवदात्मोपादानयोरप्यविकला ढौकनीयाः । यश्चैषां प्रतिपादने उपपत्तिक्रमः प्रागुपवर्णितः, तेन निरवशेषेण आत्मोपादानयोः प्रतिषेधो वेदितव्यः । इत्यनेन सर्वात्मना प्रतिषेधसाम्यमग्नीन्धनाभ्यामात्मोपादानयोर्वेदितव्यमित्युपदर्शनार्थं सर्वो निरव-
5 शेषेणेत्याह । तत्र यदेवोपादानं स एव आत्मा, इत्येवं कर्तृकर्मणोरेकत्वप्रसङ्गान्न युज्यते । नाप्यन्यदुपादानमन्य उपादाता, स्कन्धव्यतिरेकेणाप्यात्मोपलब्धिप्रसङ्गात्, परत्र निरपेक्षत्वा-दित्यादिप्रसङ्गाच्च । एकत्वान्यत्वप्रतिषेधाच्च स्कन्धवानप्यात्मा न भवति । अन्यत्वाभावाच्च नात्मनि स्कन्धा न स्कन्धेष्वात्मा । यत एवं पञ्चसु प्रकारेषु आत्मनो न सत्त्वम्, तस्मात्कर्मकारकवदेव आत्मोपादानयोः परस्परापेक्षिकी सिद्धिरिति स्थितम् ॥

10 यश्चायमात्मोपादानयोः क्रमः, स नानयोरेव, किं तर्हि–

**सार्धं घटपटादिभिः ॥ १५ ॥**

निरवशेषैः पदार्थैः सर्वथा व्याख्यातो वेदितव्यः । घटादयो हि कार्यकारणभूत अवयवावयविभूता लक्षणलक्ष्यभूता गुणगुणिभूता वा स्युः । तत्र मृद्दण्डचक्रसूत्रसलिलकुलाल-
B 214 करव्यायामादयो घटस्य कारणभूताः, घटः कार्यभूतः । कपालादयो नीलादयो वा अवयवभूताः,
15 घटोऽवयवी । पृथुबुध्नलम्बौष्ठदीर्घग्रीवत्वादीनि लक्षणानि, घटो लक्ष्यः । श्यामत्वादयो गुणाः, घटो गुणी । इत्येवं व्यवस्थाप्य अग्नीन्धनवत् क्रमो योज्यः । एषां च घटादीनामात्मोपादानयोश्च मध्यमकावतारप्रकरणाद् व्याख्यानमवसेयम् ॥ १५ ॥

तदेवं कर्मकारकवदात्मोपादानयोर्घटादीनां च परस्परापेक्षिक्यां सिद्धौ व्यवस्थितायां तथा-गतवचनाविपरीतार्थावबोधाभिमानितया तीर्थ्यमतोपकल्पितपदार्थव्यवस्थां सौगतप्रवचनार्थत्वेनोपनीय
20 अतिमूढतया –

**आत्मनश्च सतत्त्वं ये भावानां च पृथक्पृथक् ।**
**निर्दिशन्ति न तान्मन्ये शासनस्यार्थकोविदान् ॥ १६ ॥**

तत्र सह तेन वर्तत इति सतत्, सततो भावः सतत्त्वम्, अपृथक्त्वम्, अनन्यत्वम्, एकत्वमित्यर्थः । तदेतत् सतत्त्वं ये वर्णयन्ति, न तानाचार्यः शासनार्थपण्डितान् मन्यते ।
25 तद्यथा – आत्मा उपादानेन प्रज्ञप्यते येन, सहैव तेनोपादानेन संभवति । स न पृथक् ।
B 215 अव्यतिरेकेणैव भवतीत्यर्थः । एवं येन कारणेन मृदादिना घटः प्रज्ञप्यते, तदव्यतिरेकेणैव स भवति, न पृथक् । एवमात्मनो भावानां च सतत्त्वं ये वर्णयन्ति, न ते परमगम्भीरस्य प्रतीत्यसमुत्पादस्य शाश्वतोच्छेदरहितस्य उपादायप्रज्ञप्त्यभिधानस्य तत्त्वं पश्यन्ति । पृथक् पृथक् च ये निर्दिशन्ति, पृथगित्यात्मानम्, पृथगुपादानम्, पृथक् कार्यम्, पृथक् कारणम्, इत्यादिना अन्यत्वं पश्यन्ति, अमूनपि न शासनस्यार्थकोविदानाचार्यो मन्यते । यथोक्तम्–

---

1 T तदृत for तदेतत्

एकत्वान्यत्वरहितं प्रतिश्रुत्कोपमं जगत् ।
संक्रान्तिमासोच्च गतं बुद्धवांस्त्वमनिन्दितः ॥

[ निरुपमस्तव – १३ ]

एवं च अग्नीन्धनपरीक्षया अधिगतधर्मतत्त्वपरमस्य योगिनः कल्पेनाकालेलिप्सितैरपि नैव वपुर्दह्यते रागद्वेषमोहहुताशनैरपि वा इति । यथोक्तं भगवता –

यथ गगणु न जातु दग्धपूर्वं 5
सुबहुभि कल्पशतैर्हि दह्यमानम् ।
गगनसम विजानमान धर्मान्
सोऽपि न दह्यति जातु साग्निमध्ये ॥
सर्वि हि ज्वलमाणि बुद्धक्षेत्रे B 216
प्रणिधि करोति समाधिये स्थिहित्वा । 10
ज्वलत अयु प्रशाम्यतामशेष
पृथिवि विनश्यिपि नैवस्यान्यथात्वम् ॥

तथा –

अरणिं यथ चोत्तरारणिं
हस्तव्यायामु त्रयेभि संगतिः । 15
इति प्रत्ययतोऽग्नि जायते
जातु कृतु कार्य लघू निरुध्यते ॥
अथ पण्डितु कश्चि मार्गते
कुत अयमागतु कुत्र याति वा ।
विदिशो दिश सर्वि मार्गतो 20 B 217
नागतिर्नास्य गतिश्च लभ्यति ॥
स्कन्धायतनानि धातवः
शून्य आध्यात्मिक शून्य बाहिराः ।
सर्वात्मविविक्तनालया
धर्म आकाशसभावलक्षणाः ॥ 25
इमु ईदृश धर्मलक्षणा
बुद्ध दीपंकरदर्शने त्वया ।

१. Mss. corrupt. Our reading is conjectural. T suggests संक्रान्तिव्ययरहितम् or °व्ययविगतम्. २. T युगान्तज्वालाभिर्वा for अकालालिप्सितैरपि. ३. Mss. तेऽपि for सोऽपि. T क्वचन न दह्यति जातु सोऽग्निमध्ये for the line.

अनुबुद्ध यथ त्वयात्मना
तथ बोधेहि सदेवमानुषान् ॥
विपरीतअभूतकल्पितै
रागदोषैः परिदह्यते जगत् ।
5 कृपमेघशमाम्बुशीतलां
मुञ्च धाराममृतस्य नायक ॥

[ललितविस्तर - १३.१०८, ११५-११९]

इति विस्तरः ॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
अग्नीन्धनपरीक्षा नाम दशमं प्रकरणम् ॥

## पूर्वापरकोटिपरीक्षा एकादशमं प्रकरणम् ।

अत्राह — विद्यत एव आत्मा, संसारसद्भावात्। यदि हि आत्मा न स्यात्, कस्य पञ्चगतिके[1] आजवंजवीभावेन जन्ममरणपरंपरया संसरणं स्यात् ? उक्तं हि भगवता — अनवराग्रो हि भिक्षवो जातिजरामरणसंसारः इति । अविद्यानीवरणानां[2] सत्त्वानां तृष्णासंयोजनानां तृष्णा-गण्डुरबद्धानां संसरतां संधावतां पूर्वा कोटिर्न प्रज्ञायत इति । यदा च भगवदुपदेशात्संसारोऽस्ति, 5 तदा संसर्ताप्यस्ति । स च आत्मा उच्यत इति । उच्यते । स्यादात्मा, यदा संसार एव स्यात् । कथम् ? यस्मादस्य —

B 218

B 219

पूर्वा प्रज्ञायते कोटिर्नेत्युवाच महामुनिः ।
संसारोऽनवराग्रो हि नास्यादिर्नापि पश्चिमम् ॥ १ ॥

कोटिर्भागो देश इति पर्यायाः । पूर्वा कोटिः पूर्वो देश इत्यर्थः । यदि हि संसारो नाम 10 कश्चित् स्यात्, नियतं तस्य पूर्वमपि स्यात्, पश्चिममपि, घटादीनामिव । उक्तं च भगवता — अनवराग्रो हि भिक्षवो जातिजरामरणसंसार इति । यदेव अनवराग्रे[3] न स्तः, संसारस्य अनवराग्र-वचनात्, संसार एव नास्तीति ननु स्पष्टमादेशयामास भगवान् । तस्मान्नास्ति संसारः, पूर्वा-परकोव्यनुपलम्भात्, अलातचक्रवत्, इति स्थितम् ॥

अत्रेदं विचार्यते — यदि पूर्वं चापरं च संसारस्य निषिद्धं भगवता, कथं पुनरिदमाह — तस्मात्तर्हि 15 संसारक्षयाय प्रतिपत्स्यामह इत्येवं वो भिक्षवः शिक्षितव्यम्, इति ? उच्यते । अविद्यानीवरणानां सत्त्वानामित्यादिविशेषणोपादानात्तेषामेवायमनवराग्रः संसार इति प्रतीयते, न पुनस्तत्त्वज्ञानानिल-बलात् समुन्मूलिताविद्यानीवरणतरूणाम् । तेषां तु लोकोत्तरमार्गज्ञानाग्निना दग्धाशेषक्लेशवासना-मूलनिःशेषपादपानां भवत्येव अन्तः इति विज्ञेयम् ॥

कथं पुनरादिरहितानामन्तोपदेश इति यावत् । दृष्टमेतद् बाह्येषु व्रीह्यादिषु आद्यभावेऽपि 20 दहनादिसंपर्कादन्तसद्भावः । यथोक्तमार्यदेवपादैः —

B 220

यथा बीजस्य दृष्टोऽन्तो न चादिस्तस्य विद्यते ।
तथा कारणवैकल्याज्जन्मनोऽपि न संभवः ॥ इति ।

[चतुःशतक — ८·२५]

स च अन्तोपदेशो लौकिक एव व्यवहारे स्थित्वा संसारचारकावबद्धानामुत्साहनार्थं सत्त्वानां देशितो लौकिकज्ञानापेक्षया । वस्तुक[4]चिन्तायां तु संसार एव नास्ति, तत्कुतोऽस्य परिक्षयः ? 25 प्रदीपावस्थायां रज्जूरगपरिक्षयवत्[5] ॥

---

१. P पाञ्च° for पञ्च° against Mss. २. P °निवरणानां for °नीवरणानां. ३. Mss. corrupt : यदेव शतः for अनवराग्रे न स्तः. T seems to suggest : यस्मादेवं संसारोऽनवराग्र उक्तः, तस्मात्संसार एव नास्ति. ४, Mss. अवस्तुक° for वस्तुक° which is based on T. ५. T om. रज्जूरगपरिक्षयवत्.

अत्राह — यद्येवं लौकिकज्ञानापेक्षया अन्तवद् आदिरपि किं नोच्यते? उच्यते। अहेतुकदोषप्रसङ्गात् लौकिकज्ञानापेक्षयापि संसारस्यादेरभाव इत्युभयथाप्यादेरभाव एवेति विज्ञेयम् ॥ १ ॥

अत्राह — यद्यपि अवराग्रे न स्तः संसारस्य, तथापि मध्यमस्ति, अप्रतिषेधात्। ततश्च 5 अस्ति संसारो मध्यसद्भावात्। इह यन्नास्ति, न तस्य मध्यमस्ति तद्यथा कूर्मरोमप्रावरणस्येति। हास्यः खल्वसि। ननु च भोः,

**नैवाग्रं नावरं यस्य तस्य मध्यं कुतो भवेत्।**

B 221 अग्रमिति आदिः, पूर्वम्, प्रथमम् उच्यते। अवरमिति अवसानम्, अन्तः, व्यवच्छेदः उच्यते। यस्य संसारस्य आदिरन्तश्च प्रतिषिद्धः, तस्य कुतो मध्यं भविष्यति? ततश्च संज्ञामात्रक- 10 मेव विपर्यासपरवशमानसानां संसारः आदिमध्यावसानविरहितत्वादाकाशवदलातचक्रादिवदिति भावः। संसाराभावाच्च नास्ति आत्मेति। यत एवं संसारस्यादिमध्यावसानानि न सन्ति, अत एव संसाराभावाज्जातिजरामरणादीनां पूर्वापरसहक्रमा अपि नैव सन्तीत्याह —

**तस्मान्नात्रोपपद्यन्ते पूर्वापरसहक्रमाः ॥ २ ॥**

यथा च नोपपद्यन्ते तथा प्रतिपादयन्नाह —

15 **पूर्वं जातिर्यदि भवेज्जरामरणमुत्तरम्।**
**निर्जरामरणा जातिर्भवेज्जायेत चामृतः ॥ ३ ॥**

यदि पूर्वं जातिर्भवेत्, तदा मरणसहिता स्यात्। न च जरादिरहिता जातिर्युज्यते, असंस्कृतत्वप्रसङ्गात्। जरामरणरहितस्य भावस्य जातौ परिकल्प्यमानायामन्यत्र अमृतस्यैव देवदत्तस्य प्रथममिह जातिः परिकल्प्यमाना स्यात्। ततश्च आदिमान् संसारः स्यादहेतुकदोषश्च। अभूव- 20 मतीतमध्वानम्, इत्येवं पूर्वान्तकल्पना च न स्यात्। अभूत्वा च पूर्वं पश्चादिहोत्पादः स्यात्॥

B 222 अथ स्यात् — आम्रादीनां यथा पूर्वं विनापि जरामरणसंबन्धात् प्रथममेव उत्पादो दृष्टः, एवमात्मनोऽपीति। नैवम्। साध्यसमत्वात्। आम्रादीनामपि हि स्वबीजनिरोधे समुत्पद्यमानत्वात् नान्यत्राविनष्टानामुत्पाद इति सममेतत् पूर्वेण ॥

अथ स्यात् — अन्यदेव वृक्षाद्बीजम्, अतोऽन्यत्राविनाशपूर्वक एव वृक्षस्योत्पाद इति 25 नैवम्। कार्यकारणयोरन्यत्वस्यासिद्धत्वात्। तथा च वक्ष्यति —

प्रतीत्य यद्यद्भवति न हि तावत्तदेव तत्।
न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतम् ॥

[ मध्यमकशास्त्र — १८·१० ]

न च बीजाद्वृक्षस्यान्यत्वम्। अतः साध्यसममेतत्। यतश्च अन्यत्रामृतस्य इहोत्पादो नास्ति, न पूर्वं जातिरभ्युपेया ॥ ३ ॥

1. Mss. अम्र, अस्र, अभ्र, P अम्र for आम्र, which is based on T.

अथ पूर्वं जरामरणम्, पश्चाज्जातिः, एवमपि —

**पश्चाज्जातिर्यदि भवेज्जरामरणमादितः ।**
**अहेतुकमजातस्य स्याज्जरामरणं कथम् ॥ ४ ॥**

जातिप्रत्ययं जरामरणमिति वचनाज्जातिहेतुकं जरामरणमुक्तं भगवता । यदि एतत्पूर्वं स्यात्तदा निर्हेतुकं स्यात् । तस्मान्न युक्तमेतत् । यतोऽप्युक्तम्— 5

यथ[1] उक्खित्ते लोढम्मि उक्खेवे अत्थि कारणं ।
पडने कारणं णत्थि अण्णं उक्खेवकारणा ॥ इति ।

यथाप्यत्रोत्क्षेपः पतनकारणं नान्यत्, एवमिहापि जातिमेव कारणत्वेन विनाशस्य वर्णयामो नान्यत्, इति नास्त्यहेतुकता विनाशस्य । जातिहेतुकत्वाच्चास्योद्गमनमेव विनाशस्य हेतुरिति कृत्वा एषापि गाथा सुनीता भवति — B 223 10

एवं[2]मे संखता धम्मा संभवन्ति सकारणा ।
स भाव एव धम्माणं यं विभोन्ति समुग्गता ॥

इति ॥ ४ ॥

इदानीं सहभावेनापि जातिजरामरणानामसद्भावं प्रतिपादयन्नाह —

**न जरामरणेनैव जातिश्च सह युज्यते ।** 15
**म्रियेत जायमानश्च स्याच्चाहेतुकतोभयोः ॥ ५ ॥**

यदि सहभावो जातिजरामरणानां स्यात्, तदा जायमानस्य मरणं स्यात् । न चैतद्युक्तम् । न च परस्परविरुद्धत्वादालोकान्धकारवदेककालता युक्ता । न चैवं लोके दृष्टं यज्जायमान एव म्रियते इति । अपि च । अहेतुकत्वं जात्यादीनां सहभावकल्पनायां स्यात् । न हि सहभूतयोः सव्येतरगोविषाणयोरन्योन्यहेतुकता दृष्टेति न युक्तमेतत् ॥ ५ ॥ B 224 20

तदेवम्—

**यत्र न प्रभवन्त्येते पूर्वापरसहक्रमाः ।**
**प्रपञ्चयन्ति तां जातिं तज्जरामरणं च किम् ॥ ६ ॥**

यस्यां जातौ यत्र जरामरणे, एते पूर्वापरसहक्रमाः न सन्ति, तां जातिमनुपलभमाना आर्याः किं प्रपञ्चयन्ति ? किंशब्दोऽसंभवे । नैव प्रपञ्चयन्तीत्यर्थः । अथवा । एवमविद्यमानेषु जात्यादिषु तां जातिमविद्यमानां बालाः किं प्रपञ्चयन्ति तच्च जरामरणं यन्न संविद्यते ? तस्मादवस्तुक एव बालानां प्रपञ्च इत्यभिप्रायः ॥ ६ ॥ 25

---

१. This quotation, taken from a Prakrit text, is not yet traced. The Mss. are corrupt for this stanza and also for the following. Even P gives incorrect readings. P क्षेपः for उत्क्षेपः. २. P reads धम्माः, सकारणाः, धम्माणां and समुद्गताः which go against Prakrit idiom.

यथा च संसारस्य पूर्वा कोटिर्नास्ति, एवमन्येषामपि भावानामित्याह—

**कार्यं च कारणं चैव लक्ष्यं लक्षणमेव च।**
**वेदना वेदकश्चैव सन्त्यर्था ये च केचन॥ ७॥**

**पूर्वा न विद्यते कोटिः संसारस्य न केवलम्।**
**सर्वेषामपि भावानां पूर्वा कोटिर्न[1] विद्यते॥ ८॥**

B 225

तत्र यदि पूर्वं कारणं पश्चात्कार्यं स्यात्, अकार्यकं कारणं निर्हेतुकं स्यात्। अथ पूर्वं कार्यं पश्चात्कारणम्, एवमपि कारणात्पूर्वं कार्यं निर्हेतुकमेव स्यात्। अथ युगपत्कार्यकारणे स्याताम्, एवमुभयमप्यहेतुकं स्यात्। एवं लक्ष्यलक्षणे वेदनावेदकौ च योज्यौ। न च केवलं संसारस्य व्याख्यानेन कार्यकारणादिकं व्याख्यातं वेदितव्यम्, अपि च येऽप्यन्ये 10 पदार्था ज्ञानज्ञेयप्रमाणप्रमेयसाधनसाध्यावयवावयविगुणगुण्यादयः, तेषामपि पूर्वा कोटिर्न विद्यत इति योज्यम्॥ अत एव आर्यरत्नमेघसूत्रे आर्यसर्वनीवरणविष्कम्भिणा महाबोधिसत्त्वेन भगवान् स्तुतः—

आदिशान्ता ह्यनुत्पन्नाः प्रकृत्यैव च निर्वृताः।
धर्मास्ते विवृता नाथ धर्मचक्रप्रवर्तने॥ इति॥

15 तथा—

आदित शून्य अनागत धर्मा
नो गत[2] अस्थित स्थानविविक्ताः।
नित्यमसारक मायसभावाः
शुद्ध विशुद्ध नभोपम सर्वि॥

20 यं च पभाषति धर्म जिनस्य[3]
तं च न पश्यति सोऽक्षयताय।
आदिनिरात्म निसत्त्विमि धर्मा-
स्तांश्च च पभाषति नो च क्षेपेति[4]।

B 226

कल्पित वुचति कल्पितमात्रं
अन्तु न लभ्यति संसरमाणे।
25 कोटि अलक्षण या पुरि आसी-
देति अनागति प्रत्ययताये॥
कर्म क्रिया च प्रवर्तति एवं
हीन[5]उत्कृष्टतया समुदेन्ति।

---

१. P कोटी न for कोटिर्न. २. Mss. नागत for नो गत which reading is confirmed by T. ३. Mss. जनस्यो for जिनस्य which is confirmed by T. ४. Mss. क्षयेति for क्षपेति. ५. T मध्यम° for हीन°.

जड्डक धर्म सदा प्रकृतीये
शून्य निरात्म विजानथ सर्वान् ॥
[ समाधिराज सूत्र—३७.१८,२४,३२-३३ ]

इत्यादि ॥ ७-८ ॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
पूर्वापरकोटिपरीक्षा नामैकादशमं प्रकरणम् ॥ 5

१. Mss. जड्डक for जड्डक; Text: विविक्त against जातकु, जड्क, जन्तुक in Mss.

## दुःखपरीक्षा द्वादशमं प्रकरणम् ।

B 227 अत्राह – विद्यत एव आत्मा, तत्संबन्धिदुःखसद्भावात् । इह हि पञ्चोपादानस्कन्धा दुःखमित्युच्यते, तच्च अस्ति, तेन च दुःखेन कस्यचिद्भवितव्यं न निराश्रयेणेति, अतो विद्यत एव दुःखस्याश्रयः, स चात्मेति । उच्यते । स्यादात्मा यदि दुःखमेव स्यात् । तद्धि भवेत् स्वयं 5 कृतं वा परकृतं वा उभयकृतं वा हेतुरहितं वा । सर्वथा च इष्यमाणं तत्कार्यमेव नास्तीति प्रतिपादयन्नाह –

**स्वयं कृतं परकृतं द्वाभ्यां कृतमहेतुकम् ।**
**दुःखमित्येक इच्छन्ति तच्च कार्यं न युज्यते ॥ १ ॥**

तत्रैके वादिनः स्वयं कृतं दुःखमिति प्रतिपन्नाः । अपरे पुनः परकृतम्, अन्ये च 10 उभयकृतम् । केचिदहेतुसमुत्पन्नमेव दुःखमिति प्रतिपन्नाः । सर्वथा च तद्दुःखमिष्यमाणं कार्यं कर्तव्यं न युज्यते, तदेतत्प्रतिज्ञामात्रकमिति ॥ १ ॥

तत्प्रतिपादयन्नाह –

B 228 **स्वयं कृतं यदि भवेत्प्रतीत्य न ततो भवेत् ।**
**स्कन्धानिमानमी स्कन्धाः संभवन्ति प्रतीत्य हि ॥ २ ॥**[1]

15 [2]यस्मादिमान् मरणान्तिकान् स्कन्धान् प्रतीत्य इमे औपपत्त्यांशिकाः स्कन्धा उत्पद्यन्ते, तस्मात्स्वयं कृतं दुःखमिति नोपपद्यते ॥ २ ॥

B 229 इदानीं परकृतमपि दुःखं यथा न संभवति, तथा प्रतिपादयन्नाह–

**यद्यमीभ्य इमेऽन्ये स्युरेभ्यो वामी परे यदि ।**
**भवेत्परकृतं दुःखं परैरेभिरमी कृताः ॥ ३ ॥**

20 यदा अमीभ्यो मरणान्तिकेभ्यः स्कन्धेभ्यः इमे औपपत्त्यांशिकाः स्कन्धा अन्ये स्युः, एभ्यो वा औपपत्त्यांशिकेभ्यः अमी मरणान्तिकाः स्कन्धाः परे स्युः, स्यात्तदानीं परकृतं दुःखम् । न चैषामन्यत्वं दृष्टं हेतुफल[3]संबन्धावस्थानात् । वक्ष्यति हि –

B 230 प्रतीत्य यद्यद्भवति न हि तावत्तदेव तत् ।
न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतम् ॥ इति ।

[ मध्यमकशास्त्र – १८·१० ]

---

१. P suggests स्कन्धानमूनमी स्कन्धाः for स्कन्धानिमानमी स्कन्धाः. २. T presents here a passage which our Mss. do not give; that passage however seems to be necessary to explain the first line of the kārikā. Here is P's rendering of T in Sanskrit: तत्र स्वयमिति स्वात्मना इत्यर्थः । यदि स्वयं दुःखं कृतं भवेत्, तेनैव दुःखस्वरूपेण तदेव दुःखस्वरूपं कृतं स्यात् । तस्मात्प्रतीत्यसमुत्पन्नं न स्यात् इत्यर्थः । स्वरूपसद्भावात् । अभावादेव स्वरूपं न कारकमस्ति तत्प्रतीत्यसमुत्पन्नमेव । तद्यथा – स्कन्धानमूनिमे स्कन्धाः संभवन्ति प्रतीत्य हि । यस्मान्मरणकालिकानमून्. ३. T संबन्धस्थानाभावात्

अतः परकृतमपि दुःखं न संभवति । यदि हि अन्यत्वं स्यात्, तदा सति अन्यत्वे एतैः परभूतैः स्कन्धैरमी[1] परभूताः कृता इति युक्तं वक्तुं स्यात् । न चैतदेवम् । इति परकृतमपि दुःखं न संभवति ॥ ३ ॥

अथ स्यात्—न ब्रूमो यस्माद्दुःखेनैव दुःखं कृतम्, अतः स्वयं कृतमिति । किं तर्हि स्वपुद्गलेन यस्मात्स्वयमेव कृतम्, नापरेण कृत्वा दत्तम्, इत्यतः स्वयं कृतं दुःखमिति ब्रूमः । उच्यते— 5

**स्वपुद्गलकृतं दुःखं यदि दुःखं पुनर्विना ।**
**स्वपुद्गलः स कतमो येन दुःखं स्वयं कृतम् ॥ ४ ॥**

यदेतन्मनुष्यदुःखं पञ्चोपादानस्कन्धलक्षणं स्वयं पुद्गलेन कृतमिति परिकल्प्यते, कल्प्यतामसौ पुद्गलो येन तद्दुःखं स्वयं कृतम् । यदि तावद्येन दुःखेन स्वपुद्गलः प्रज्ञप्यते, तदेव दुःखं 10 तेन कृतमिति, स भेदेन[2] कथ्यतामिदं तद्दुःखमयमस्य कर्तेति । अथापि मनुष्यदुःखोपादानेन पुद्गलेन तदेव दुःखं कृतं स्यात्, न तर्हि स्वपुद्गलकृतं तत्, परपुद्गलकृतमेव स्यात् । B 231
अथोपादानभेदेऽपि पुद्गलाभेद इष्यते, एतच्च नास्ति, उपादानव्यतिरिक्तस्य भिन्नस्य पुद्गलस्य दर्शयितुमशक्यत्वात् । एवं तावत् स्वपुद्गलकृतं दुःखं न भवति ॥ ४ ॥

अत्राह—क एवमाह स्वपुद्गलकृतं दुःखमिति ? किं तर्हि परपुद्गलजं दुःखम् । अन्य 15 एव देवदुःखान्मनुष्यपुद्गलः, मनुष्यपुद्गलश्च देवदुःखं कृत्वा यस्माद्देवपुद्गलाय ददाति, तेन च देवदुःखेन देवपुद्गलः प्रज्ञप्यते, तस्मात्तस्य पुद्गलस्य तद्दुःखं परपुद्गलजमेव भवति । उच्यते—

**परपुद्गलजं दुःखं यदि यस्मै प्रदीयते ।**
**परेण कृत्वा तद्दुःखं स दुःखेन विना कुतः ॥ ५ ॥**

यदि देवदुःखं मनुष्यपुद्गलकृतम्, तेन च मनुष्यपुद्गलेन तद्दुःखं कृत्वा परस्मै देवपुद्गलाय 20 प्रदीयत इति स देवपुद्गलो देवदुःखविनिर्मुक्तः कुतो यस्मै प्रदीयेतेति । एवं तावदपरपुद्गलजस्य दुःखस्य प्रतिग्राहक एव नास्ति ॥ ५ ॥

इदानीं यश्च ददाति, असावपि नास्तीत्याह—

**परपुद्गलजं दुःखं यदि कः परपुद्गलः ।**
**विना दुःखेन यः कृत्वा परस्मै प्रहिणोति तत् ॥ ६ ॥** 25

येनोपादानेन स मनुष्यपुद्गलः प्रज्ञप्यते, स मनुष्योपादानव्यतिरिक्तः कतमो यो B 232
देवपुद्गलाय देवदुःखं कृत्वा प्रहेष्यति ? तस्मात्परपुद्गलजमपि दुःखं न संभवति ॥ ६ ॥

ततश्च—

**स्वयंकृतस्याप्रसिद्धेर्दुःखं परकृतं कुतः ।**
**परो हि दुःखं यत्कुर्यात्तत्तस्य स्यात्स्वयं कृतम् ॥ ७ ॥**

---

१. T इमे for अमी. २. Mss. हेदेन or देहेन for भेदेन. ३. Mss. युद्दुःखं for तद्दुखं. Our reading is based on T and Com.

यदि देवपुद्गलदुःखं मनुष्यपुद्गलेन कृतत्वात्परकृतं भवति, ननु, मनुष्यपुद्गलस्य स्वयंकृतमेव तद्भवति । एतच्च नास्तीत्युक्तम् । ततः स्वयंकृतस्याप्रसिद्धेर्यदा मनुष्यपुद्गलेन स्वयं तद्दुःखं न कृतम्, तदा कुतः परपुद्गलस्य देवाख्यस्य तद्दुःखं परकृतं भविष्यतीति । अतोऽपि परकृतं दुःखं न संभवति ॥ ७ ॥

5 इदानीं प्रकरणान्तरेणापि पक्षद्वयासंभवं प्रतिपादयन्नाह –

**न तावत्स्वकृतं दुःखं न हि तेनैव तत्कृतम् ।**
**परो नात्मकृतश्चेत्स्याद्दुःखं परकृतं कथम् ॥ ८ ॥**

इतश्च स्वपराभ्यां दुःखस्य करणं न युज्यते, यस्मान्न तावत्स्वकृतं दुःखम् । किं कारणम् ? यस्मान्न तेनैव हि तत् कृतम्, स्वात्मनि वृत्तिविरोधात्, अतः स्वकृतं नास्ति । न B 233 10 परकृतमपि, यस्माद्योऽसौ परः करोतीति परिकल्प्यते, स एव तावन्नात्मना कृतो नात्मना निष्पन्नः, तस्यापि हेत्वन्तरापेक्षणात् । यश्च स्वात्मना न निष्पन्नः, स कथमविद्यमानस्वभावः सन् परं करिष्यतीति न युक्तमेतत् ॥ ८ ॥

इदानीमुभयकृतमपि दुःखमसदित्याह –

**स्यादुभाभ्यां कृतं दुःखं स्यादेकैककृतं यदि ।**

15 यदि हि एकैकेन दुःखस्य करणं स्यात्, स्यात्तदानीमुभाभ्यां कृतं दुःखम् । न चैकैककृतं तत्, उक्तदोषात् । न चैकैकेन प्राणातिपाते कृते द्वाभ्यां कृत इति व्यपदेशो दृष्टः ॥

इदानीं निर्हेतुकमपि दुःखं यथा नास्ति, तथा प्रतिपादयन्नाह –

**पराकारास्वयंकारं दुःखमहेतुकं कुतः ॥ ९ ॥**

परेण अकारो[1] अकरणं यस्येति पराकारम् । न स्वयंकारोऽस्येत्यस्वयंकारम् । यदि 20 दुःखं स्वयंकृतं नास्ति, परकृतमपि नास्ति यथोक्तेन न्यायेन, तदिदानीं कुत एव निर्हेतुकं भविष्यति खपुष्पसौगन्ध्यवत् ? दुःखाभावात्कुतस्तस्याश्रयभूत आत्मा ॥ ९ ॥

यथा च चतुर्धा विचार्यमाणं दुःखमसत्, एवं बाह्या अपि बीजाङ्कुरघटपटादयो भावा वेदितव्याः, इति प्रतिपादयन्नाह–

**न केवलं हि दुःखस्य चातुर्विध्यं न विद्यते ।**

25 सर्वेषां

**बाह्यानामपि[2] भावानां चातुर्विध्यं न विद्यते ॥ १० ॥**

B 234 पूर्ववत्सर्वं समं योज्यम् । यदि खल्वेषां दुःखादीनां चातुर्विध्यासंभवः, तत्कतमेन तर्हि इदानीं प्रकारेण एषां सिद्धिरिति । उच्यते । स्वभावतो यदि एतानि दुःखादीनि स्युः, नियतमेषां चतुर्णां प्रकाराणामन्यतमेन प्रकारेण सिद्धिः स्यात् । न त्वस्ति । तस्मात्स्वभावतो न सन्ति 30 दुःखादीनीत्यवसीयते । अथ विपर्यासमात्रलब्धात्मसत्ताकाया दुःखादिसंवृतेः प्रतीत्यसमुत्पाद-

---

१. T om. अकारो. २. The Com. seems to read सर्वेषां for बाह्यानां.

व्यवस्था मृग्यते, तदा कर्मकारकपरीक्षाप्रकरणविहितविधिना यथोदितपक्षचतुष्टयतिरस्कारेण इदंप्रत्ययतामात्रार्थप्रतीत्यसमुत्पादसिद्धया सिद्धिरभ्युपेया। यथोक्तम्–

स्वयंकृतं परकृतं द्वाभ्यां कृतमहेतुकम्।
तार्किकैरिष्यते दुःखं त्वया तूक्तं प्रतीत्यजम्॥ इति॥
[लोकातीतस्तव–१९]

उक्तं च भगवता आर्योपालिपृच्छायाम्[1]–　　5

..............................

तथा[2]–

संवृति भाषितु धर्म जिनेन
　संस्कृतऽसंस्कृत पश्यथ एव।
नास्तिह भूततु आत्म नरो वा
　एत्तकु लक्षण सर्वजगस्य॥　　10
कृष्णशुभं च न नश्यति कर्म
　आत्मन कृत्व च वेदयितव्यम्।
नोऽपि तु संक्रम कर्मफलस्य
　नो च अहेतुक प्रत्यनुभोति॥
सर्वि भवा अलिका वसिकाश्च　　15
　रित्तक तुच्छक फेनसमाश्च।
मायमरीचिसमा सद शून्या
　देशितु संवृतु ते च विविक्ताः॥
शैलगुहागिरिदुर्गनदीषु　　20
　यद्व प्रतिश्रुक जायि प्रतीत्य।
एविमु संस्कृत सर्वि विजान
　मायमरीचिसमं जगु सर्वम्॥
[समाधिराजसूत्र–३७.३४–३६, ३०]

इत्यादि॥ १०॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ　　25
दुःखपरीक्षा नाम द्वादशमं प्रकरणम्॥

---

१. The Mss. reproduce here the four stanzas beginning with भय दर्शित. etc. from page 18, but T om. them. २. T reads भगवता चोक्तम् for तथा.

B 237

## संस्कारपरीक्षा त्रयोदशमं प्रकरणम् ।

यतश्चैवं समनन्तरातिक्रान्तप्रकरणविधिना स्वपरोभयकृतत्वमहेतुसमुत्पन्नत्वं च निरूप्यमाणं भावानामसत्, अन्यश्चोत्पादको विधिरसन्, उत्पन्नरूपत्वेन चैते भावा अविद्यातिमिरोपहतमतिनयनानां बालपृथग्जनानां ख्यान्ति, तस्मान्निःस्वभावा एव सन्तो बालानां विसंवादका मायाकरितुरगादिवत्
5 तदनभिज्ञानां न तु विज्ञानाम् । अत एव सर्वधर्मस्वाभाव्यापरोक्षधीनयनः समुन्मूलिताशेषाविद्यावासनः चतुर्विपर्यासविपर्यस्तात्राणसत्त्वपरित्राणाय अविपरीतनैःस्वाभाव्योपदेशतत्परो बुद्धो जगद्विबोधको महाकारुणिकः—

**तन्मृषा मोषधर्म यद्भगवानित्यभाषत ।**
**सर्वे च मोषधर्माणः संस्कारास्तेन ते मृषा ॥ १ ॥**

10 सूत्रे उक्तम्—तन्मृषा मोषधर्म यदिदं संस्कृतम् । एतद्धि खलु भिक्षवः परमं सत्यं यदिदममोषधर्म निर्वाणम् । सर्वसंस्काराश्च मृषा मोषधर्माणः इति । तथा—नास्त्यत्र तथता[1] अवितथता वा । मोषधर्मकमप्येतत् । प्रलोपधर्मकमप्येतत्[2] इति । तदनेन न्यायेन यन्मोषधर्म तन्मृषेत्येवं यस्मादुक्तवांस्तथागतो भगवान्, सर्वे च मोषधर्माणः संस्काराः, तस्मान्मोषधर्मकत्वेन ते संस्कारा मृषा भवन्ति चित्रकरयन्त्रदारिकावत्[3], लक्षणोपेतयन्त्रमयवारणवञ्चितोदयन-
15 वत्सराजवत् । तत्र विसंवादकं मोषधर्मकं वितथख्यात्यालातचक्रवत् । अतो निःस्वभावत्वेन मृषा सर्वसंस्काराः मोषधर्मकत्वात् मरीचिकादिजलवत् । यत्तु सत्यं न तन्मोषधर्मकम्, तद्यथा निर्वाणमेकम्[4] । ततश्च विहितया उपपत्त्या अस्माच्चागमात् सिद्धं सर्वभावानां नैःस्वाभाव्यम् । शून्याः सर्वधर्मा निःस्वभावयोगेन इति च प्रज्ञापारमिता-अर्धशतिकापाठात् ॥ १ ॥

B 238

अत्राह—यद्येवं मोषधर्मकत्वेन सर्वसंस्काराणां मृषात्वं प्रतिपादितं भवता, नन्वेवं सति न
20 सन्ति सर्वे भावा इति सर्वपदार्थापवादिनी मिथ्यादृष्टिरेव स्यात् । उच्यते । सत्यं मोषधर्मकाः सर्वसंस्काराः, येऽद्यापि भवन्तं मुष्णन्ति । ननु च भोः,

**तन्मृषा मोषधर्म यद्यदि किं तत्र मुष्यते ।**

B 239

यदा अस्माभिः तन्मृषा मोषधर्मकम् इत्युक्तम्, तदा किं तत्र मुष्यते ? किं तत्राभावो भवति ? कश्चिद्यदि पदार्थोऽभविष्यत्, स्यात्तस्यापवादादभावदर्शनान्मिथ्यादृष्टिः । यदा तु पदार्थमेव
25 कंचिन्न पश्यामः, तदा किं तत्र मुष्यते ? नैव किंचिदभावो भवतीत्ययुक्तोऽयमुपालम्भो भवतः ॥

अत्राह—यदि अभावदर्शनमपि न प्रतिपाद्यते, किं पुनरनेनागमेन प्रतिपाद्यत इति ? उच्यते—

**एतत्तूक्तं भगवता शून्यतापरिदीपकम् ॥ २ ॥**

यदेतदुक्तं भगवता, तन्न भावानामभावपरिदीपकम् किं तर्हि शून्यतापरिदीपकम् । स्वभावानुत्पादपरिदीपकमित्यर्थः । यथोक्तमनवतप्तहृदापसंक्रमणसूत्रे—

---

१. P तथता वा for तथता against Mss. and T. २. T विनाशधर्मकमेतत्; P प्रलाप° for प्रलोप°.
३. T om. चित्रकरयन्त्रदारिकावत्, लक्षणोपेतयन्त्रमयवारणवञ्चितोदयनवत्सराजवत्. ४. T om. एकम्.

य: प्रत्ययैर्जायति स ह्यजातो
नो तस्य उत्पादु सभावतोऽस्ति ।
य: प्रत्ययाधीनु स शून्य उक्तो
य: शून्यतां जानति सोऽप्रमत्त: ॥

इति ॥ २ ॥ 5

अत्राह – नायमागमो भावस्वभावानुत्पादं परिदीपयति, किं तर्हि नि:स्वभावत्वम्, स्वभावस्यानवस्थायित्वम्, विनाशित्वम्, इति । कुत एतदिति चेत्, B 240

**भावानां नि:स्वभावत्वमन्यथाभावदर्शनात् ।**

विचार्यमाणानामन्यथात्वं विपरिणामदर्शनात् इत्यर्थ: । एतदुक्तं भवति – यदि भावानां स्वभावो न स्यात्, तदानीं नैवैषामन्यथात्वमुपलभ्येत । उपलभ्यते च परिणाम: । तस्मात्स्वभावानवस्थायित्वमेव सूत्रार्थ इति विज्ञेयम् ॥ 10

इतश्चैतदेवम् । यस्मात् –

**अस्वभावो भावो नास्ति भावानां शून्यता यत: ॥ ३ ॥**

यो ह्यस्वभावो भाव:, स नास्ति । भावानां च शून्यता धर्म इष्यते । न च असति धर्मिणि तदाश्रितो धर्म उपपद्यते । न हि असति वन्ध्यातनये तच्छ्यामतोपपद्यत इति । तस्मादस्त्येव भावानां स्वभाव इति ॥ ३ ॥ 15

अपि च –

**कस्य स्यादन्यथाभाव: स्वभावश्चेन्न विद्यते ।** B 241

यदि भावानां स्वभावो न स्यात्, योऽयं विपरिणामलक्षण: अन्यथाभाव:, स कस्य स्यादिति ? अत्रोच्यते । एवमपि परिकल्प्यमाने 20

**कस्य स्यादन्यथाभाव: स्वभावो यदि विद्यते ॥ ४ ॥**

इह यो धर्मो यं पदार्थं न व्यभिचरति, स तस्य स्वभाव इति व्यपदिश्यते, अपरप्रतिबद्धत्वात् । अग्नेरौष्ण्यं हि लोके तदव्यभिचारित्वात् स्वभाव इत्युच्यते । तदेव औष्ण्यमप्सूपलभ्यमानं परप्रत्ययसंभूतत्वात्कृत्रिमत्वान्न स्वभाव इति । यदा चैवमव्यभिचारिणा स्वभावेन भवितव्यम्, तदा अस्य अव्यभिचारित्वादन्यथाभाव: स्यादभाव: । न हि अग्नि: शैत्यं प्रतिपद्यते । एवं भावानां सति स्वभावाभ्युपगमेऽन्यथात्वमेव न संभवेत् । उपलभ्यते चैषामन्यथात्वम् । अतो नास्ति स्वभाव: ॥ ४ ॥ 25

अपि च । अयमन्यथाभावो भावानां नैव संभवति, यद्दर्शनात्सस्वभावता स्यात् । यथा च न संभवति, तथा प्रतिपादयन्नाह –

---

१. T om. विचार्यमाणानां. २. Mss. नि:स्वभावो. Our reading is supported by T. ३ Mss. wrongly नास्वभावश्च भावो नास्ति. Our text is supported by T and Com. ४ P अग्ने: for अग्नि:.

**तस्यैव नान्यथाभावो नाप्यन्यस्यैव युज्यते ।**
**युवा न जीर्यते यस्माद्यस्माज्जीर्णो न जीर्यते ॥ ५ ॥**

B 242 तस्यैव तावत् प्राग्वत् प्रागवस्थायां वर्तमानस्य भावस्यान्यथात्वं नोपपद्यते । तथा हि यूनो युवावस्थायामेव वर्तमानस्य नास्ति अन्यथात्वम् । अथापि अवस्थान्तरप्राप्तस्यैव अन्यथात्वं 5 परिकल्प्यते, तदपि नोपपद्यते । अन्यथात्वं नाम जरायाः पर्यायः । तद्यदि यूनो नेष्यते, अन्यस्यैव जीर्णस्य भवतीति, तदपि न युज्यते । यस्मान्न हि जीर्णस्य पुनर्जरया संबन्धः, निष्प्रयोजनत्वात् । किं हि जीर्णस्य पुनर्जरया संबन्धः कुर्यात् ? तदागमनान्तरेण[1] जीर्णताभावाज्जीर्णो जीर्यत इति न युज्यते । अथ यून एवान्यथाभावः, तदयुक्तम्, अप्राप्तजरावस्थस्य युवेति व्यपदेशात्, अवस्थाद्वयस्य च परस्परविरुद्धत्वात् ॥ ५ ॥

10 अपि च ।

**तस्य चेदन्यथाभावः क्षीरमेव भवेद्दधि ।**

अथ स्यात्—क्षीरावस्थापरित्यागेन दध्यवस्था भवति, अतः न क्षीरमेव दधि भवतीति । उच्यते । यदि क्षीरं दधि भवतीति नेष्यते परस्परविरोधात्—

**क्षीरादन्यस्य[2] कस्याथ दधिभावो भविष्यति ॥ ६ ॥**

15 किमुदकस्य दधिभावो भवतु ? तस्मादसंबद्धमेव तदन्यस्य दधिभावो भविष्यतीति । तदेवमन्यथात्वासंभवात् कुतस्तद्दर्शनात् सस्वभावता भावानां प्रसेत्स्यतीति न युक्तमेतत् । यथोक्तमार्यरत्नाकरमहायानसूत्रे—

B 243
यो न पि जायति नो चुपपद्यी
नो च्यवते न पि जीर्यति धर्मः ।
20 तं जिनु दर्शयती[3] नरसिंह
तत्र[4] निदेशयि सत्त्व महर्षी ॥
यस्य स्वभाव न विद्यति कश्चि
नोऽपरभावतु केनचि लब्धः ।
नान्तरतो न पि बाहिरतो वा
25 लभ्यति तत्र निवेशयि नाथः ॥
शान्त गती कथिता सुगतेन
नो च गती उपपद्यति[5] काचि ।
तत्र च व्योहरसी गतिमुक्तो
मुक्तकु मोचयसी बहुसत्त्वान् ॥

---

१ T तदन्तरेण for तदागमनान्तरेण. २ P क्षीरादन्यस्य कस्यचिद् for क्षीरादन्यस्य कस्याथ which is supported by Mss. and T. ३ Mss. देशयति for दर्शयती. ४ T तत्र निवेशयि सत्त्वशतानि for the line. ५. P suggests उपलभ्यति for उपपद्यति.

सर्वि वदेसि[1] निरात्मक धर्मान् — B 244
सत्त्वंतु[2] ग्राहतु मोचसि लोकम्।
मुक्त स्वयं गतितो गतिमुक्तो
तेन सि पारगतो न च तीर्णः ॥
पारगतोऽसि भवार्णवतीर्णः — 5
पारगतो न च लभ्यति कश्चि।
पारु न विद्यति नापि अपारु
पारगतोऽस्मि वदेसि च वाक्यम् ॥
वाच न विद्यति यां च वदेसि
यं पि वदेसि न विद्यति तं पि। — 10
यस्य वदेसि न विद्यति[3] सोऽपि
योऽपि विजानति सोऽपि असन्तो ॥
तत्र प्रणष्टु जगं इमु सर्वं
वितथविकल्पनिवेशवशेन।
शान्त विजानति यो नरु[4] धर्मां- — 15 B 245
स्तेहि तथागतु दृष्ट स्वयंभूः ॥
शान्त प्रजानति धर्म प्रणीतान्
प्रीति स विन्दति तोषति सत्त्वान्।
सो भवती जिनु जित्वन[5] क्लेशान्
आत्म.......................... ॥ — 20
तेन विजानित बोधि जिनानां
बुद्धिय बोधयते स जगं पि।

इत्यादि ॥ ६ ॥

यच्चोक्तम्—अस्वभावो भावो नैवास्ति, शून्यता च भावानामिष्यते, तस्मादस्ति शून्यताश्रयो भावस्वभाव इति, एतदपि न युज्यते इत्याह— — 25

**यद्यशून्यं भवेत्किंचित्स्याच्छून्यमिति किंचन।**
**न किंचिदस्त्यशून्यं च कुतः शून्यं भविष्यति ॥ ७ ॥**

यदि शून्यता नाम काचित् स्यात्, तदा तदाश्रयो भावस्वभावः स्यात्। न त्वेवम्। इह हि शून्यता नामेति सर्वधर्माणां सामान्यलक्षणमित्यभ्युपगमात् अशून्यधर्माभावादशून्यतैव नास्ति। यदा च अशून्याः पदार्था न सन्ति, अशून्यता च नास्ति, तदा प्रतिपक्षनिरपेक्षत्वा- — B 246 — 30

---

१. Mss. वदामि for वदेसि. २. Mss. सर्वंतु but the sense and T suggest सत्त्वतु (सत्त्वग्राहात्). ३. T लभ्यति for विद्यति. ४. Mss. ये न च for यो नरु. ५. Mss. जित्व च for जित्वन.

च्छून्यतापि खपुष्पमालावन्नास्तीत्यवसीयताम् । यदा च शून्यता नास्ति, तदा तदाश्रया अपि पदार्था न सन्तीति स्थितमविकलम् ॥ ७ ॥

अत्राह—त्रीणि विमोक्षमुखानि शून्यतानिमित्ताप्रणिहिताख्यानि विमुक्तये विनेयेभ्यो भगवता निर्दिष्टानि सर्वतीर्थिकसमयासाधारणानि[1] सौगत एव प्रवचने समुपलभ्यन्ते । येषामुप-
5 देशार्थमेव बुद्धा भगवन्तोऽशेषतीर्थ्यवादमहामोहान्धकारानुगतजगति जगदेकप्रदीपा नैरात्म्योप-देशाविच्छिन्नशिखा उत्पद्यन्ते । स भवांस्तथागतप्रवचनव्याख्यानव्याजेन इदानीं तामेव शून्यतां प्रतिक्षेप्तुमारब्धवान्, इत्यलं भवता स्वर्गापवर्गमार्गसमुच्छेदकेनेति । उच्यते । अहो बत भवानत्यु-न्मुख इव अत्यन्तविपर्यासान्निर्वाणपुरगामिनं शिवमृजुं परमं पन्थानमवधूय भावाभिनिवेशव्या-कुलितं संसारकान्तारानुगमेव मार्गं मोक्षपुरगामित्वेन समाश्रितो निर्मुमुक्षुः सन् संसाराटवीकान्तारः[2]
10 सद्भिरुपालभ्य एव सन् अभिमानाभिनिवेशग्रहपरवशतया तानेवोपालभते । ननु भोः, निरवशेष-क्लेशव्याधिचिकित्सकैर्महावैद्यराजैः—

B 247

**शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जिनैः ।**
**येषां तु शून्यता दृष्टिस्तानसाध्यान् बभाषिरे ॥ ८ ॥**

इह सर्वेषामेव दृष्टिकृतानां सर्वग्रहाभिनिवेशानां यन्निःसरणमप्रवृत्तिः सा शून्यता । न च
15 दृष्टिकृतानां निवृत्तिमात्रं भावः । ये तु तस्यामपि शून्यतायां भावाभिनिवेशिनः, तान् प्रति अवाचका वयमिति कुतोऽस्मदुपदेशात् सकलकल्पनाव्यावृत्त्या मोक्षो भविष्यति ? यः नकिंचिदपि

B 248

ते पण्यं दास्यामीत्युक्तः, स चेत् 'देहि भोस्तदेव मह्यं नकिंचिन्नाम पण्यम्,' इति ब्रूयात्, स केनोपायेन शक्यः पण्याभावं ग्राहयितुम् ? एवं येषां शून्यतायामपि भावाभिनिवेशः, केनेदानीं स तेषां तस्यां भावाभिनिवेशो निषिध्यतामिति ? अतो महाभैषज्येऽपि दोषसंज्ञित्वात् परमचिकि-
20 त्सकैर्महावैद्यैस्तथागतैः प्रत्याख्याता एव ते । यथोक्तं भगवता आर्यरत्नकूटसूत्रे—

यन्न शून्यतया धर्मान् शून्यान् करोति, अपि तु धर्मा एव शून्याः । यन्नानिमित्तेन धर्माननिमित्तान् करोति, अपि तु धर्मा एवानिमित्ताः । यन्नाप्रणिहितेन धर्मानप्रणिहितान् करोति, अपि तु धर्मा एवाप्रणिहिताः । यैवं प्रत्यवेक्षा, इयमुच्यते काश्यप मध्यमा प्रतिपद्धर्माणां भूतप्रत्यवेक्षा । ये हि काश्यप शून्यतोपलम्भेन शून्यतां प्रतिसरन्ति, तानहं नष्टप्रणष्टानिति
25 वदामि ॥

इति प्रवचनात् ॥

तथा—

वरं खलु काश्यप सुमेरुमात्रा पुद्गलदृष्टिराश्रिता, न त्वेव अभावाभिनिवेशिकस्य शून्यता-दृष्टिः । तत्कस्य हेतोः ? सर्वदृष्टिकृतानां हि काश्यप शून्यता निःसरणम् । यस्य खलु पुनः
30 शून्यतैव दृष्टिः, तमहमचिकित्स्यमिति वदामि । तद्यथा काश्यप ग्लानः पुरुषः स्यात् । तस्मै

---

1 Mss. and P सर्वतीर्थिकमारमतासाधारणानि for सर्वतीर्थिकसमयासाधारणानि which is based on T. २ T om. निर्मुमुक्षुः सन् संसाराटवीकान्तारः.

वैद्यो भैषज्यं दद्यात् । तस्य तद्भैषज्यं सर्वदोषानुच्चार्य स्वयं कोष्ठगतं न निःसरेत् । तत्किं मन्यसे काश्यप अपि तु स पुरुषस्ततो ग्लान्यान्मुक्तो भवेत् ? नो हीदं भगवन् । गाढतरं तस्य पुरुषस्य ग्लान्यं भवेत्, यस्य तद्भैषज्यं सर्वदोषानुच्चार्य कोष्ठगतं न निःसरेत् । भगवानाह—एवमेव काश्यप सर्वदृष्टिकृतानां शून्यता निःसरणम् । यस्य खलु पुनः शून्यतैव दृष्टिः, तमहमचिकित्स्यमिति वदामि ॥ इति ॥ ८ ॥　B 249　5

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
संस्कारपरीक्षा नाम त्रयोदशमं प्रकरणम् ॥

## संसर्गपरीक्षा चतुर्दशमं प्रकरणम् ।

B 250 अत्राह—अस्त्येव भावस्वभावः, तत्संसर्गोपदेशात् । इह यन्नास्ति, न तस्य संसर्गः, तद्यथा वन्ध्यासुतदुहित्रोः । अस्ति च संस्काराणां संसर्गोपदेशः । चक्षुः प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानम्, त्रयाणां संनिपातः स्पर्शः, स्पर्शसहजा वेदनेति विस्तरः । तथा संज्ञा च वेदना 5 च संसृष्टावेतौ धर्मौ नासंसृष्टाविति संस्काराणां संसर्गोपदेशः । तदेवं संसर्गोपदेशाद्विद्यत एव भावस्वभाव इति । उच्यते । स्यादेतदेवम्, यदि संसर्ग एव भवेतो[1] भवेत्, न त्वस्ति, यस्मात्—

द्रष्टव्यं दर्शनं द्रष्टा त्रीण्येतानि द्विशो द्विशः ।
सर्वशश्च न संसर्गमन्योन्येन व्रजन्त्युत ॥ १ ॥

तत्र द्रष्टव्यं रूपम्, दर्शनं चक्षुः, द्रष्टा विज्ञानम् । एषां त्रयाणां द्विशो द्विशः संसर्गो 10 नास्ति । चक्षुषो रूपस्य च, चक्षुषो विज्ञानस्य च, विज्ञानस्य रूपस्य च संसर्गो नास्ति । इत्येवं द्विशो द्विशः संसर्गो न भवति । सर्वशोऽपि त्रयाणामप्येषां युगपच्च संसर्गो नास्ति ॥ १ ॥

B 251 यथा च द्रष्टव्यदर्शनद्रष्टॄणां द्विशो द्विशः सर्वशश्च संसर्गाभावः,

एवं रागश्च रक्तश्च रञ्जनीयं[2] च दृश्यताम् ।

रागस्य रक्तस्य च संसर्गो नास्ति, रागस्य[3] रञ्जनीयस्य च, त्रयाणामपि युगपत्संसर्गो 15 नास्ति । यथा चैषाम्, एवम्—

त्रैधेन शेषाः क्लेशाश्च शेषाण्यायतनानि च ॥ २ ॥

अन्योन्येन संसर्गं न व्रजन्ति । त्रयः प्रकारास्त्रिधा, त्रिधाभावस्त्रैधम् । तेन त्रैधेन शेषाः क्लेशा द्वेषमोहादयः, ते एते द्वेषद्विष्टद्वेषणीयादिना त्रैधेन श्रोत्रश्रोतृश्रोतव्यादिना च ॥ २ ॥

कस्मात्पुनरेतेषां संसर्गो नास्तीत्याह—

20 अन्येनान्यस्य संसर्गस्तच्चान्यत्वं न विद्यते ।
द्रष्टव्यप्रभृतीनां यन्न संसर्गं व्रजन्त्यतः ॥ ३ ॥

यदित्ययं यस्मादर्थे । यदि द्रष्टव्यादीनां परस्परमन्यत्वं स्यात्, तदा क्षीरोदकयोरिव अन्येन अन्यस्य संसर्गः स्यात् । तच्चान्यत्वं यस्मादेषां द्रष्टव्यप्रभृतीनां न संभवति, अतो नैते संसर्गं व्रजन्ति ॥ ३ ॥

25 अपि च ।

B 252 न च केवलमन्यत्वं द्रष्टव्यादेर्न विद्यते ।
कस्यचित्केनचित्सार्धं नान्यत्वमुपपद्यते ॥ ४ ॥

न च केवलं कार्यकारणभावस्थितानां द्रष्टव्यादीनामन्यत्वं न संभवति, घटपटादीनामपि पदार्थानां सर्वेषां नैव संभवतीत्यवसीयताम् ॥ ४ ॥

---

१ P. om. भवतो against Mss. २ Mss. रञ्जनीयश्च for रञ्जनीयं च. ३ Mss. रागस्य रक्तस्य रञ्जनीयस्य च, but it appears that we should add after: रागस्य रञ्जनीयस्य च.

यथा चैषां द्रष्टव्यप्रभृतीनां परस्परतोऽन्यत्वमसत्, तथा प्रतिपादयन्नाह—

**अन्यदन्यत्प्रतीत्यान्यन्नान्यदन्यदृतेऽन्यतः।**
**यत्प्रतीत्य च यत्तस्मात्तदन्यन्नोपपद्यते॥ ५॥**

इह यदेतद् घटाख्यं वस्तु पटादन्यदिति व्यपदिश्यते, तदेतदन्यदन्यत्प्रतीत्य अन्यद्भवति। अन्यवस्तुनः ऋते, ऋतेऽन्यतः, विना अन्यत्, अन्यदन्यन्न भवति। यच्च पटाख्यं वस्तु 5 अन्यद् घटाख्यं वस्तु प्रतीत्य अन्यद्भवति, तस्मात्पटाख्याद्वस्तुनः तद् घटाख्यं वस्तु नान्यद्भवतीत्यवसीयताम्। यस्मात्, यत्प्रतीत्य यद्भवति, तस्मात्तदन्यन्न भवति, सापेक्षत्वाद् बीजाङ्कुरवत् ह्रस्वदीर्घवच्चेति। तथा च वक्ष्यति—

प्रतीत्य यद्यद्भवति न हि तावत्तदेव तत्।
न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतत्॥ 10

[मध्यमकशास्त्र-१८·१०]

इति॥ ५॥

अत्राह—यदि घटादन्यः पटः स्यात्, तं च पृथग्भूतं पटमपेक्ष्य अन्यो घटः स्यात्, तदा को दोष इति। उच्यते—

**यद्यन्यदन्यदन्यस्मादन्यस्मादप्यृते भवेत्।** B 253
**तदन्यदन्यदन्यस्मादृते नास्ति च नास्त्यतः॥ ६॥** 15

एकोऽत्र अन्यशब्दः उपदर्शने, अपरश्च अर्थान्तरपरामर्शी, अन्यश्च प्रसिद्धोच्चारणम्, इति अन्यशब्दत्रयोपादानम्। यदि हि एतद् घटाख्यं वस्तु पटादन्यस्मादन्यत् स्यात्, तद् घटाख्यं वस्तु अन्यस्मादपि पटाख्यादृते अन्यद्भवेत्, तदा च पटनिरपेक्षस्यैव एकैकस्य घटस्य अन्यत्वं भवेत्। यद्धि यस्मादन्यत्, तत्तेन विनापि सिद्ध्यति। तद्यथा। स एव घटो न स्वरूपनिष्पत्तावन्यं पटमपेक्षते। एवमन्यत्वमपि यदि घटस्य अन्यस्मात्पटादृते भवेत्, तदानीं 20 पटनिरपेक्षस्य घटस्य परत्वं स्यात्। न तु एकैकस्य पटनिरपेक्षस्य घटस्यान्यत्वं दृष्टम्। तस्मादन्यद्भवतीति ब्रुवता यदपेक्ष्य यदन्यत्, ततस्तदन्यन्न भवतीति स्फुटमभ्युपेतं भवति॥

अत्राह—यदि खलु अन्यत्वमेवं कुतश्चित्कस्यचिन्नास्ति, ननु इदमपि तदा न संभवति वक्तुम्—यस्मादन्यत्प्रतीत्य अन्यदन्यद्भवतीति, तस्मादेव तदन्यदन्यन्न भवतीति। उच्यते। यत एव हि परस्परापेक्षिकी भावानामन्यत्वसिद्धिः, अत एव अन्यदित्युच्यते लौकिके व्यवहारे स्थित्वा। 25 वस्तुतस्तु परीक्ष्यमाणमन्यत्वं न संभवतीति ब्रूमः॥

यदि तर्हि एवमप्यविद्यमानेऽप्यन्यत्वे लोकसंवृत्या पटादन्यो घट इति व्यपदिश्यते, अथ कस्माद् बीजाङ्कुरयोरपि एवमन्यत्वं न व्यपदिश्यते? उच्यते। नैव हि लोको घटपटयोरिव बीजाङ्कुरयोरन्यत्वं प्रतिपद्यते, घटपटयोरिव जन्यजनकत्वाभावप्रसङ्गात्, यौगपद्यभावप्रसङ्गात्। B 254 अपि च। यस्माद्बीजमात्रमुप्त्वा बीजकार्यं वृक्षमुपदर्शयति पुमान् लोके—अयं वृक्षो मयोप्त इति, 30 तस्माल्लोकेऽपि कार्यकारणभूतानां नास्त्येव परत्वमिति व्यवस्थाप्यते॥ ६॥

अत्राह – यदि पदार्थान्तरे पदार्थान्तरसापेक्षा परबुद्धिः स्यात्, स्यादेष दोषः – तस्मात्तदन्यन्न भवतीति। न त्वेवं ब्रूमः। किं तर्हि इह अन्यत्वं नाम सामान्यविशेषोऽस्ति, तद्यत्र समवेतम्, स पदार्थः पदार्थान्तरनिरपेक्षयापि पर इत्युच्यते, तस्मादुक्तदोषानवसरोऽस्मत्पक्षे इति। उच्यते। स्यादेतदेवम्, यदि अन्यत्वमेव स्यात्, न त्वस्ति। इहेदमन्यत्वं कल्प्यमानमन्यस्मिन् वा कल्प्येत,
5 अनन्यस्मिन् वा ? उभयथा च नोपपद्यत इति प्रतिपादयन्नाह –

**नान्यस्मिन् विद्यतेऽन्यत्वमनन्यस्मिन्न विद्यते।**

तत्र अन्यस्मिन्नन्यत्वमस्तीति कल्प्यते, किं तदानीमन्यत्वपरिकल्पनया ? अन्यव्यपदेशसिद्ध्यर्थं हि भवता अन्यत्वं परिकल्प्यते। स च अन्यव्यपदेशो विनाप्यन्यत्वेन सिद्ध एव, यस्माल्लब्धान्यव्यपदेश एव पदार्थेऽन्यस्मिन् अन्यत्वं कल्प्यते, इत्येवं तावदन्यस्मिन्नन्यत्वं न संभवति।
10 इदानीमनन्यस्मिन्नपि अन्यत्वं नास्ति, यस्मादनन्य उच्यते एकः, तत्र च अन्यत्वविरुद्धमेकत्वमस्तीति। यतः विरोधादनन्यस्मिन्नपि अन्यत्वं न संभवति। यच्च इदानीं नान्यस्मिन्ननन्यस्मिन् विद्यते,
B 255 तद्व्यतिरिक्तस्य पदार्थान्तरस्यासंभवाद् एतद्व्यतिरिक्तेऽपि पदार्थे न संभवति, तन्नैवास्ति। यदा चैवमन्यत्वमेव नास्ति, तदा अन्यत्वसमवायनिबन्धनः अन्यबुद्धिध्वनिप्रवृत्तिहेतुरन्योऽपि पदार्थो नास्तीति सिद्धम्॥

15 अत्राह–यद्यपि अन्यत्वं नास्ति, तथापि अन्यस्तावदस्ति। न च असति अन्यत्वे अन्यो भवितुमर्हति, अतोऽन्यत्वं भविष्यतीति। उच्यते –

**अविद्यमाने चान्यत्वे नास्त्यन्यद्वा तदेव वा॥ ७॥**

यदा अन्यत्वमेव नास्तीति प्राक् प्रतिपादितम्, तदा कुतः असति अन्यत्वे अन्यद्वा तदेव वा भविष्यति ? तदेवेति अनन्यत्वमित्यर्थः। तस्मान्नास्ति अन्यद्वा तदेव वा॥ ७॥

20 अत्राह–विद्यन्त एव दर्शनादयः, संसर्गसद्भावात्। इह दर्शनादीनां यद्यपि अन्यत्वं नास्तीति प्रतिपादितम्, तथापि त्रयाणां संनिपातः संगतिः स्पर्श इति संसर्गोऽस्ति। ततश्च संसर्गसद्भावाद् विद्यन्त एव दर्शनादय इति। उच्यते। स्युरेवम्, यदि तेषां संसर्ग एव स्यात्। न त्वस्ति। यथा च नास्ति, तथा प्रतिपादयन्नाह–

**न तेन तस्य संसर्गो नान्येनान्यस्य युज्यते।**

25 इह यदि दर्शनादीनां संसर्गः स्यात्, स एकत्वेन वा परिकल्प्येत अन्यत्वेन वा ? तत्र एकत्वे नास्ति संसर्गः। न हि एककं क्षीरमुदकनिरपेक्षमुदकेन संसृज्यत इत्युच्यते। पृथक्त्वेऽपि
B 256 संसर्गो नास्ति। न हि उदकात्पृथगवस्थितं क्षीरमुदकेन संसृज्यत इति कथ्यते। एवं दर्शनादीनां यदि एकत्वे सति संसर्गः परिकल्प्यते, सोऽनुपपन्नः। एककस्यापि चक्षुषः संसृष्टिप्रसङ्गात्। अथ पृथक्त्वम्, एवमप्यनुपपन्नः। एककस्यापि चक्षुषो रूपादिभ्यः पृथग्भूतस्य संसृष्टिप्रसङ्गात्।
30 असति संसर्गे नास्ति दर्शनादिकमिति सिद्धम्॥

अत्राह – यद्यपि संसर्गो नास्ति, तथापि संसृज्यमानं संसृष्टं संस्रष्टा चास्ति, तदप्रतिषेधात्। न च संसर्गमन्तरेण संसृज्यमानं संसृष्टं संस्रष्टा च संभवति। तस्मात्संसर्गोऽपि भविष्यतीति। उच्यते। एतदपि न युक्तम्। यस्माद्यदा संसर्ग एव नास्तीति प्रतिपादितम्, असति च

संसर्गे तदा कुतः संसृज्यमानादिकम् ? तत्र वर्तमानसंसर्गक्रियासाधनकर्मभूतं संसृज्यमानम्, संसृष्टं निष्पन्नसंसर्गक्रियम्, संस्रष्टा कर्ता क्रियानिष्पत्तौ स्वातन्त्र्येणावस्थितः । तदत्र संसर्गाभावादेव संसृज्यमानादिकमपश्यंस्तत्प्रतिषेधं निगमयन्नाह –

**संसृज्यमानं संसृष्टं संस्रष्टा च न विद्यते ॥ ८ ॥**

इति । यथोक्तं भगवता [ उपालिपरिपृच्छायाम् ] 5

सर्वसयोगि तु पश्यति चक्षु-
स्तत्र न पश्यति प्रत्ययहीनम् ।
[ नैव च ] चक्षु पपश्यति [ रूपं ]
तेन सयोगवियोगविकल्पः ॥
आलोकसमाश्रित पश्यति चक्षु 10
रूप मनोरम चित्रविचित्रम् ।
येन च योगसमाश्रित चक्षु-
स्तेन न पश्यति चक्षु कदाचि ॥
ते परिनिर्वृत लौकिक शूरा B 257
येहि स्वभावत ज्ञातिमि धर्माः । 15
कामगुणैर्हि चरन्ति असङ्गाः
सङ्ग विवर्जिय सत्त्व विनेन्ति ॥
नो पि च सत्त्व न जीविह कश्चि
सत्त्वहितं च करोन्ति जिनेन्द्राः ।
[1]
...................................... 20
सत्त्वु न अस्ति करोन्ति च अर्थम् ॥
सङ्गु न विद्यति अत्र कदाचि
......................................
......................................
तस्य न विद्यति वेदन लोके ॥ 25

तथा – B 258

भावितु मार्ग पवर्तितु ज्ञान
शून्यक धर्म निरात्मक सर्वि ।
येन विभावित भोन्तिमि धर्मा-
स्तस्य भवेत्प्रतिभानमनन्तम् ॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
संसर्गपरीक्षा नाम चतुर्दशमं प्रकरणम् ॥

1 Mss. damaged.

## स्वभावपरीक्षा पञ्चदशमं प्रकरणम् ।

B 259 अत्राह — विद्यत एव भावानां स्वभावः, तन्निष्पादकहेतुप्रत्ययोपादानात् । इह यन्नास्ति न तस्य निष्पादकहेतुप्रत्ययोपादानमस्ति यथा खपुष्पस्य । उपादीयन्ते च बीजाविद्यादयो हेतुप्रत्यया अङ्कुरसंस्कारादीनां निष्पादकाः, इत्यतो विद्यत एव भावस्वभाव इति । उच्यते ।
5 यदि भावानां संस्काराङ्कुरादीनां स्वभावोऽस्ति, किमिदानीं विद्यमानानां हेतुप्रत्ययैः प्रयोजनम् ? यथा वर्तमानीभूतानां संस्काराङ्कुरादीनां भूयोनिष्पत्तये अविद्याबीजादीनामुपादानं क्रियते, एवमन्यदपि तदुत्पत्तये न[1] कर्तव्यं स्यात्, तत्स्वभावस्य विद्यमानत्वादिति प्रतिपादयन्नाह —

**न संभवः स्वभावस्य युक्तः प्रत्ययहेतुभिः ।**

अथ स्यात् — नैवोत्पादात्पूर्वं कस्यचिद्भावस्य स्वभावोऽस्ति यतोऽस्य विद्यमानत्वादुत्पत्ति-
10 वैयर्थ्यं स्यात्, किं तर्हि उत्पादात्पूर्वमविद्यमानस्यैव स्वभावस्य हेतुप्रत्ययान् प्रतीत्य पश्चादुत्पादो भवतीति । एवमपीष्यमाणे —

**हेतुप्रत्ययसंभूतः स्वभावः कृतको भवेत् ॥ १ ॥**

B 260 अथ स्यात् — इष्यत एव हेतुप्रत्ययसंभूतत्वात्स्वभावस्य कृतकत्वम्, तस्मात्कृतकस्यैव स्वभावस्याभ्युपगमात् कृतकत्वप्रसङ्गो नास्माकं बाधक इति, एतदपि न युक्तमित्याह —

15 **स्वभावः कृतको नाम भविष्यति पुनः कथम् ।**

कृतकश्चेति स्वभावश्चेति परस्परविरुद्धत्वादसंगतार्थमेतत् । इह हि स्वो भावः स्वभाव इति व्युत्पत्तेः, यः कृतकः पदार्थः, स लोके नैव स्वभाव इति व्यपदिश्यते, तद्यथा अपामौष्ण्यं धातु[2]पिशाचप्रत्ययनिष्पादितः कर्केटनादीनां पद्मरागादिभावश्च । यस्तु अकृतकः स स्वभावः, तद्यथा अग्नेरौष्ण्यं जातानां पद्मरागादीनां पद्मरागादिस्वभावश्च । स हि तेषां पदार्थान्तर-
20 संपर्काजनितत्वात्स्वभाव इत्युच्यते । तदेवमकृतकः स्वभाव इति लोकव्यवहारे व्यवस्थिते वयमिदानीं ब्रूमः—यदेतदौष्ण्यं तदप्यग्नेः स्वभावो न भवतीति गृह्यतां कृतकत्वात्, इह मणीन्धनादित्यसमागमादरणिनिर्घर्षणादेश्च अग्नेर्हेतुप्रत्ययसापेक्षतैव उपलभ्यते । न च अग्निव्यतिरिक्तमौष्ण्यं संभवति । तस्मादौष्ण्यमपि हेतुप्रत्ययजनितम्, ततश्च कृतकम्, कृतकत्वाच्चापामौष्ण्यवत् स्वभावो नैव भवतीति स्फुटमवसीयते ॥

25 ननु च गोपालाङ्गनाजनप्रसिद्धमेतद् अग्नेरौष्ण्यं स्वभाव इति । किं खलु अस्माभिरुक्तं न प्रसिद्धमिति ? एतत्तु वयं ब्रूमः—नायं स्वभावो भवितुमर्हति स्वभावलक्षणवियुक्तत्वात् ।
B 261 अविद्याविपर्यासानुगमात्तु लोको निःस्वभावमेव भावजातं सस्वभावत्वेन प्रतिपन्नः । यथा हि

---

१ T. नोपादानीकर्तव्यं for न कर्तव्यं. २ T does not confirm the reading धातुपिशाच°. P's note misses the point as the extraordinary powers of some metal in bringing about a change in inferior stones to superior stones is indicated by the term पिशाच here.

तैमिरिकाः तिमिरप्रत्ययादसन्तमेव केशादिस्वभावं सस्वभावत्वेनाभिनिविष्टाः, एवमविद्यातिमिरोपहतमतिनयनतया बाला निःस्वभावं भावजातं सस्वभावत्वेनाभिनिविष्टा यथाभिनिवेशं लक्षणमाचक्षते अग्नेरौष्ण्यं स्वलक्षणम्। ततोऽन्यत्रानुपलम्भादसाधारणत्वेन स्वमेव लक्षणमिति कृत्वा। बालजनप्रसिद्ध्यैव च भगवता तदेवैषां सांवृतं स्वरूपमभिधर्मे व्यवस्थापितम्। साधारणं त्वनित्यत्वादिकं सामान्यलक्षणमिति चोक्तम्। यदा तु विगताविद्यातिमिरावदातप्रज्ञाचक्षुषां 5 दर्शनमपेक्ष्यते, तदा वितिमिरैः तैमिरिकोपलब्धकेशादर्शनवत् बालजनमतिपरिकल्पितानुपलब्धस्वभावैरार्यैः पुर उच्यते पर[1]हितव्यापारैः, नायं स्वभावो भावानामिति। यथोक्तमार्यलङ्कावतारसूत्रे– B 262

केशोण्डुकं यथा मिथ्या गृह्यते तैमिरिकैर्जनैः।
तथा भावविकल्पोऽयं मिथ्या बालैर्विकल्प्यते॥
न स्वभावो न[2] विज्ञप्तिर्न च वस्तु न चालयः। 10
बालैर्विकल्पिता ह्येते शवभूतैः कुतार्किकैः॥ इति।

[ लङ्कावतारसूत्र–३·५१; १०·७९; ३·४८; १०·९ ]

तथा–

स्वभावानुत्पत्तिं संधाय महामते मया सर्वधर्मा अनुत्पन्ना इत्युक्ताः॥ इति विस्तरः॥

अत्राह–यदि खलु इदमग्न्यादेरौष्ण्यादिकं हेतुप्रत्ययसंभूतत्वेन कृतकत्वान्निःस्वभावमित्युच्यते, किमिदानीं तत्स्वभावस्य लक्षणं कश्चासौ स्वभाव इति वक्तव्यम्। उच्यते– 15

**अकृत्रिमः स्वभावो हि निरपेक्षः परत्र च॥ २॥**

इह स्वो भावः स्वभाव इति यस्य पदार्थस्य यदात्मीयं रूपं तत्तस्य स्वभाव इति व्यपदिश्यते। किं च कस्यात्मीयं यद्यस्याकृत्रिमम्, यत्तु कृत्रिमं न तत्तस्यात्मीयं तद्यथा अपामौष्ण्यम्। यच्च यस्यायत्तं तदपि तदात्मीयं तद्यथा स्वे भृत्याः, स्वानि धनानि। यत्तु यस्य परायत्तं न तत्तस्यात्मीयं तद्यथा तावत्कालिकायाचितकमस्वतन्त्रम्। यतश्चैवं कृत्रिमस्य पर- 20 सापेक्षस्य च स्वभावत्वं नेष्टम्, अत एव औष्ण्यमग्नेर्हेतुप्रत्ययप्रतिबद्धत्वात्पूर्वमभूत्वा पश्चादुत्पादेन कृतकत्वान्न स्वभाव इति युज्यते। यतश्चैतदेवम्, अतो यदेवाग्नेः कालत्रयेऽप्यव्यभिचारि निजं रूपमकृत्रिमम्, पूर्वमभूत्वा पश्चाद्यन्न भवति, यच्च हेतुप्रत्ययसापेक्षं न भवति अपामौष्ण्यवत् पारावारवत् दीर्घह्रस्ववद्वा, तत् स्वभाव इति व्यपदिश्यते। किं खलु अग्नेः तदित्थं स्वरूपमस्ति? न[2] तदस्ति, न चापि नास्ति स्वरूपतः। यद्यपि एवम्, तथापि श्रोतॄणामुत्त्रासपरि- 25 वर्जनार्थं संवृत्या समारोप्य तदस्तीति ब्रूमः। यथोक्तं भगवता–

अनक्षरस्य धर्मस्य श्रुतिः का देशना च का।
श्रूयते देश्यते चापि समारोपादनक्षरः॥ इति।

[ ]

इहापि च वक्ष्यति–

---

१ T om. परहितव्यापारैः. २ CT om. न तदस्ति.

शून्यमिति न वक्तव्यमशून्यमिति वा भवेत्।
उभयं नोभयं चेति प्रज्ञप्त्यर्थं तु कथ्यते ॥

[मध्यमकशास्त्र – २२.११]

यदि खलु तदध्यारोपाद्बुद्धैरस्तीत्युच्यते, कीदृशं तत्? या सा धर्माणां धर्मता नाम, सैव तत्स्वरूपम्। अथ केयं धर्माणां धर्मता? धर्माणां स्वभावः। कोऽयं स्वभावः? प्रकृतिः। का चेयं B 265 5 प्रकृतिः? येयं शून्यता। केयं शून्यता? नैःस्वाभाव्यम्। किमिदं नैःस्वाभाव्यम्? तथता। केयं तथता? तथाभावोऽविकारित्वं सदैव स्थायिता। सर्वथानुत्पाद[1] एव ह्यग्न्यादीनां परनिरपेक्षत्वाद-कृत्रिमत्वात्स्वभाव इत्युच्यते ॥

एतदुक्तं भवति – अविद्यातिमिरप्रभावोपलब्धं भावजातं येनात्मना विगताविद्यातिमिराणा-मार्याणामदर्शनयोगेन विषयत्वमुपयाति, तदेव स्वरूपमेषां स्वभाव इति व्यवस्थाप्यते। तस्य 10 चेदं लक्षणम् –

अकृत्रिमः स्वभावो हि निरपेक्षः परत्र च।

इति व्यवस्थापयांबभूवुराचार्या इति विज्ञेयम्। स चैष भावानामनुत्पादात्मकः स्वभावः अकिंचित्त्वेन अभावमात्रत्वादस्वभाव एवेति कृत्वा नास्ति भावस्वभाव इति विज्ञेयम्। यथोक्तं भगवता –

भावानभावानिति यः प्रजानति
15 स सर्वभावेषु न जातु सज्जते।
यः सर्वभावेषु न जातु सज्जते
स आनिमित्तं स्पृशते समाधिम् ॥

इति ॥ २ ॥

अत्राह – यद्यपि स्वभावो नास्ति भावानाम्, तथापि परभावस्तावदस्ति, तदप्रतिषेधात् 20 सति च परभावे स्वभावोऽपि भविष्यति। स्वभावमन्तरेण परभावाप्रसिद्धेरिति। उच्यते –

**कुतः स्वभावस्याभावे परभावो भविष्यति।**
**स्वभावः परभावस्य परभावो हि कथ्यते ॥ ३ ॥**

B 266 इह स्वभाव एव हि लोके कश्चित्स्वभावान्तरापेक्षया पर इति व्यपदिश्यते। यदि हि अग्नेरौष्ण्यं स्वभावः स्यात्, द्रवस्वभावसलिलसापेक्षया परभाव इति व्यपदिश्येत। यदा तु 25 मुमुक्षुभिर्विचार्यमाणस्य कस्यचित्स्वभाव एव नास्ति, तदा कुतः परत्वं स्यात्? परभावाच्च स्वभावोऽपि नास्ति इति सिद्धम् ॥ ३ ॥

अत्राह – यद्यपि स्वभावपरभावौ न स्तः, तथापि भावस्तावदस्ति, अप्रतिषेधात्। स च भावो भवन् स्वभावो वा भवेत्, परभावो वा। तस्मात्स्वभावपरभावावपि भविष्यत इति। उच्यते –

**स्वभावपरभावाभ्यामृते भावः कुतः पुनः।**
**स्वभावे परभावे वा सति भावो हि सिध्यति ॥ ४ ॥**

---

1 Mss. and P सर्वदा for सर्वथा which it confirmed by T.

भावो हि परिकल्प्यमानः स्वभावो वा भवेत्, परभावो वा । तौ च पूर्वोक्तविधिना न स्तः, इति तयोरभावाद्भावोऽपि नास्तीत्यवधार्यताम् ॥ ४ ॥

अत्राह—यद्यपि भवता भावः प्रतिषिद्धः, तथाप्यभावोऽस्ति, प्रतिषेधाभावात् । ततश्च भावोऽपि भविष्यति प्रतिद्वन्द्विसद्भावात्, अभाववदिति । उच्यते । स्याद्भावः, यदि अभाव एव स्यात् । न त्वस्तीत्याह— 5

**भावस्य चेदप्रसिद्धिरभावो नैव सिध्यति ।**
**भावस्य ह्यन्यथाभावमभावं ब्रुवते जनाः ॥ ५ ॥**　　B 267

इह हि यदि भावो नाम कश्चिदभविष्यत्, स्यात्तस्यान्यथाभावादभावः । घटादयो हि वर्तमानावस्थायाः प्रच्युताः सन्तः अन्यथाभावमापन्नाः अभावध्वनिवाच्या भवन्ति लोके । यदा त्वमी घटादयो भावरूपत्वेनैवासिद्धाः, तदा कुतोऽविद्यमानस्वभावानामन्यथात्वमिति । अतः 10 अभावोऽपि नास्ति ॥ ५ ॥

तदेवं सर्वथा स्वभावपरभावभावाभावेषु अनुपपद्यमानेषु अविद्यातिमिरोपहतमतिनयनतया विपरीतम्—

**स्वभावं परभावं च भावं चाभावमेव च ।**
**ये पश्यन्ति न पश्यन्ति ते तत्त्वं बुद्धशासने ॥ ६ ॥** 15

ये हि तथागतप्रवचनाविपरीतव्याख्यानाभिमानितया पृथिव्याः काठिन्यं स्वभावः, वेदनाया विषयानुभवः, विज्ञानस्य विषयप्रतिविज्ञप्तिः स्वभावः, इत्येवं स्वभावं भावानां वर्णयन्ति, अन्य-द्विज्ञानम्, अन्यद्रूपम्, अन्यैव च वेदना, इत्येवं परभावं वर्णयन्ति, वर्तमानावस्थं च विज्ञानादिकं भावत्वेन ये वर्णयन्ति, विज्ञानादिकमेव च अतीततामापन्नमभाव इति, न ते परमगम्भीरस्य प्रतीत्यसमुत्पादस्य तत्त्वं वर्णयन्ति । यस्माद्यथोदितोपपत्तिविरुद्धं स्वभावपरभावादी- 20 नामस्तित्वम्, न चोपपत्तिविरुद्धं पदार्थस्वभावमनुवर्णयन्ति तथागताः । स्वयमविपरीताशेषपदार्थ-तत्त्वसंबोधात् । अत एव बुद्धानामेव भगवतां वचनं प्रमाणमित्युपवर्णयन्ति विचक्षणाः, सोपपत्ति-　　B 268
कत्वेनाविसंवादकत्वात् । अत एव च आप्तेभ्यः प्रहीणाशेषदोषेभ्य आगतत्वात्, आगमयतीति　　B 269
समन्तात् तत्त्वं गमयतीति वा, आभिमुख्याद्गमनाद्वा तदाश्रयेण लोकस्य निर्वाणगमनात् संबुद्धवचनस्यैव आगमत्वं व्यवस्थाप्यते । तदन्यमतानां तु उपपत्तिवियुक्तत्वान्न प्रामाण्यम्, 25 आगमाभासत्वं च व्यवस्थाप्यते ॥ ६ ॥

यस्माच्च एतानि स्वभावपरभावभावाभावदर्शनानि युक्तिविधुरत्वान्न तत्त्वानि, अत एव मुमुक्षूणां विनेयजनानाम्—

**कात्यायनाववादे चास्तीति नास्तीति चोभयम् ।**
**प्रतिषिद्धं भगवता भावाभावविभाविना ॥ ७ ॥** 30

उक्तं हि भगवता आर्यकात्यायनाववादसूत्रे—

यद्भूयसा कात्यायन अयं लोकोऽस्तितां वा अभिनिविष्टो नास्तितां च। तेन न परिमुच्यते। जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यो न परिमुच्यते। पाञ्चगतिकात्संसारचारकागारबन्धनान्न परिमुच्यते। मातृमरणसंतापदुःखान्न परिमुच्यते। पितृमरणसंतापदुःखादिति विस्तरः॥

B 270 5 इदं च सूत्रं सर्वनिकायेषु पठ्यते। तदस्मादागमात् यथोपवर्णितायाश्चोपपत्तेर्नार्हति प्राज्ञः स्वभावपरभावभावाभावदर्शनं तथागतवचनादत्यन्तविरुद्धमास्थातुम्। भगवता प्रतिषिद्धत्वात्। किंविशिष्टेन भगवता? भावाभावविभाविना। भावाभावौ विभावयितुं शीलमस्येति भावाभावविभावी। यथावस्थितभावाभावाविपरीतस्वभावपरिज्ञानाद् भावाभावविभावीति भगवानेवोच्यते। तेन भगवता भावाभावविभाविना यस्मादस्तित्वं च नास्तित्वं च उभयमेतत् प्रतिषिद्धम्, तस्मान्न युक्तं भावा-
10 भावदर्शनं तत्त्वमित्यास्थातुम्॥

तथा—

अस्तीति काश्यप अयमेकोऽन्तः। नास्तीति काश्यप अयमेकोऽन्तः। यदेनयोरन्तयोर्मध्यम्, तदरूप्यमनिदर्शनमप्रतिष्ठमनाभासमनिकेतमविज्ञप्तिकम्। इयमुच्यते काश्यप मध्यमा प्रतिपद् भूतप्रत्यवेक्षा इति॥

15 तथा—

अस्तीति नास्तीति उभेऽपि अन्ता
शुद्धी अशुद्धीति इमेऽपि अन्ता।
तस्मादुभे अन्त विवर्जयित्वा
मध्येऽपि स्थानं न करोति पण्डितः॥
20 अस्तीति नास्तीति विवाद एषः
शुद्धी अशुद्धीति अयं विवादः।
विवादप्राप्त्या न दुःखं प्रशाम्यति
अविवादप्राप्त्या च दुःखं निरुध्यते॥ इति।

[समाधिराजसूत्र— ९.२७–२८]

अत्राह—यदि पुनरेवमग्न्यादीनां स्वभावत एवास्तित्वं स्यात्, को दोषः स्यात्?
25 उक्तदोषः—

हेतुप्रत्ययसंभूतः स्वभावः कृतको भवेत्।

B 271 इत्यादिना॥ ७॥

अपि च। यदि अयमेषामग्न्यादीनां स्वभावः स्यात्, तस्य विद्यमानस्य सतो न स्यात् पुनरन्यथात्वमिति प्रतिपादयन्नाह—

**यद्यस्तित्वं प्रकृत्या स्यान्न भवेदस्य नास्तिता।**

यदि अग्न्यादेर्भावस्य प्रकृत्या स्वभावतोऽस्तित्वम्, तदा अस्य स्वभावस्य प्रकृत्या विद्यमानस्य पुनरन्यथात्वं न स्यात् । यस्मात्–

**प्रकृतेरन्यथाभावो न हि जातूपपद्यते ॥ ८ ॥**

यदि एषामग्न्यादीनामियमेव प्रकृतिः स्यात्, स्वभावः स्यात्, तदा प्रकृतेरविकारिणीत्वान्न कदाचित्पुनरन्यथाभाव उपपद्येत । न हि आकाशस्यानावरणत्वं कदाचिदप्यन्यथात्वं प्रतिपद्यते । 5 एवमग्न्यादीनामपि प्रकृत्या विद्यमानानां पुनरन्यथात्वं न स्यात् । उपलभते च भवानेषामन्यथात्वप्रबन्धोपरमलक्षणं विनाशम् । तस्माद्विपरिणामधर्मित्वादपामौष्ण्यवत् नायमेषां स्वभाव इति प्रतीयताम् ॥ ८ ॥

अत्राह–यदि प्रकृत्या विद्यमानस्यान्यथात्वासंभवादन्यथात्वस्य च उपलभ्यमानत्वात् प्रकृतिरेषां भावानां नास्तीत्युच्यते, ननु च एवमपि– 10

**प्रकृतौ कस्य चासत्यामन्यथात्वं भविष्यति ।**

कस्य इदानीं प्रकृत्या स्वरूपेणाविद्यमानस्य खपुष्पस्येव अन्यथात्वं भविष्यति ? तस्मादविद्यमानप्रकृतिकस्य अन्यथात्वानुपलम्भात्, अन्यथात्वस्य च दर्शनात्, अस्त्येव स्वभाव इति । उच्यते । यदि तावकेन मतेन प्रकृत्या स्वभावेन असंविद्यमानस्य अन्यथात्वाभावाद् अन्यथात्वस्य च दर्शनात्प्रकृतिरित्युच्यते, एवमपि— 15

B 272

**प्रकृतौ कस्य च सत्यामन्यथात्वं भविष्यति ॥ ९ ॥**

कस्येदानीं प्रकृत्या स्वभावेन विद्यमानस्य वर्तमानस्यैव अन्यथात्वं भविष्यति ? तस्मात् प्रकृत्या विद्यमानस्य अन्यथात्वं नास्तीति सर्वथा अन्यथात्वासंभव एव । ततश्च नास्ति प्रकृतिर्भावानामिति विज्ञेयम् ॥ ९ ॥

यच्चाप्युक्तम्–अन्यथात्वस्य दर्शनान्नास्ति प्रकृतिरिति, तदपि परप्रसिद्धयो[२] अन्यथात्वदर्शनमधिकृत्योक्तम्, न त्वस्माभिः कदाचिदपि कस्यचिदन्यथात्वमभ्युपेतम् । तदेवमत्यन्ततः प्रकृतावसंविद्यमानायां सर्वधर्मेषु असंविद्यमानेषु अस्वभावेषु तदन्यथात्वे च असंविद्यमाने यो हि इदानीमस्तित्वं नास्तित्वं च भावानां परिकल्पयति, तस्य एवं परिकल्पयतो नियतमेव– 20

**अस्तीति शाश्वतग्राहो नास्तीत्युच्छेददर्शनम् ।**

प्रसज्यत इति वाक्यशेषः । तच्चैतत शाश्वतोच्छेददर्शनं स्वर्गापवर्गमार्गान्तरायकरत्वाद् यस्मान्महानर्थकरम्, 25

B 273

**तस्मादस्तित्वनास्तित्वे नाश्रीयेत विचक्षणः ॥ १० ॥**

कस्मात्पुनर्भावाभावदर्शने सति शाश्वतोच्छेददर्शनप्रसङ्गो भवतीति ? यस्मात्–

**अस्ति यद्धि स्वभावेन न तन्नास्तीति शाश्वतम् ।**
**नास्तीदानीमभूत्पूर्वमित्युच्छेदः प्रसज्यते ॥ ११ ॥** 30

१ Mss. तस्माद्विप॰ for तस्मादविप॰ which is based on T. २ P परप्रसिद्धान्यथात्व॰ for परप्रसिद्धया अन्यथात्व॰ against Mss.

यत् स्वभावेन अस्तीत्युच्यते, स्वभावस्यानपायित्वान्न तत् कदाचिदपि नास्तीति, एवं भावस्यास्तित्वाभ्युपगमे सति शाश्वतदर्शनमापद्यते। पूर्वं च वर्तमानावस्थायां भावस्वरूपमभ्युपेत्य इदानीं तद्विनष्टत्वान्नास्तीति पश्चादभ्युपगच्छतः उच्छेददर्शनं प्रसज्यते। यस्य तु भावस्वभाव एव नोपपद्यते, न तस्य शाश्वतोच्छेददर्शनप्रसङ्गः, भावस्वभावानुपलम्भात्॥

5 ननु च भावानां स्वभावो नास्तीत्यभ्युपगच्छतो मा भूद्भावदर्शनाभावाच्छाश्वतदर्शनम्, उच्छेददर्शनं तु नियतं प्रसज्यते इति। नैवमभावदर्शनं भवति। यो हि पूर्वं भावस्वभावमभ्युपेत्य पश्चात् तन्निवृत्तिमालम्बते, तस्य पूर्वोपलब्धस्वभावापवादात् स्यादभावदर्शनम्। यस्तु

B 274 तैमिरिकोपलब्धकेशेष्विव वितैमिरिको न किंचिदुपलभते, स नास्तीति ब्रुवन् किंचिन्नास्तीति ब्रूयात् प्रतिषेध्याभावात्। विपर्यस्तानां तु मिथ्याभिनिवेशनिवृत्त्यर्थमतैमिरिका इव वयं ब्रूमः—न सन्ति

10 सर्वभावा: इति। न चैवं ब्रुवतामस्माकं परहितव्यापारपरायणानामुच्छेददर्शनप्रसङ्गः। यथोक्तं सूत्रे—

यो हि भगवन् पूर्वं रागद्वेषमोहभावाभ्युपगमं कृत्वा पश्चान्न सन्ति रागद्वेषमोहभावा इति ब्रवीति, स भगवन् वै नास्तिको भवति। इति विस्तरः॥

यस्तु परतन्त्रचित्तचैत्तवस्तुमात्रमभ्युपेत्य तस्य परिकल्पितस्वभावाभावादस्तित्वदर्शनं

B 275 परिहरति, संक्लेशव्यवदाननिबन्धनस्य च परतन्त्रवस्तुमात्रसद्भावान्नास्तित्वदर्शनं परिहरति,

15 तस्य परिकल्पितस्याविद्यमानत्वात् परतन्त्रस्य च विद्यमानत्वाद् अस्तित्वनास्तित्वदर्शनद्वयस्यापि उपनिपातात् कुतोऽन्तद्वयपरिहारः? हेतुप्रत्ययजनितस्य च सस्वभावेनायुक्तत्वप्रतिपादनाद-युक्तमेवास्य व्याख्यानम्। तदेवं मध्यमकदर्शने एव अस्तित्वनास्तित्वद्वयदर्शनस्याप्रसङ्गः, न विज्ञानवादिदर्शनादिष्विति विज्ञेयम्। अत एवोक्तमार्यरत्नावल्याम्—

ससांख्यौलूक्यनिर्ग्रन्थपुद्गलस्कन्धवादिनम्।

20 पृच्छ लोकं यदि वदत्यस्तिनास्तिव्यतिक्रमम्॥

धर्मयौतकमित्यस्मादस्तिनास्तिव्यतिक्रमम्।

विद्धि गम्भीरमित्युक्तं बुद्धानां शासनामृतम्॥ इति॥

B 276 तथाविधविनेयजनबोधानुरोधात्तु परमार्थदर्शनस्य उपायभूतत्वात् नेयार्थत्वेन भगवता महाकरुणापरतन्त्रतया विज्ञानादिवादो देशितः सांमितीयपुद्गलवादवत्, न नीतार्थः इति विज्ञेयम्॥

25 यथोक्तमार्यसमाधिराजभट्टारके—

नीतार्थसूत्रान्तविशेष जानति
यथोपदिष्टा सुगतेन शून्यता।
यस्मिन् पुनः पुद्गल सत्त्व पूरुषो
नेयार्थतो जानति सर्वधर्मान्॥

[समाधिराजसूत्र—७.५]

---

१ Mss. नास्तीति for अस्तीति. 4. Our reading is confirmed by T. २ Mss. corrupt. Text based on T and is reconstructed.

एतच्च आर्याक्षयमतिनिर्देशादिषु विस्तरेण बोद्धव्यमिति। भावाभावदर्शनद्वयप्रसङ्गो यावत् तावत्संसार इत्यवेत्य मुमुक्षुभिरेतद्दर्शनद्वयनिरासेन सद्भिर्मध्यमा प्रतिपद्भावनीया यथावदिति। एतच्चोक्तं भगवता–

भाव अभाव विभावयि ज्ञानं
सर्वि अचिन्तिय सर्वि अभूतं। 5
ये पुन चित्तवशानुग बालाः
ते दुखिता भवकोटिशतेषु॥
भावानभावानिति यः प्रजानती B 277
स सर्वभावेषु न जातु सज्जते।
यः सर्वभावेषु न जातु सज्जते 10
स आनिमित्तं स्पृशते समाधिम्॥ इति।

[ समाधिराजसूत्र – ३८·११ ]

तथा—

स्मराम्यहं पूर्वमतीत अध्वनि
अचिन्तिये कल्पि नराणमुत्तमः।
उत्पन्नु लोकार्थकरो महर्षी 15
नामेन सोऽभावसमुद्गतोऽभूत्॥
स जातमात्रो गगने स्थिहित्वा
सर्वाण धर्माणभाव देशयि।
तदानुरूपं कृत नामधेयं
शब्देन सर्वं त्रिसहस्र विज्ञयी॥ 20
देवापि सर्वे प्रमुमोचु शब्दं B 278
अभावनामेति जिनो भविष्यति।
यो जातमात्रः पद सप्त प्रक्रमन्
अभाव धर्माण समं प्रकाशयी॥
बुद्धो यदा भेष्यति धर्मराजः 25
सर्वाण धर्माण प्रकाशको मुनिः।
तृणगुल्मवृक्षौषधिशैलपर्वते
अभाव धर्माण रवो भविष्यति॥

१ T om. this stanza. २ नाम्ना ह्यसौ for नामेन सो. ३ T कीर्तित for विज्ञयी. ४ BTS धर्माण ब्रवीति नायकः.

यावन्ति शब्दास्तहि लोकधातौ
सर्वे ह्यभावा न हि कश्चि भावः।
तावन्ति खो तस्य तथागतस्य[1]
रुतु निश्चरी लोकविनायकस्य॥ इति।
[समाधिराजसूत्र- ८·१-५]

5 भवतीति[2] भावः सत्ता। न विद्यते सत्ता स्वभावः सर्वभावानामित्यभावाः सर्वधर्माः, शून्याः सर्वधर्मा निःस्वभावयोगेनेति प्रज्ञापारमितापाठात् भावस्वभावस्यानुपपत्तेः।

अभाव[3] धर्माण रुतो भविष्यति

इत्यादिना सूत्रार्थोऽवगन्तव्यः॥

B 279 यावन्ति शब्दास्तहि लोकधातौ
10 सर्वे ह्यभावा न हि कश्चि भावः। इत्यादि।

भूत्वा अभावप्रतिषेधविवक्षितत्वाद् भावाभावार्थ एव स्वभावाभावार्थः॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
स्वभावपरीक्षा नाम पञ्चदशमं प्रकरणम्॥

---

१ T om. तथागतस्य. २ T om. from भवतीति up to पाठात्. ३ From अभाव down to स्वभावाभावार्थः, the text is reconstructed from T.

## बन्धमोक्षपरीक्षा षोडशमं प्रकरणम् ।

B 280

अत्राह—विद्यत एव भावानां स्वभावः, संसारसद्भावात्। इह संसरणं संसृतिः गतेर्गत्यन्तरगमनं संसार इत्युच्यते। यदि भावानां स्वभावो न स्यात्, कस्य गतेर्गत्यन्तरगमनं संसारः स्यात्? न हि अविद्यमानानां वन्ध्यासूनुसंस्काराणां संसरणं दृष्टम्। तस्मात् संसारसद्भावात् विद्यत एव भावानां स्वभाव इति। उच्यते। स्याद्भावानां स्वभावः, यदि संसार एव भवेत्। 5
न त्वस्ति। इह यदि संसारः स्यात्, स नियतं संस्काराणां वा भवेत् सत्त्वस्य वा? किं चातः? उभयथा च दोष इत्याह—

**संस्काराः संसरन्ति चेन्न नित्याः संसरन्ति ते।**
**संसरन्ति च नानित्याः सत्त्वेऽप्येष समः क्रमः॥ १॥**

तत्र यदि संस्काराः संसरन्तीति परिकल्प्यते, किं ते नित्याः संसरन्ति उत अनित्याः? 10
तत्र न नित्याः संसरन्ति निष्क्रियत्वात्, अनित्यानां च घटादीनां सक्रियत्वोपलम्भात्। अथ अनित्याः, ये हि अक्रियाः, ते उत्पादसमनन्तरमेव विनष्टाः। ये च विनष्टाः, कुतस्तेषामविद्यमानत्वाद्वन्ध्यासूनुसंस्काराणामिव क्वचिद् गमनम्? इत्येवमनित्यानामपि नास्ति संसारः॥

B 281

B 282

अथापि स्यात्—अनित्या एव सन्तो हेतुफलसंबन्धपरंपरया अविच्छिन्नक्रमाः संतानेन च प्रवर्तमानाः संस्काराः संसरन्तीति। एतदपि नोपपद्यते। कुतः? यत् तावदुत्पद्यते कार्यम्, 15
तस्य संसारो नास्ति, कुतश्चिदनागमनात् क्वचिच्चागमनात्। यच्च कारणं नष्टम्, तस्यापि संसारो नास्ति, कुतश्चिदनागमनात् क्वचिच्चागमनात्। संस्कारमात्रव्यतिरेकेण अतीतानागतयोरसिद्धत्वात्, नष्टाजातत्वेन अविद्यमानत्वात्॥

उत्तरस्मिन् क्षणे उत्पन्ने पूर्वः संसरतीति चेत्, यदि पूर्वोत्तरयोः क्षणयोरेकत्वं स्यात्, स्यादेतदेवम्। न तु एकत्वमस्ति कार्यकारणभावात्, चक्षूरूपचक्षुर्विज्ञानानां नास्ति च। किं च 20
एकत्वे सति पूर्वोत्तरक्षणवाच्यतैव न स्यात्। न हि एको देवदत्तः एकदा पूर्वश्चोत्तरश्चेति व्यपदिश्यते। एवमिहापि एकत्वात् पूर्वोत्तरक्षणव्यपदेश एव न स्यात्। अपि च। पूर्वक्षणो नष्ट इति न स्यादुत्तरक्षणवदव्यतिरिक्तत्वात्। उत्तरक्षण उत्पन्न इति न स्यात्, पूर्वक्षणवदव्यतिरिक्तत्वात्। अथ अन्यत्वे सति संसरणं स्यात्, एवं सति अर्हतामपि संसरणं स्यात्। अन्यस्य पृथग्जनस्य संसारोत्पत्तिसद्भावात्। निर्वृतश्च प्रदीपः प्रदीपान्तरे ज्वलतीति स्यात्। किं चान्यत्। 25
नष्टाद्वा पूर्वक्षणादुत्तरस्य क्षणस्योदयः स्यादनष्टान्नश्यमानाद्वा? तत्र यदि नष्टादिष्यते, वह्निदग्धादपि बीजादङ्कुरोदयः स्यात्, ततश्च निर्हेतुकः स्यात्। अथ अनष्टात्, एवमपि अविकृतेऽपि बीजेऽङ्कुरोदयः स्यात्, कार्यकारणयोश्च यौगपद्यं स्यात्, निर्हेतुकश्चोत्पादः स्यात्। नश्यमानादिति चेत्। नष्टानष्टव्यतिरेकेण नश्यमानाभावात्, नष्टानष्टयोश्च

---

१ After अविद्यमानत्वात् T adds च.

विहितदोषत्वान्नश्यमानादपि नास्त्युत्पत्तिरिति, कुतः कार्यकारणव्यवस्था पूर्वोत्तरक्षणव्यवस्था वा भविष्यति? यदा च पूर्वोत्तरक्षणव्यवस्था कार्यकारणव्यवस्था च[1] नास्ति, तदा संतानोऽपि नास्ति, तदभावान्नास्ति भवतां[2] संसार इति अनित्यानामपि संस्काराणां नास्ति संसार इति ॥

B 283

5 अत्रैके वर्णयन्ति—सत्यं संस्कारा न संसरन्ति उत्पत्तिविधुरत्वात्, किं तर्हि सत्त्वः संसरतीति। उच्यते। सत्त्वेऽप्येष समः क्रमः। सत्त्वः संसरतीत्युच्यमाने किमसौ नित्यः संसरति, उत अनित्यः, इति विचार्यमाणे य एव संस्काराणां संसरणानुपपत्तिक्रमः, स समत्वात्[3] सत्त्वेऽपि समो निपतति। तस्मात्सत्त्वोऽपि न संसरति ॥ १ ॥

अत्राह—नैव हि सत्त्वसंस्काराणां संसारानुपपत्तिक्रमः समो भवितुमर्हति, यस्मादिह 10 संस्काराणां नित्यानित्यभूतानां संसरणं नास्तीत्युक्तम्। न चैवमात्मा नित्यानित्यभूतः। तस्य हि स्कन्धेभ्यस्तत्त्वान्यत्वावक्तव्यतावत्[4] नित्यत्वेनानित्यत्वेनाप्यवक्तव्यता व्यवस्थाप्यते। तस्मादात्मैव संसरतीति न चोक्तदोषप्रसङ्ग इति। उच्यते—

B 284

**पुद्गलः संसरति चेत्स्कन्धायतनधातुषु।**
**पञ्चधा मृग्यमाणोऽसौ नास्ति कः संसरिष्यति ॥ २ ॥**

15 यदि पुद्गलो नाम कश्चित् स्यात्, स संसरेत्। न त्वस्ति। यस्मात् स्कन्धायतनधातुषु पञ्चधा मृग्यमाणो नास्ति। कथं कृत्वा?

इन्धनं पुनरग्निर्न नाग्निरन्यत्र चेन्धनात्।
नाग्निरिन्धनवान्नाग्नाविन्धनानि न तेषु सः ॥

[ मध्यमकशास्त्र –१०·१४ ]

अग्नीन्धनाभ्यां व्याख्यात आत्मोपादानयोः क्रमः ॥

[ मध्यमकशास्त्र –१०·१५ ]

20 इत्येवं स्कन्धायतनधातुस्वभाव आत्मा न भवति। नापि तेभ्यो व्यतिरिक्तः। न स्कन्धायतनधातुमान्। न स्कन्धायतनधातुष्वात्मा। नात्मनि स्कन्धायतनधातवः। इत्येवं पञ्चधा मृग्यमाण आत्मा न संभवति पूर्वोदितेन न्यायेन। यश्चेदानीं स्कन्धायतनधातुष्वेवं विचार्यमाणः पञ्चधा न संभवति, स कथमविद्यमानः सन् संसरिष्यतीति? एवमात्मनोऽपि नास्ति संसारः, वन्ध्यासुतस्येव अविद्यमानत्वात् ॥ २ ॥

25 अपि च। अयमात्मा—

**उपादानादुपादानं संसरन् विभवो भवेत्।**
**विभवश्चानुपादानः कः स किं संसरिष्यति ॥ ३ ॥**

---

१ Mss. om. च which is based on T. २ T om. भवतां. ३. T om. समत्वात्.
४ Mss. corrupt. Our text is based on T.

भवतु काममात्मनः संसारः, यदि अनुपादानस्य सतोऽस्य संसारो युक्तः स्यात्। कथं पुनरस्य अनुपादानता प्रसज्यत इति प्रतिपादयन्नाह– B 285

उपादानादुपादानं संसरन् विभवो भवेत् इति।

इह हि मनुष्योपादानाद्देवोपादानं गच्छन् परित्यज्य वा मनुष्योपादानं देवोपादानं गच्छेदपरित्यज्य वा? यदि तावत्परित्यज्य गच्छतीत्युच्यते, तदा पूर्वोपादानस्य परित्यागादुत्तरस्य चानुपादानात्तदन्तराले विभवः स्यात्। विगतो भवो विभवः। भवः पञ्चोपादानस्कन्धाः, तद्रहितः स्यात्। यश्च विभवोऽनुपादानः, स स्कन्धरहितत्वात् प्रज्ञप्त्युपादानकारणरहितत्वान्निर्हेतुकः स्यात्। यश्च अनुपादानो निरञ्जनोऽव्यक्तो निर्हेतुकः, कः सः? न कश्चित् सः। नास्त्येव स इत्यर्थः। तस्मिंश्चासति तदभावादेव उपादानमपि निरुपादातृकं नास्तीति किं संसरिष्यति? नास्त्येव तत्, यत्संसरिष्यतीत्यर्थः। अथवा, किमित्येतत् संसरणक्रियाविशेषणम्। ततश्च अविद्यमानत्वात् नैव संसरणक्रियां करिष्यति। एवं तावत्पूर्वोपादानपरित्यागेन संसरणमयुक्तम्। अथ अपरित्यागेन, तथापि नोपपद्यते। किं कारणम्? पूर्वस्यापरित्यागादुत्तरस्य च ग्रहणाद् यस्मादेकस्यात्मनो द्व्यात्मकता स्यात्। न चैतदिष्यत इति। तस्मादपरित्यागेनापि संसरणं नास्ति॥ 5 B 286 10

अथ पूर्वोत्तरयोर्भवयोर्मध्ये आन्तराभविकस्कन्धसंभवात्, तैश्च सोपादानत्वात् सोपादानं संसरतोऽपि न विभवताप्रसङ्ग इति। तदपि न युक्तम्, पूर्वभवपरित्यागापरित्यागाभ्यामान्तराभविकस्कन्धसंसारेऽपि तुल्यप्रसङ्गत्वात्॥ B 287 15

युगपत्त्यागोपादानाददोष इति चेत्, उच्यते। किमेकदेशेन पूर्वोपादानं त्यजते एकदेशेनान्तराभवोपादानं संचरति, अथ सर्वात्मना? तत्र यदि अवयवेनेति परिकल्प्यते, तदा द्व्यात्मकताप्रसङ्गादित्युक्तदोषः। अथ सर्वात्मना, एवमपि स एव विभवताप्रसङ्ग आपद्यते। एतावांस्तु विशेषः, यदन्तराभवसंचारेऽतिसामीप्यात् सूक्ष्मं कालमनुपादानः स्यात्। न च सर्वात्मना एकस्य पदार्थस्य अभिन्नपदार्थस्य विषये युगपत् त्यागोपादाने दृष्टे। न हि एकस्य देवदत्तस्य सर्वात्मना गृहाद्गृहं संचरतः एकदा त्यागोपादानक्रिये द्वे संभवतः। अथ एकेन पादेन एकस्य परित्यागादपरस्य चोपादानाद् युगपत्त्यागोपादाने परिकल्प्येते, ननु एवं सति पादद्वयवद् द्व्यात्मकता आत्मनः स्यात्। अंशेन पूर्वत्रावस्थानादंशेन चोत्तरत्रावस्थानादनेकावयवता प्रसज्येत। तस्माद् यौगपद्येनापि त्यागोपादाने न संभवतः इत्यपरिहार एवायम्। तस्मादन्तराभवोपादानेऽपि स एव दोषप्रसङ्ग इति सर्वथा आत्मनोऽपि नास्ति संसारः॥ 20 25

यदा च संस्काराणामात्मनश्च संसारो नास्ति, तदा नास्त्येव संसार इति स्थितम्॥ ३॥

अत्राह– विद्यत एव संसारः, प्रतिद्वन्द्विसद्भावात्। इह यो नास्ति, न तस्य प्रतिद्वन्द्वी विद्यते, तद्यथा वन्ध्यासूनोरिति। अस्ति च संसारस्य प्रतिद्वन्द्वि निर्वाणम्। तस्मादस्ति संसार इति। उच्यते। स्यात्संसारः, यदि तत्प्रतिद्वन्द्वि निर्वाणं स्यात्। न त्वस्तीत्याह–

१ Mss. अन्तराभविक° for आन्तरा°. २ Mss. अन्तराभवपर्युपादानस्य for अन्तराभवोपादानेऽपि which is based on T.

संस्काराणां न निर्वाणं कथंचिदुपपद्यते ।
B 288 सत्त्वस्यापि न निर्वाणं कथंचिदुपपद्यते ॥ ४ ॥

यदि निर्वाणं नाम किंचित् स्यात्, तत् परिकल्प्यमानं संस्काराणां नित्यानां वा परिकल्प्येत अनित्यानां वा ? तत्र नित्यानामविकारिणां किं निर्वाणं कुर्यात् ? अनित्यानामपि 5 असंविद्यमानानां किं निर्वाणं कुर्यादिति सर्वं पूर्वेण तुल्यम् । न कथंचिदिति न केनापि प्रकारेणेत्यर्थः ॥

अथ सत्त्वस्य निर्वाणं परिकल्प्यते, तदपि नित्यस्य वा अनित्यस्य वा पूर्ववन्नोपपद्यते ॥

अथ नित्यानित्यत्वेनावाच्यस्य परिकल्प्यते, नन्वेवं सति निर्वाणेऽप्यात्मास्तीत्यभ्युपेतं भवति संसार इव । अपि च । सोपादानस्यैवात्मनः अवाच्यता युज्यते । न च निर्वाणे उपादान-10 मस्तीति कुतोऽस्य अवाच्यता ? भवतु वा तत्त्वान्यत्वावाच्यता आत्मनः, अपि तु किमसौ निर्वाणेऽस्ति उत नास्ति ? यदि अस्ति, तदा मोक्षेऽपि[1] तस्य सद्भावान्नित्यता स्यात् । अथ नास्ति, तदा अनित्य आत्मा स्यात् । ततश्च तत्त्वान्यत्वावाच्यतावन्नित्यानित्यत्वेनापि आत्मनः अवक्तव्यतेति न स्यात् । अथ निर्वाणेऽपि आत्मनः अस्तित्वनास्तित्वेनावाच्यतैव इष्यते, एवमपि किमसौ विज्ञेयः, अथ न ? यदि विज्ञेयः, न तर्हि निरुपादानोऽसावात्मा निर्वाणे विज्ञेयत्वात् संसार इव । B 289 15 अथ न विज्ञायते, तत्रासौ अविज्ञेयस्वरूपत्वात् खपुष्पवन्नास्त्येवेति कुतोऽस्य अवाच्यता ? तदेवं निर्वाणमपि नास्ति । तदभावान्नास्ति संसार इति । अत एवोक्तं भगवत्यामष्टसाहस्रिकायाम्—

निर्वाणमप्यायुष्मन् सुभूते मायोपमं स्वप्नोपमम् । बुद्धधर्मा आयुष्मन् सुभूते मायोपमाः स्वप्नोपमा इत्यादि । सचेत् कुलपुत्र निर्वाणादप्यधिकतरोऽन्यो धर्मोऽभविष्यत्, तमप्यहं मायोपमं स्वप्नोपममिति वदामि ॥

[अष्टसाहस्रिका–४०]

20 तथा आर्यसमाधिराजभट्टारके—

परमार्थसत्य सुपिनेन समं
निर्वाणं स्वप्नसमोतरती ।
मन एवमोतरति येन विदु
मनसंवरः कथितु श्रेष्ठु अयम् ॥

[समाधिराजसूत्र–३८.९१]

25 तथा—

निरोधसत्यं सुपिनं यथैव
स्वप्नस्वभावामथ निर्वृतिं च ।
येनेह वाचोत्तरि बोधिसत्त्वो
अयं खु सो वुच्चति वाचसंवरः ॥

[समाधिराजसूत्र–३८.७]

[1] Mss. मोक्ष तस्य for मोक्षेऽपि तस्य. Our text is based on T.

अत्राह—यद्यपि त्वया संसारनिर्वाणे प्रतिषिद्धे, तथापि बन्धमोक्षौ विद्येते । न चाविद्यमानस्य भावस्वभावस्य बन्धमोक्षौ संभवतः । तस्माद् बन्धमोक्षसद्भावाद् विद्यत एव भावानां स्वभाव इति । उच्यते । स्याद्भावानां स्वभावः, यदि बन्धमोक्षावेव स्याताम् । न तु स्तः इत्याह— B 290

न बध्यन्ते न मुच्यन्ते उदयव्ययधर्मिणः ।
संस्काराः पूर्ववत्सत्त्वो बध्यते न न मुच्यते ॥ ५ ॥ 5

इह य इमे रागादयः क्लेशाः बद्धानामस्वतन्त्रीकरणे बन्धनमिति व्यपदिश्यते, यैश्च बद्धाः पृथग्जनाः त्रैधातुकं नातिक्रमन्तीति व्यवस्थाप्यते, तदेतद्रागादिकं बन्धनत्वेन परिकल्प्यमानमुदयव्ययधर्मिणां तावत् क्षणिकानां संस्काराणामुत्पादानन्तरध्वंसिनां नष्टानामसत्त्वान्न संभवति । रागादिबन्धनविच्छेदलक्षणोऽपि मोक्षः अनित्यानां संस्काराणामविद्यमानत्वान्नैव संभवति । पूर्ववत् पूर्वोक्तविधिनेत्यर्थः । यथा च पूर्वोक्तविधिना संस्काराणां बन्धमोक्षौ न संभवतः, एवं पूर्ववदेव 10 सत्त्वोऽपि न बध्यते नापि मुच्यते, इत्येवं बन्धमोक्षावपि न स्तः ॥ ५ ॥

अत्राह—यद्यपि संस्काराणां सत्त्वस्य वा बन्धो नास्ति, तथापि रागादिकमुपादानाख्यं बन्धनभूतमस्ति, तत्सद्भावाद्बन्धोऽपि भविष्यतीति। उच्यते । स्यादुपादानम्, बन्धनं यदि कंचित्पदार्थं बध्नीयात्, न तु बध्नाति । यथा च न बध्नाति, तथा प्रतिपादयन्नाह—

बन्धनं चेदुपादानं सोपादानो न बध्यते । 15
बध्यते नानुपादानः किमवस्थोऽथ बध्यते ॥ ६ ॥

तत्र विद्यमानोपादानः सोपादानः, स तावद्भावो न बध्यते । यो हि सोपादानः, स बद्ध एव । तस्य पुनरपि बन्धनयोगः किं कुर्यात्? यश्चापि अनुपादानः बन्धनरहितः, असावपि बन्धनरहितत्वात् तथागतवन्न बध्यते । अनुपादानः बन्धनरहितः बध्यत इति परस्परविरुद्धत्वाच्चायुक्तमेतत् । यश्चैवं निरूप्यमाणः[1] सोपादानो निरुपादानो वा न बध्यते, स इदानीं किमवस्थो 20 बध्यताम्? नास्त्येवासौ काचिदपरा अस्यावस्था, यस्यां बध्येतेत्यभिप्रायः । यदा चैवं निरूप्यमाणं बन्धनं न कंचिदपि बध्नाति, तदा कंचिदप्यबध्नत उपादानस्य रागादेः कुतो बन्धनत्वमिति । तस्माद् बन्धनमपि नास्ति ॥ ६ ॥ B 291

अपि च ।

बध्नीयाद्बन्धनं कामं बन्ध्यात्पूर्वं भवेद्यदि । 25
न चास्ति तत्

इह बन्ध्यव्यतिरेकेण बन्धनं निगडादिकं पूर्वसिद्धं सत् बन्ध्यं देवदत्तं बध्नातीति दृष्टम् । एवं यदि बन्ध्येभ्यः संस्कारेभ्यः पुद्गलाद्वा बन्ध्यात्पूर्वं रागादिकं बन्धनं सिद्धं स्यात्, तेन पूर्वसिद्धेन बन्धनं स्यात् संस्काराणां पुद्गलस्य वा । तच्चैतन्न संभवति निराश्रयस्य रागादिकस्य असिद्धत्वात् । पूर्वसिद्धस्य च बन्धनस्य पश्चाद् बन्ध्येन सह संबन्धस्य निष्प्रयोजनत्वात् । 30

---

[1] Mss. निरुप्यमानः for निरूप्यमाणः which is based on T.

बन्ध्यस्य च बन्धनात्पृथक्सिद्धस्य पूर्वबन्धनापेक्षानिष्प्रयोजनत्वाच्च नास्ति बन्ध्याद्बन्धनस्य पूर्वसिद्धिः । तस्मान्नैव बन्धनं कंचिदपि बध्नाति । न च कंचिदप्यबध्नतो बन्धनत्वं युक्तमिति नास्ति बन्धनम् । बन्धनाभावाच्च बन्ध्योऽपि नास्तीति सिद्धम् । यत्पुनरत्र शेषं दूषणं तत्—

B 292 **शेषमुक्तं गम्यमानगतागतैः ॥ ७ ॥**

5 इति वेदितव्यम् । श्लोकपाठपरिवर्तनेन—

बद्धो न बध्यते तावदबद्धो नैव बध्यते ।
बद्धाबद्धविनिर्मुक्तो बध्यमानो न बध्यते ॥

इत्यादिना योज्यम् ॥ ७ ॥

अत्राह—यद्यपि भवता[1] बन्धनं प्रतिषिद्धम्, तथापि संसारचारकागाराबद्धानामत्राणानां B 293 10 सत्त्वानां महाकारुणिकैस्तथागतैः शीलसमाधिप्रज्ञात्मकस्कन्धत्रयोपदेशो यदर्थमुक्तः, स तावः न्मोक्षोऽस्ति । न च अबद्धस्य पुंसो मोक्षः । तस्माद् बन्धोऽप्यस्तीति । उच्यते । स्याद्बन्धयदि मोक्ष एव स्यात् । इहायं मोक्षः परिकल्प्यमानः बद्धस्य वा परिकल्प्येत अबद्धस्य वा ? किं चातः ? उभयथा च न युज्यत इत्याह—

**बद्धो न मुच्यते तावदबद्धो नैव मुच्यते ।**
15 **स्यातां बद्धे मुच्यमाने युगपद्बन्धमोक्षणे ॥ ८ ॥**

तत्र बद्धस्य मोक्षो न संभवति बद्धत्वात् । अथ बद्धस्य पश्चादुपायेन मोक्ष इति कृत्वा बद्ध एव मुच्यते इति स्यात्, न तर्हि बद्धो मुच्यत इति वक्तव्यम्, किं तर्हि मोक्ष्यत इति । वर्तमानसामीप्यादेव मुच्यत इति चेत्, यदि कदाचिदपि मोक्षः संभवेत्, तदा समीपे स्यात्, यदा तु कस्यांचिदप्यवस्थायां[2] मोक्षे इष्यमाणे बद्धस्य मोक्षासंभवेन मोक्षाभावः प्रतिपिपादयिषितः, 20 तदा कुतो वर्तमानसमीपता ? एवं तावद् बद्धो न मुच्यते इति स्थितम् ॥

इदानीमबद्धोऽपि न मुच्यते । स हि मुक्त एव । तस्य पुनरपि मोक्षः किं कुर्यात् ? मुक्तानां चार्हतां पुनरपि मोक्षापेक्षत्वाद् बद्धतैव स्यात्, ततश्चार्हतोऽपि बन्धः स्यात् ॥

B 294 अथ स्यात्—अबद्धस्य मोक्षासंभवाद् बद्ध एव मुच्यते इति, एवं सति बद्धे मुच्यमाने परिकल्प्यमाने बद्धत्वान्मुच्यमानत्वाच्च यौगपद्येन बन्धमोक्षणे स्याताम् । न च परस्परविरुद्ध- 25 त्वादालोकान्धकारवदेकस्मिन् काले बन्धमोक्षणे उपपद्येते । यतश्चैवं बद्धाबद्धयोर्मोक्षासंभवः, तस्मान्मोक्षोऽपि नास्ति, तदभावाच्च बन्धनमपि नास्तीति सिद्धम् ॥

अत्राह—यदि भवतैव संसारनिर्वाणे निषिद्धे, बन्धमोक्षौ च प्रतिषिद्धौ, य एष संसारविनिर्मुमुक्षूणामविद्यासान्द्रान्धकारविविधकुदर्शनकठिनीतिदीर्घलतासंछादितसत्पथं जात्यादिविविधापर्यन्तव्यसनानिष्टतरविपुलविपाकफलदानुशयविषवृक्षसंकुलं विंशतिशिखरसमुन्नततरातिपृथुसत्काय-

[1] Mss. भगवता for भवता which is confirmed by T. [2] Mss. तस्यांचित् for कस्यांचित्.

दृष्टिमहाशैलपरिवेष्टितसर्वदिङ्मुखं विषयसुखाशातिपिच्छिलविपुलमहातटविवरवाहितृष्णानदीमहापरिखं संसारमहाटवीकान्तारं निस्तितीर्षूणां परमाश्वासकरः कुशलो महाधर्मच्छन्दः, कदा नु खल्वहमनुपादानो निर्वास्यामि, कदा नु मे निर्वाणं भविष्यतीति, ननु स व्यर्थक एव संजायते, यश्चाप्येवमुत्पादितकुशलामलविपुलधर्मच्छन्दानां[1] कल्याणमित्रसंसेवनदानशीलश्रुतचिन्ताभावनादिक्रमो निर्वाणप्राप्तये, ननु तस्यापि वैयर्थ्यं स्यादिति । उच्यते । यो ह्येवं निःस्वभावेषु सर्वभावेषु 5　B 295 प्रतिबिम्बमरीचिकाजलालातचक्रस्वप्नमायेन्द्रजालसदृशेषु आत्मात्मीयस्वभावरहितेषु विपर्यासमात्रानुगमात् तामेव सत्कायदृष्टिम् अहं ममेत्यहंकारममकारसमुदाचारपरिग्रहेणोत्पाद्य मन्यते –

**निर्वास्याम्यनुपादानो निर्वाणं मे भविष्यति ।**
**इति येषां ग्रहस्तेषामुपादानमहाग्रहः ॥ ९ ॥**

अहमनुपादानः सर्वोपादानरहितो निर्वास्यामि, मम चैवं प्रतिपन्नस्य निर्वाणं भविष्यतीति, 10 एवं येषां मुमुक्षूणां ग्राहो भवति, ननु तदेव अहंकारममकाराख्यं सत्कायदृष्ट्युपादानमेषां महाग्रहो भवति, न चैवंविधमहाग्रहाभिनिविष्टानां शान्तिः संभाव्यते । निरवशेषग्रहप्रहाणेनैव मोक्षावाप्तये यावदहंममेति ग्राहाभिनिवेशः, यावच्च निर्वाणं नाम अस्तीति ग्राहाभिनिवेशः[2], यावच्च उपादानत्यागाभिनिवेशः, तावन्नियतमेव अनुपायेन निर्वाणं प्रार्थयतां सर्व एवारम्भा व्यर्था भवन्ति । तस्मान्मुमुक्षुणा सर्वमेतत् परित्याज्यम् । यथोक्तं भगवता आर्यध्यायितमुष्टिसूत्रे[3] – 15

अथ खलु भगवान् मञ्जुश्रियं कुमारभूतमेतदवोचत्—चतुर्णामार्यसत्यानां यथाभूतार्थादर्शनाच्चतुर्भिर्विपर्यासैर्विपर्यस्तचित्ताः सत्त्वाः एवमिममभूतं संसारं नातिक्रामन्ति । एवमुक्ते　B 296 मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत्—देशयतु भगवान् कस्योपलम्भतः सत्त्वाः संसारं नातिक्रामन्ति । भगवानाह—आत्मात्मीयोपलम्भान्मञ्जुश्रीः सत्त्वाः संसारं नातिक्रामन्ति । तत् कस्य हेतोः ? यो हि मञ्जुश्रीरात्मानं परं च समनुपश्यति, तस्य कर्माभिसंस्कारा[4] 20 भवन्ति । बालो मञ्जुश्रीरश्रुतवान् पृथग्जनः अत्यन्तापरिनिर्वृतान् सर्वधर्मानप्रजानानः आत्मानं परं च उपलभते । उपलभ्य अभिनिविशते । अभिनिविष्टः सन् रज्यते दुष्यते मुह्यते । स रक्तो दुष्टो मूढः सन् त्रिविधं कर्म अभिसंस्करोति कायेन वाचा मनसा । सः असत्समारोपेण विकल्पयति—अहं रक्तः, अहं द्विष्टः, अहं मूढः इति । तस्य तथागतशासने प्रव्रजितस्य एवं भवति—अहं शीलवान्, अहं ब्रह्मचारीति । अहं संसारं समतिक्रमिष्यामि । 25 अहं निर्वाणमनुप्राप्स्यामि । अहं दुःखेभ्यो मोक्ष्यामि । स विकल्पयति—इमे कुशला धर्माः, इमेऽकुशला धर्माः, इमे धर्माः प्रहातव्याः, इमे धर्माः साक्षात्कर्तव्याः, दुःखं परिज्ञातव्यम्, समुदयः प्रहातव्यः, निरोधः साक्षात्कर्तव्यः, मार्गो भावयितव्यः । स विकल्पयति—अनित्याः सर्वसंस्काराः, आदीप्ताः सर्वसंस्काराः, यन्न्वहं सर्वसंस्कारेभ्यः पलायेयम् । तस्य एवमवेक्षमाणस्य उत्पद्यते निर्वित्सहगतो मनसिकारः अनिमित्तपुरोगतः । तस्यैवं भवति—एषा सा दुःखपरिज्ञा 30

---

१ T °कुशलधर्मच्छन्दानां for °कुशलामलविपुलधर्मच्छन्दानां. २ Mss. ग्राहोभिनिवेशः for ग्राहाभिनिवेशः which is confirmed by T. ३ The citation from the sūtra that follows is omitted in T. ४ Mss. कस्याभिसंस्काराः for कर्माभिसंस्काराः.

B 297 येयमेषां धर्माणां परिज्ञा। तस्यैवं भवति—यन्न्वहं समुदयं प्रजहेयम्। स एभ्यो धर्मेभ्य आर्तीयते जेह्रीयते वितरति विजुगुप्सते उत्त्रस्यति संत्रस्यति संत्रासमापद्यते। तस्यैवं भवति—इयमेषां धर्माणां साक्षात्क्रिया। इदं समुदयप्रहाणं यदिदमेभ्यो धर्मेभ्योऽर्तीयना विजुगुप्सना। तस्यैवं भवति—निरोधः साक्षात्कर्तव्यः।[1]समुदयं कल्पयित्वा निरोधं संजानाति। तस्यैवं भवति—एषा

5 सा निरोधसाक्षात्क्रिया। तस्यैवं भवति—यन्नूनमहं मार्गं भावयेयम्। स एको रहोगतः तान् धर्मान् मनसि कुर्वन् शमथं प्रतिलभते। तस्य तेन निर्वित्सहगतेन मनसिकारेण शमथ उत्पद्यते। तस्य सर्वधर्मेषु चित्तं प्रतिलीयते प्रतिवहति प्रत्युदावर्तते, तेभ्यश्चार्तीयते जेह्रीयते, अनभिनन्दनाचित्तमुत्पद्यते। तस्यैवं भवति—मुक्तोऽस्मि सर्वदुःखेभ्यः। न मम भूय उत्तरिं

B 298 किंचित्करणीयम्। अर्हन्नस्मि। इत्यात्मानं संजानाति। स मरणकालसमये उत्पत्तिमात्मनः

10 समनुपश्यति। तस्य काङ्क्षा च विचिकित्सा च भवति बुद्धबोधौ। स विचिकित्सापतितः कालगतो महानिरयेषु प्रपतति। तत्कस्य हेतोः? यथापीदमनुत्पन्नान् सर्वधर्मान् विकल्पयित्वा तथागते विचिकित्सां विमतिं चोत्पादयति॥

अथ खलु मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत्—कथं पुनर्भगवंश्चत्वारि आर्यसत्यानि द्रष्टव्यानि? भगवानाह—येन मञ्जुश्रीरनुत्पन्नाः सर्वसंस्कारा दृष्टाः, तेन दुःखं परिज्ञातम्। येन

15 असमुत्थिताः सर्वधर्मा दृष्टाः, तस्य समुदयः प्रहीणः। येन अत्यन्तपरिनिर्वृताः सर्वधर्मा दृष्टाः, तेन निरोधः साक्षात्कृतः।[2]येन अत्यन्तशून्याः सर्वधर्मा दृष्टाः, तेन मार्गो भावितः। येन मञ्जुश्रीरेवं चत्वारि आर्यसत्यानि दृष्टानि, स न कल्पयति न विकल्पयति—इमे कुशला धर्माः, इमेऽकुशला धर्माः। इमे धर्माः प्रहातव्याः, इमे धर्माः साक्षात्कर्तव्याः। दुःखं परिज्ञातव्यम्। समुदयः प्रहातव्यः, निरोधः साक्षात्कर्तव्यः, मार्गो भावयितव्य इति। तत्कस्य हेतोः? तथाहि—

20 स तं धर्मं न समनुपश्यति यं परिकल्पयेत्। बालपृथग्जनास्तु एतान् धर्मान् कल्पयन्तो रज्यन्ति च द्विषन्ति च मुह्यन्ति च। स न कंचिद्धर्ममाव्यूहति निर्व्यूहति। तस्य एवमनाव्यूहतोऽनिर्व्यूहतः त्रैधातुके चित्त न सज्जति, अजातं सर्वत्रैधातुकं समनुपश्यति॥ इति विस्तरः॥ ९॥

B 299 अत एव अस्मादागमात् परमार्थसत्य उच्यते—

**न निर्वाणसमारोपो न संसारापकर्षणम्।**

25 **यत्र कस्तत्र संसारो निर्वाणं किं विकल्प्यते॥ १०॥**

यत्र हि नाम परमार्थसत्ये नैवं न निर्वाणसमारोपः न निर्वाणाध्यारोपः संभवति, अनुपलभ्यमानत्वात्, नापि संसारापकर्षणं संसारपरिक्षयो न संभवति, कस्तत्र संसारः यो विकल्प्यते क्षयार्थम्, किं वा तत्र निर्वाणं यत्प्राप्त्यर्थं विकल्प्यते? अथवा। यत्र निर्वाणे कस्यचित् सत्त्वस्य संसारादपकर्षणमपनयनं[3] निर्वाणे च समारोपणं प्रयत्नवतापि न शक्यते कर्तुं

30 संसारनिर्वाणयोरप्यनुपलभ्यमानत्वात्, तत्र किं निर्वाणं विकल्प्यते? नैव हि किंचिद्विकल्पयितुं

---

1 Mss. न प्रलीयते for प्रतिलीयते which is confirmed by T. २ T om. नैव. ३ P उपनयनं for अपनयनं.

युक्तम् । अविकल्पयतश्च नियतं यथोदितसंसाराटवीकान्तारातिक्रमो निर्वाणपुरप्राप्तिश्च भविष्यतीति । अत एवोक्तमार्यमारदमनसूत्रे –

अथ मञ्जुश्रीः कुमारभूतः तस्यां वेलायां तथारूपं समन्वाहारं समन्वाहरति स्म, यन्मारः पापीयानिन्द्रकीलबन्धनबद्धो धरणीतलप्रपतितः उत्क्रोशति स्म — गाढबन्धनबद्धोऽस्मि । मञ्जुश्रीराह — अस्ति पापीयन्नेतस्माद्बन्धनाद्गाढतरं बन्धनं येन त्वं नित्यबद्धो न पुनर्बध्यसे ? तत्पुनः 5 B 300 कतमत् ? यदिदमस्मिमानविपर्यासबन्धनं तृष्णादृष्टिबन्धनम्, इदं पापीयन् बन्धनम् । अतो बन्धनाद् गाढतरं बन्धनं न संविद्यते । तेन त्वं नित्यबद्धो न पुनर्बध्यसे । पेयालम् । आह — किं त्वं पापीयन्नात्तमना भूयाः यदि मुच्येथाः । आह — आत्तमना भवेयम्, परमात्तमना भवेयम् ॥

अथ खलु सुयामो देवपुत्रो मञ्जुश्रियं कुमारभूतमेतदवोचत् — उत्सृज मञ्जुश्रीर्मारं पापीयांसम् । गच्छतु स्वभवनम् । अथ खलु मञ्जुश्रीः कुमारभूतो मारं पापीयांसमेतदवोचत् — 10 केनासि पापीयन् बद्धो यदात्मानमुत्सृजसि ? आह — न जाने[1] मञ्जुश्रीः — केनास्मि बद्धः इति । आह—यथा त्वं पापीयन् अबद्धो बद्धसंज्ञी, एवमेव सर्वबालपृथग्जना अनित्ये नित्यसंज्ञिनः, दुःखेऽदुःखसंज्ञिनः, अशुभे शुभसंज्ञिनः, अनात्मनि आत्मसंज्ञिनः, अरूपे रूपसंज्ञिनः, अवेदनायां वेदनासंज्ञिनः, असंज्ञायां संज्ञासंज्ञिनः, असंस्कारे संस्कारसंज्ञिनः, अविज्ञाने विज्ञानसंज्ञिनः । अपि तु खलु पुनः पापीयन्, यस्त्वं मोक्ष्यसे, कुतो मोक्ष्यसे ? आह — नाहं जाने कुतश्चिन्मोक्ष्ये । आह — 15 एवमेव पापीयन् येऽपि मोक्ष्यन्ते, न ते कुतश्चिद्विमोक्ष्यन्ते, अन्यत्र या असौ असद्भूतसंज्ञा । तां B 301 परिजानन्ति, तां परिज्ञाय विमुक्ता इत्युच्यन्ते ॥ इति ॥

अत एव आगमाद् असद्विपर्यासकल्पनामात्रलताबन्धनविच्छेदो विमोक्षो निर्वाणमित्युच्यते स्वप्नोपलब्धदहनज्वालानिर्वापणवत् तदनिलसलिलैरिति ॥ १० ॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ 20
बन्धमोक्षपरीक्षा नाम षोडशमं प्रकरणम् ॥

---

१ T om. जाने.

B 302

## कर्मफलपरीक्षा सप्तदशमं प्रकरणम् ।

अत्राह – विद्यत एव संसारः, कर्मफलसंबन्धाश्रयत्वात् । यदि इह संतानाविच्छेदक्रमेण [1]जन्ममरणपरंपरया हेतुफलभावप्रवृत्त्या संस्काराणामात्मनो वा संसरणं स्यात्, स्यात्तदानीं कर्मफलसंबन्धः । [2]यथावर्णिते संसाराभावे तु उत्पत्त्यनन्तरविनाशित्वाच्चित्तस्य [3]कर्माक्षेपकाले च
5 विपाकस्यासद्भावात् कर्मफलसंबन्धाभाव एव स्यात् । संसारसद्भावे तु सति इह कृतस्य कर्मणो जन्मान्तरेऽपि विपाकफलसंबन्धात् कर्मणां फलसंबन्धो न विरोधितो भवति । तस्माद्विद्यत एव संसारः कर्मफलसंबन्धाश्रयत्वादिति । कानि पुनस्तानि कर्माणि किं वा तत्फलमिति तत्प्रभेदविवक्षयेदमुच्यते—

B 303

आत्मसंयमकं चेतः परानुग्राहकं च यत् ।
10 मैत्रं स धर्मस्तद्बीजं फलस्य प्रेत्य चेह च ।। १ ।।

तत्र आहितः उत्पादितः अहंमानोऽस्मिन्नित्यात्मा । स्कन्धानुपादाय प्रज्ञप्यमानः पुद्गल आत्मेत्युच्यते । चिनोति उपचिनोति शुभमशुभं कर्म विपाकदानसामर्थ्ये नियमयतीति चेतः । चित्तं मनः विज्ञानमिति तस्यैव पर्यायाः । आत्मानं संयमयति विषयेष्वस्वतन्त्रयति रागादिक्लेशवशेन प्रवृत्तिं निवारयतीत्यात्मसंयमकम् । तदेतदात्मसंयमकं कुशलं चेतः प्राणातिपातादिषु प्रवृत्ति-
15 विधारकं दुर्गतिगमनाद्धारयतीति धर्म इत्युच्यते ।।

B 304

धर्मशब्दोऽयं प्रवचने त्रिधा व्यवस्थापितः । स्वलक्षणधारणार्थेन कुगतिगमनविधारणार्थेन पाञ्चगतिकसंसारविधारणार्थेन । तत्र स्वलक्षणधारणार्थेन सर्वे सास्रवा अनास्रवाश्च धर्मा इत्युच्यन्ते । कुगतिगमनविधारणार्थेन दशकुशलादयो धर्मा इत्युच्यन्ते ।

धर्मचारी सुखं शेते अस्मिंल्लोके परत्र च ।।

[ =धम्मपद–१६८–१६९ ]

20 पाञ्चगतिकसंसारगमनविधारणार्थेन निर्वाणे धर्म इत्युच्यते, धर्मं शरणं गच्छतीत्यत्र । इह तु कुगतिगमनविधारणार्थेनैव धर्मशब्दोऽभिप्रेतः ।।

किं पुनरात्मसंयमकमेवैकं चेतः धर्म इति ? नेत्याह । किं तर्हि परानुग्राहकं च मैत्रं च यच्चेतः, असावपि धर्मः । मैत्रमित्यत्र चशब्दो लुप्तनिर्दिष्टो वेदितव्यः । तत्र परमनुगृह्णातीति परानुग्राहकं चेतः, चतुःसंग्रहवस्तुप्रवृत्तं भयपरित्राणप्रवृत्तं च यच्चेतः,
25 असावपि धर्मः । मित्रे भवमविरुद्धं सत्त्वेषु यच्चेतः, तन्मैत्रं चेतः । मैत्रं यच्चेतः, तन्मैत्रचेतः, [4]मैत्रमेव वा । यच्चैतत् त्रिविधं चेतो निर्दिष्टम्, स धर्म इत्युच्यते । विपर्ययादधर्मो योज्यः ।।

B 305

---

१ Mss. जन्ममरणपरस्परयोः for °परंपरया which is confirmed by T. २ Mss. यथा पण्डिते for यथावर्णिते which is based on T. ३ Mss. कर्माक्षयकाले विपाकः स्यात् सद्भावात् for कर्मा...द्भावात् which is confirmed by T. ४ T अपि च । मित्रतैव मैत्रम्, आत्मानुग्राहकं यच्चित्तम्, तदेव मैत्रचित्तम् for मैत्रमेव वा.

यच्चैतन्निर्दिष्टप्रभेदं चेतः, तद्बीजं फलस्य। असाधारणं फलाभिनिर्वृत्तौ यत्कारणम्, तदेव बीजमित्युच्यते। तद्यथा शाल्यङ्कुरस्य शालिबीजम्। यत्तु साधारणं क्षित्यादि न तद्बीजं कारणमेतत्। यथैतदेवम्, इहापि इष्टस्य विपाकस्याभिनिर्वृत्तौ त्रिविधं चेतो भवति बीजम्। पुरुषकारादयस्तु कारणमेव॥

कस्मिन् पुनः काले बीजस्य फलनिष्पत्तिरित्याह—प्रेत्य चेह च। प्रेत्येति अदृष्टे जन्मनि, 5 इहेति दृष्टे जन्मनीत्यर्थः। एतच्च आगमाद्विस्तरेण बोद्धव्यम्॥ १॥

एवं तावत् चित्तात्मकमेवैकं धर्मं व्यवस्थाप्य पुनरपि द्विविधं भगवता—

**चेतना चेतयित्वा च कर्मोक्तं परमर्षिणा।**

B 306

परमार्थदर्शनादृषिः। परमश्चासौ ऋषिश्चेति परमर्षिः सर्वाकारतया परमार्थगमनात् श्रावकप्रत्येकबुद्धेभ्योऽपि उत्कृष्टत्वात् परमर्षिः संबुद्धो भगवान्। तेन परमर्षिणा चेतना कर्म, 10 चेतयित्वा च कर्मेत्युक्तं सूत्रे॥

यच्चैतद् द्विविधं कर्मोक्तम्—

**तस्यानेकविधो भेदः कर्मणः परिकीर्तितः॥ २॥**

कथं कृत्वा?

**तत्र यच्चेतनेत्युक्तं कर्म तन्मानसं स्मृतम्।** 15
**चेतयित्वा च यत्तूक्तं तत्तु कायिकवाचिकम्॥ ३॥**

B 307

मनसि भवं मानसम्। मनोद्वारेणैव निष्ठागमनात् कायवाक्प्रवृत्तिनिरपेक्षत्वाच्च मनोविज्ञान-संप्रयुक्तैव चेतना मानसं कर्मेत्युच्यते। तत्रशब्दो निर्धारणे। यत्तु द्वितीयं चेतयित्वा च कर्मेत्युक्तम्, तत्पुनः कायिकं वाचिकं च वेदितव्यम्। एवं च एवं च कायवाग्भ्यां प्रवर्तिष्ये इत्येवं चेतसा संचिन्त्य यत् क्रियते, तच्चेतयित्वा कर्मेत्युच्यते। तत्पुनर्द्विविधम्, कायिकं वाचिकं च। कायवाचो- 20 र्भवत्वात् तद्द्वारेण च निष्ठागमनात्। एवं च त्रिविधम्—कायिकं वाचिकं मानसं च॥ ३॥

एतदपि त्रिविधं कर्म पुनर्भिद्यमानं सप्तविधं संजायते, इत्येवं तस्य कर्मणो भगवता बहुप्रकारो भेदोऽनुवर्णितः। कथं कृत्वा?

**वाग्विष्पन्दोऽविरतयो याश्चाविज्ञप्तिसंज्ञिताः।**
**अविज्ञप्तय एवान्याः स्मृता विरतयस्तथा॥ ४॥** 25

**परिभोगान्वयं पुण्यमपुण्यं च तथाविधम्।**
**चेतना चेति सप्तैते धर्माः कर्माञ्जनाः स्मृताः॥ ५॥**

B 308

तत्र व्यक्तवर्णोच्चारणं वाक्। विष्पन्दः शरीरचेष्टा। तत्र कुशलाकुशला वा वाक् सर्वैव विरत्यविरतिलक्षणा विज्ञप्तिसमुत्थापिका सामान्येन वागिति गृह्यते। एवं कुशलोऽकुशलो वा विरत्यविरतिलक्षणो विज्ञप्तिसमुत्थापको विष्पन्दः सामान्येन गृह्यते॥ यथा चैतद्विज्ञप्तेर्द्विधा भेदः, 30

एवमविज्ञप्तेरपि। अविरतिलक्षणा अविज्ञप्तयः विरतिलक्षणाश्चेति कृत्वा। तत्र अविरतिलक्षणा अविज्ञप्तयः तद्यथा अद्यप्रभृति मया प्राणिनं हत्वा चौर्यं कृत्वा जीविका परिकल्पयितव्येति पापकर्माभ्युपगमात्प्रभृति तदकारिणोऽपि अकुशलकर्माभ्युपगमहेतुकाः सततसमितमविज्ञप्तयः समुपजायन्ते। कैवर्तादीनां च जालादिपरिकर्मकालात्प्रभृति तदकारिणामपि या अविज्ञप्तय उपजायन्ते, ता एता 5 अविरतिलक्षणा अविज्ञप्तय इत्युच्यन्ते। यथा चैतास्तथा अन्याः विरतिलक्षणाः कुशलस्वभावा अविज्ञप्तयः। तद्यथा — अद्यप्रभृति प्राणातिपातादिभ्यः प्रतिविरमामीति कायवाग्विज्ञप्तिपरिसमाप्तिकाललक्षणात्प्रभृति तदुत्तरकालं प्रमत्तांद्यवस्थस्यापि याः कुशलोपचयस्वभावा अविज्ञप्तय उपजायन्ते, B 309 ता एता विरतिलक्षणा अविज्ञप्तय इत्युच्यन्ते। एता रूपक्रियास्वभावा अपि सत्यो विज्ञप्तिवत् परान्न विज्ञापयन्तीत्यविज्ञप्तयः॥

B 310 10 तथा परिभोगान्वयं पुण्यम्, कुशलमित्यर्थः। परिभोगेन अन्वयः अस्येति परिभोगान्वयम्। परिभोगः परित्यक्तस्य वस्तुनः संघादिभिरुपभोगः। अन्वयः अनुगमः। दायकसंतानजः कुशलोपचय इत्यर्थः॥

अपुण्यं च तथाविधम्, परिभोगान्वयमित्यर्थः। तद्यथा देवकुलादिप्रतिष्ठापनम्, यत्र सत्त्वा हन्यन्ते। यथा यथा हि तत्कीर्तौ प्राणिनो हन्यन्ते, तथा तथा तद्देवकुलाद्युपभोगात् तत्कर्तॄणां 15 संताने परिभोगान्वयमपुण्यमपि जायते, इत्येवमपुण्यं च तथाविधं भवति॥

B 311 चित्ताभिसंस्कारमनस्कर्मलक्षणा चेतना चेति॥

संक्षेपेण एतत्सप्तविधं कर्म भवति — कुशलाकुशला वाक्, कुशलाकुशलो विष्पन्दः, कुशलमविज्ञप्तिलक्षणम्, अकुशलमविज्ञप्तिलक्षणम्, परिभोगान्वयं पुण्यम्, परिभोगान्वयमपुण्यम्, चेतना चेति॥

20 एते च सप्त धर्माः कर्माञ्जनाः कर्मत्वेनाभिव्यक्ताः कर्मलक्षणाः स्मृताः॥ ५॥

अत्रैके परिचोदयन्ति - यदेतत् कर्म बहुविधमुक्तम्, तत् किमा विपाककालादवतिष्ठते, अथ न तिष्ठति उत्पत्त्यनन्तरविनाशित्वात्? यदि तावत् —

**तिष्ठत्या पाककालाच्चेत्कर्म तन्नित्यतामियात्।**
**निरुद्धं चेन्निरुद्धं सत्किं फलं जनयिष्यति॥ ६॥**

25 यदि उत्पन्नं सत् कर्म आविपाककालं स्वरूपेणावतिष्ठते इति परिकल्प्यते, तद् इयन्तं कालमस्य नित्यता आपद्यते विनाशरहितत्वात्। पश्चाद्विनाशसद्भावान्न नित्यत्वमिति चेत्, नैतदेवम्, पूर्वं विनाशरहितस्य आकाशादिवत् पश्चादपि विनाशेन संबन्धाभावात्। विनाशरहितस्य च असंस्कृतत्वप्रसङ्गात्, असंस्कृतानां च विपाकादर्शनात्, अविपाकत्वेन सदैवावस्थानात् नित्यताभ्युपगम एव कर्मणामुपपद्यते। इत्येवं तावन्नित्यत्वे दोषः। अथ उत्पादानन्तरविनाशित्वमेव कर्मणामभ्युपेतम्, ननु एवं सति —

निरुद्धं चेन्निरुद्धं सत् किं फलं जनयिष्यति।

अभावीभूतं सत् कर्म अविद्यमानस्वभावत्वान्नैव फलं जनयिष्यतीत्यभिप्रायः॥ ६॥

तत्रैके निकायान्तरीयाः परिहारं वर्णयन्ति – उत्पत्त्यनन्तरविनाशित्वात्संस्काराणाम्, अनित्यत्वदोषस्तावदस्माकं नोपपद्यते । यच्चाप्युक्तम्–　　B 312

निरुद्धं चेन्निरुद्धं सत् किं फलं जनयिष्यति ।

इति, अत्रापि परिहारं ब्रूमः—

**योऽङ्कुरप्रभृतिर्बीजात्संतानोऽभिप्रवर्तते ।**　　5
**ततः फलमृते बीजात्स च नाभिप्रवर्तते ॥ ७ ॥**

इह बीजं क्षणिकमपि सत् स्वजातीयभाविफलविशेषनिष्पत्तिसामर्थ्यविशेषयुक्तस्यैव संतानस्य अङ्कुरकाण्डनालपत्राद्यभिधानस्य हेतुभावमभ्युपगम्य निरुध्यते । यश्चायमङ्कुरप्रभृतिर्बीजात्संतानः प्रवर्तते, तस्मात् क्रमेण सहकारिकारणवैकल्ये सति स्वल्पादपि हेतोर्विपुलफलप्रचय उपजायते । ऋते बीजात् विना बीजात् स च अङ्कुरादिसंतानः नाभिप्रवर्तते । तदेवं तद्भावे भावित्वेन तदभावे च अभावित्वेन बीजहेतुकत्वमङ्कुरादिसंतानस्य फलस्योपदर्शितं भवति ॥ ७ ॥　　10

तदेवम्–

**बीजाच्च यस्मात्संतानः संतानाच्च फलोद्भवः ।**　　B 313
**बीजपूर्वं फलं तस्मान्नोच्छिन्नं नापि शाश्वतम् ॥ ८ ॥**

यदि इह बीजमप्रसूय अङ्कुरादिसंतानं ज्वालाङ्गारादिविरोधिप्रत्ययसांनिध्यान्निरुध्येत,[1] तदा तत्र कार्यसंतानप्रवृत्त्यदर्शनात् स्यादुच्छेददर्शनम् । यदि च बीजं न निरुध्येत, अङ्कुरादिसंतानश्च प्रवर्तेत, तदा बीजस्यानिरोधाभ्युपगमाच्छाश्वतदर्शनं स्यात्, न चैतदेवम् , इत्यतो नास्ति बीजस्य शाश्वतोच्छेददर्शनप्रसङ्गः[2] ॥ ८ ॥　　15

यथा च बीजे अयं क्रमोऽनुवर्णितः, एवम्–

**यस्तस्माच्चित्तसंतानश्चेतसोऽभिप्रवर्तते ।**　　20
**ततः फलमृते चित्तात्स च नाभिप्रवर्तते ॥ ९ ॥**

तस्मात् कुशलाकुशलचेतनाविशेषसंप्रयुक्ताच्चित्ताद् यः चित्तसंतानस्तद्धेतुकः प्रवर्तते, तस्मात् कुशलाकुशल[3]चेतनापरिभाविताच्चित्तसंतानात् सहकारिकारणसंनिधानावैकल्ये सति इष्टमनिष्टं फलमुपजायते सुगतिदुर्गतिषु । ऋते तु तच्चित्तात् चित्तमन्तरेण स च नाभिप्रवर्तते ॥ ९ ॥

तदेवम्–　　25

**चित्ताच्च यस्मात्संतानः संतानाच्च फलोद्भवः ।**　　B 314
**कर्मपूर्वं फलं तस्मान्नोच्छिन्नं नापि शाश्वतम् ॥ १० ॥**

यदि अर्हच्चरमचित्तमिव तद्धेतुफलपारंपर्याविच्छिन्नक्रमवर्तिनो भाविनश्चित्तसंतानस्य हेतुभावमनुपगम्य कुशलं चित्तं निरुध्येत, तदा उच्छिन्नं तत्कर्म स्यात् । अथापि अनागतसंतानस्य हेतुभावमुपगम्य स्वरूपादप्रच्युतं स्यात्, स्यात्तदानीं कर्म शाश्वतम् । न चैतदेवमिति । तस्मात् क्षणिककर्माभ्युपगमेऽपि नास्ति उच्छेदशाश्वतदर्शनद्वयप्रसङ्ग इति ॥ १० ॥　　30

---

१ Mss. ज्वालमगारादिविरोधः प्रत्यय° for ज्वालाङ्गारादिविरोधिप्रत्यय°. २ P om.° दर्शन° against Mss. ३ T om. अकुशल°.

तदत्र यथोदितकर्मप्रभेदव्याख्याने दश कुशलाः कर्मपथा व्याख्याताः । ते च –

**धर्मस्य साधनोपायाः शुक्लाः कर्मपथा दश ।**
**फलं कामगुणाः पञ्च धर्मस्य प्रेत्य चेह च ॥ ११ ॥**

त एते दश कुशलाः कर्मपथा धर्मस्य साधनोपाया निष्पत्तिहेतुभूता इत्यर्थः ॥

5 कः पुनरसौ कुशलकर्मपथव्यतिरिक्तो धर्मो नाम, यस्यैते साधनोपायत्वेन व्यवस्थाप्यन्ते ? उच्यते । चित्तविशेष एव कश्चित् धर्मशब्देनोक्तः ॥

आत्मसंयमकं चेतः परानुग्राहकं च यत् ।
मैत्रं स धर्मः

[ मध्यमकशास्त्र–१७·१ ]

B 315 इत्यनेन । अथवा । परिनिष्ठितरूपा एते दश कुशलाः कर्मपथा धर्मशब्दवाच्या भवन्ति, 10 क्रियमाणरूपास्तु कुशलकर्मपथवाच्या भवन्ति । तदस्य उक्तलक्षणस्य एते दश कुशलाः कर्मपथा निष्पत्तौ हेतुत्वेन व्यवस्थाप्यन्ते । कथं पुनरत्र प्रक्रान्ते कर्मविभागे दश कुशलाः कर्मपथा इति ? उच्यते –

वाग्विष्पन्दोऽविरतयो याश्चाविज्ञप्तिसंज्ञिताः ।

[ मध्यमकशास्त्र–१७·४ ]

इत्यादिना कायिकास्त्रयः कर्मपथाः वाचिकाश्चत्वारो व्याख्याताः । चेतना चेत्यनेन अभिध्याव्यापाद- 15 सम्यग्दृष्ट्याख्यास्त्रयो मानसा व्याख्याताः । इत्येवं दशापि कुशलाः कर्मपथा अत्र व्याख्याताः । ते च यथोदितस्य धर्मस्य निष्पत्तिहेतवो भवन्ति । अस्य च धर्मस्य रूपशब्दगन्धरसस्प्रष्टव्यलक्षणाः पञ्च कामगुणाः । प्रेत्य च अदृष्टे परलोके इत्यर्थः, इह चेति इहलोके इत्यर्थः, फलमुपभुज्यते इति ॥ ११ ॥

एवं तावदैकनिकायिकैराक्षेपपरिहारे वर्णिते सति, तान् प्रति अपरे दोषमुद्भाव्य 20 अन्याक्षेपपरिहारं वर्णयन्तः आहुः –

B 316

**बहवश्च महान्तश्च दोषाः स्युरपि कल्पना ।**
**यद्येषा तेन नैवैषा कल्पनात्रोपपद्यते ॥ १२ ॥**

यदि बीजाङ्कुरसाधर्म्येण चित्तसंताने शाश्वतोच्छेददर्शनद्वयदोषप्रसङ्गपरिहारः स्यात्, तदा बहवश्च दोषाः संख्याबहुत्वेन महान्तश्च दृष्टादृष्टविरोधेन परपक्षे प्राप्नुवन्ति । कथं कृत्वा ? 25 यदि हि बीजसंतानदृष्टान्तेन शालिबीजात् शाल्यङ्कुरादिसंतान एव प्रवर्तते, न विजातीयः, शाल्यङ्कुरादिसंतानाच्च शालिफलमेव उपजायते, न बिल्वफलम्, भिन्नजातीयत्वात्, एवमिहापि कुशलचित्तात् कुशलचित्तसंतान एव स्यात्, समानजातीयत्वात्, न अकुशलाव्याकृतचित्त- संतानः, विजातीयत्वात् । एवमकुशलाव्याकृतचित्तादकुशलाव्याकृतचित्तसंतान एव स्यान्नान्यः, भिन्नजातीयत्वात् । कामरूपारूप्यावचरानास्रवचित्तेभ्यः सदृशानामेव चित्तानां कामरूपारूप्याव-

---

१. T अनभिध्या° for अभिध्या°. २. Mss. कुशलसंतानः for कुशलचित्तसंतान which reading is confirmed by T. ३. Mss. and T om.° चित्त.°

चरानास्रवाणामुत्पादः स्यात्, न भिन्नजातीयानाम् । मनुष्यचित्तान्मनुष्यचित्तमेव स्यान्न देवनारकतिर्यगाद्यन्यचित्तम् । ततश्च यो देवः स देव एव स्यात्, यो मनुष्यः स मनुष्य एव स्यादित्यादि । ततश्च अकुशलमपि कुर्वतां देवमनुष्याणां गतियोनिवर्णबुद्धीन्द्रियबलरूपभोगादि-वैचित्र्यं न स्यादपायपतनं च । इष्यते चैतत्सर्वमिति । एवं बहवश्च महान्तश्च दोषा यस्माद्बीज-संतानसाधर्म्यकल्पनायां प्रसज्यन्ते, तस्मान्नैषा कल्पना अत्रोपपद्यते ॥ १२ ॥ 5

**इमां पुनः प्रवक्ष्यामि कल्पनां यात्र योज्यते ।**
**बुद्धैः प्रत्येकबुद्धैश्च श्रावकैश्चानुवर्णिताम् ॥ १३ ॥** B 317

का चासौ कल्पनेत्याह—

**पत्रं यथाविप्रणाशस्तथर्णमिव कर्म च ।**
**चतुर्विधो धातुतः स प्रकृत्याव्याकृतश्च सः ॥ १४ ॥** 10

इह कुशलं कर्म कृतं सत् उत्पादानन्तरमेव निरुध्यते, न च तस्मिन्निरुद्धे फलाभावप्रसङ्गः । यस्माद् यदैव तत्कर्म उत्पद्यते, तदा एतस्य कर्मणोऽविप्रणाशो नाम विप्रयुक्तो धर्मः कर्तुः संताने समुपजायते ऋणपत्रस्थानीयः । तदेवं पत्रं यथा अविप्रणाशः तथा वेदितव्यः । यस्य च असौ अविप्रणाशाख्यो धर्म उत्पद्यते, ऋणमिव तत्कर्म वेदितव्यम् । यथा च ऋणपत्रावस्थानात् प्रयुक्तेऽपि धने धनिनो न धननाशो भवति, संबध्यत एव स कालान्तरेण पञ्चमेन[1] धनस्कन्धेन, 15 B 318 तथा विनष्टेऽपि कर्मणि अविप्रणाशाख्यधर्मान्तरावस्थानात् तन्निमित्तकेन फलेन अभिसंबध्यत एव कर्ता । यथा च ऋणपत्रं दातुर्धनाभ्यागमं कृत्वा निर्भुक्तं सत् पुनरपि विद्यमानं वा अविद्यमानं वा न धनाभ्यागमे समर्थम्, एवमविप्रणाशोऽपि दत्तविपाकः सन् विद्यमानो वा अविद्यमानो वा न शक्नोति निर्भुक्तपत्रवत् कर्तुः पुनरपि विपाकसंबन्धं कर्तुम् ॥

यश्चायमविप्रणाशोऽस्माभिरुक्तः सूत्रान्तरोक्तः, चतुर्विधो धातुतः स कामरूपारूप्यावचराना- 20 स्रवभेदात्, प्रकृत्या अव्याकृतश्च सः । कुशलाकुशलत्वेन अव्याकरणादव्याकृत एवाविप्रणाशः । यदि असौ अकुशलानां कर्मणामकुशलः स्यात्, तदा कामं वीतरागाणां न स्यात् । यदि च कुशलानाम्, कुशलः स्यात्, समुच्छिन्नकुशलमूलानां स न स्यात् । तस्मात् प्रकृत्यव्याकृत एवासौ ॥ १४ ॥

किं च । 25

**प्रहाणतो न प्रहेयो भावनाहेय एव वा ।** B 319

स चायमविप्रणाशः प्रहाणतो न प्रहेयः । पार्थग्जनिकानि कर्माणि दर्शनमार्गेणैव प्रहीयन्ते मा भूदार्यः पृथग्जनकर्मसमन्वागत इति । अविप्रणाशस्तु तत्कर्मप्रहाणेऽपि दर्शनमार्गेण B 320 न प्रहीयते, किं तु भावनामार्गेण वा तस्या प्रहाणं भवति । धातुसमतिक्रमणप्रहेय एवेति वाशब्दो विकल्पार्थः ॥

यतश्चैवमविप्रणाशः कर्मविनाशेऽपि न नश्यति, कर्मप्रहाणेऽपि न प्रहीयते,

**तस्मादविप्रणाशेन जायते कर्मणां फलम् ॥ १५ ॥**

---

1. T om. पञ्चमेन.

यदि पुनरपि अस्य अविप्रणाशस्य कर्मणः प्रहाणेन प्रहाणात्प्रहाणतः प्रहाणं स्यात्, कर्मणश्च संक्रमेण कर्मणो विनाशेन कर्मान्तरसंमुखीभावेन विनाशः स्यात्, को दोषः स्यादिति ? उच्यते—

प्रहाणतः प्रहेयः स्यात्कर्मणः संक्रमेण वा ।
5 यदि दोषाः प्रसज्येरंस्तत्र कर्मवधादयः ॥ १६ ॥

यदि दर्शनमार्गेण पार्थग्जनिककर्मवदविप्रणाशः प्रहीयेत, तदा कर्मणो विनाश एव B 321 स्यात् । कर्मविनाशाच्च आर्याणामिष्टानिष्टकर्मफलविपाकः पूर्वकर्मफलहेतुको न स्यात् । अकृतस्यैव कर्मणः फलोदयः स्यात् । कर्मफलाभावदर्शनाच्च मिथ्यादर्शनं स्यादिति । एवं कर्मवधादयो दोषाः प्रसज्यन्ते प्रहाणतः प्रहेयत्वाभ्युपगमे सति अविप्रणाशस्य । एवं कर्मणः संक्रमेऽपि 10 योज्यम् ॥ १६ ॥

सर्वेषां विषभागानां सभागानां च कर्मणाम् ।
प्रतिसंधौ सधातूनामेक उत्पद्यते तु सः ॥ १७ ॥

भिन्नजातीयानि कर्माणि विषभागानि । सदृशानि सभागानि । तेषां सर्वेषामेव सभागानां च विषभागानां च कर्मणां कामरूपारूप्यधातुप्रतिसंधिषु सर्वकर्मापमर्दनः एक एव अविप्रणाश 15 उत्पद्यते । स चापि सधातूनां समानधातुकानामेव उत्पद्यते न विषभागधातुकानाम् ॥ १७ ॥

कर्मणः कर्मणो दृष्टे धर्म उत्पद्यते तु सः ।
द्विप्रकारस्य सर्वस्य विपक्वेऽपि च तिष्ठति ॥ १८ ॥

B 322 स चायमविप्रणाशाख्यो धर्मः सर्वस्यैव कर्मणः चेतनाचेतयित्वास्वभावस्य सास्रवानास्रवभेदेन वा द्विप्रकारभिन्नस्य दृष्टे धर्मे इहैव जन्मनि कर्मणः कर्मणः एकैकोऽविप्रणाश उत्पद्यते । स 20 चायमविप्रणाशो विपक्वेऽपि विपाके नावश्यं निरुध्यते, निर्भुक्तपत्रवच्च विद्यमानोऽपि सन् न शक्नोति पुनरपि विपक्तुम् ॥ १८ ॥

फलव्यतिक्रमाद्वा स मरणाद्वा निरुध्यते ।
अनास्रवं सास्रवं च विभागं तत्र लक्षयेत् ॥ १९ ॥

तत्र फलव्यतिक्रमान्निरुध्यते । यथोक्तम्—भावनाहेय एवेति । मरणान्निरुध्यते । यथोक्तम्—

25 प्रतिसंधौ सधातूनामेक उत्पद्यते तु सः । इति ।

स चायं सास्रवाणां सास्रवः, अनास्रवाणामनास्रवः इत्येवं विभागं लक्षयेत् ॥१९॥

तदेवम्—

शून्यता च न चोच्छेदः संसारश्च न शाश्वतम् ।
कर्मणोऽविप्रणाशश्च धर्मो बुद्धेन देशितः ॥ २० ॥

B 323 यस्मात् कर्म कृतं सत् निरुध्यते, न स्वभावेनावतिष्ठते, तस्मात् कर्मणः स्वभावेनावस्थानात् शून्यता चोपपद्यते । न चैवं कर्मणोऽनवस्थानादुच्छेददर्शनप्रसङ्गः, अविप्रणाशपरिग्रहेण कर्मविपाकसद्भावात् । विपाकाभावे हि कर्मणः उच्छेददर्शनं स्यात् । अविप्रणाशधर्मसद्भावात्

बीजसंतानसाधर्म्यपरिकल्पनाभावाच्च नानागतिजातियोनिधातुभेदभिन्नश्च पाञ्चगतिकः संसारो विचित्रः सिद्धो भवति । न च शाश्वतवादप्रसङ्गः, कर्मणः स्वरूपेणावस्थानानभ्युपगमात् । कर्मणां च अविप्रणाशः, अविप्रणाशसद्भावात्, इति । एवं निरवशेषाविद्यानिद्रापगमाद्विबुद्धेन भगवता-यस्मादयं धर्मो देशितः, तस्माद् यत्पूर्वमुक्तं परेण –

तिष्ठत्या पाककालाच्चेत् कर्म तन्नित्यतामियात् । 5

निरुद्धं चेन्निरुद्धं सत् किं फलं जनयिष्यति ॥ इति,

[ मध्यमकशास्त्र– १७·६ ]

तदस्मत्पक्षे नोपपद्यते इति । तस्मादस्माभिरुपवर्णितकल्पनैव न्याय्या इति ॥ २० ॥

अत्रोच्यते – किमिह भवन्तो गन्धर्वनगरप्राकारपतनातिशङ्कितया अतीवोद्विग्नाः तत्परि-रक्षापरिश्रमायासमापन्नाः, ये नाम यूयं कर्मण्यनुपपद्यमाने तत्फलनिमित्तं विप्रवदध्वम् ? यदि हि कर्मणः स्वरूपेणैवोत्पादः स्यात्, तस्य आविपाकमवस्थानान्नित्यत्वं स्यात्, विनाशादुच्छेदः स्यात् । 10 यदा तु कर्म नैवोत्पद्यते स्वभावशून्यत्वात्, तदा तस्य कुतोऽवस्थानं विनाशो वा, यत एषा चिन्ता स्यात् ? अत्राह–

**कर्म नोत्पद्यते कस्मात्**

आचार्य आह–

**निःस्वभावं यतस्ततः ।** 15

यस्मान्निःस्वभावं कर्म तस्मान्नोत्पद्यते । यदि खल्वेवं निःस्वभावत्वात्कर्म नोत्पद्यते, तत् कथमेव-मुक्तं भगवता–

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि । B 324

सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ इति ?

उच्यते– 20

**यस्माच्च तदनुत्पन्नं न तस्माद्विप्रणश्यति ॥ २१ ॥**

इत्येवं भगवतोऽभिप्राय इति । अतो नायमस्माकं बाधको विधिरिति ॥ २१ ॥

अवश्यं चैतदेवं विज्ञेयम् – निःस्वभावं कर्मेति । अन्यथा हि–

**कर्म स्वभावतश्चेत्स्याच्छाश्वतं स्यादसंशयम् ।**
**अकृतं च भवेत्कर्म क्रियते न हि शाश्वतम् ॥ २२ ॥** 25

यदि हि कर्म स्वभावतः स्यात्, मुक्तसंशयं तच्छाश्वतं स्यात्, स्वभावस्यान्यथाभावाभावात् । ततश्च अकृतमेव कर्म भवेत् । कर्तुः[1] स्वतन्त्रस्य क्रियया यदीप्सिततमं तत्कर्म । एतच्च न युज्यते । किं कारणम् ? यस्मात् क्रियते न हि शाश्वतम् । शाश्वतं हि नाम तद् यद्विद्यमानसत्ताकम् । यच्च विद्यमानं तस्य करणानुपपत्तेः तन्नैव कारणमपेक्षत इति ॥ २२ ॥

शुभाशुभे कर्मणि अकृत एव सकलस्य लोकस्य विपाको यस्मात्, ततश्च–

1. T om. from कर्तुः upto न युज्यते.

अकृताभ्यागमभयं स्यात्कर्माकृतकं यदि ।
B 325 अब्रह्मचर्यवासश्च दोषस्तत्र प्रसज्यते ॥ २३ ॥

यदि हि अकृतं कर्म भवेत्, तदा अकृताभ्यागमभयं स्यात् । येनापि हि प्राणातिपातादिकं न कृतम्, तस्यापि अकृतमपि सत् तत् कर्म अस्त्येवेति तेनाप्यस्य संबन्धादकृताभ्यागमभयं स्यात् । अब्रह्मचर्यवासश्च तत्र पक्षे प्राप्नोति । किं कारणम्? परिशुद्धब्रह्मचर्यवासान्न कस्यचिन्निर्वाणेन भवितव्यं स्यात् ॥ २३ ॥

किं चातः?

व्यवहारा विरुध्यन्ते सर्व एव न संशयः ।
पुण्यपापकृतोर्नैव प्रविभागश्च युज्यते ॥ २४ ॥

B 326 ये हि एते कृषिवाणिज्यगोरक्षादयः क्रियारम्भाः फलार्थमारभ्यन्ते, तेषां सर्वेषामकृतानामेव विद्यमानत्वात् प्रारम्भवैयर्थ्यं स्यात् । घटं कुरु, पटं कुरु, इत्येवमादयश्च सर्व एव लौकिकव्यवहारा विरुध्यन्ते, घटादीनां सर्वेषामेव विद्यमानत्वात् । पुण्यकृदयम्, पापकृदयम्, इति च प्रविभागो न प्राप्नोति, उभयोरपि पुण्यपापकृतोः अकृतयोरपि पुण्यपापयोः प्रत्येकं विद्यमानत्वात् ॥ २४ ॥

किं च –

तद्विपक्वविपाकं च पुनरेव विपक्ष्यति ।
कर्म व्यवस्थितं यस्मात्तस्मात्स्वाभाविकं यदि ॥ २५ ॥

विपक्वविपाकस्यापि कर्मणः पुनर्विपाकदानमापद्यते स्वरूपादप्रच्युतत्वात्, अविपक्वविपाकावस्थायामिव । तदेवं यदि कर्म स्वाभाविकमिति मन्यसे, यस्मात् तत्कर्म व्यवस्थितमस्ति, तस्मान्निःसंशयं यथोपवर्णिता दोषाः प्राप्नुवन्ति सस्वभावत्वे । तस्मान्निःस्वभावं कर्म, यतश्च निःस्वभावं कर्म, तस्माच्छाश्वतोच्छेददर्शनप्रसङ्गो नैवास्माकमेवं व्याचक्षमाणानामापद्यते इति ॥ २५ ॥

अत्राह – विद्यत एव स्वभावतः कर्म, तत्कारणसद्भावात् । इह यन्नास्ति, न तस्य कारणमस्ति [कूर्म] रोमकूपप्रावारस्येव । अस्ति च कर्मणः कारणं क्लेशाः । अविद्याप्रत्ययाः संस्काराः, ....उपादानप्रत्ययो भवः, इति वचनात् । तस्माद्विद्यत एव कर्म स्वभावतः इति । उच्यते । अयुक्तमेव । किं कारणम्? यस्मात्–

कर्म क्लेशात्मकं चेदं ते च क्लेशा न तत्त्वतः ।
न चेत्ते तत्त्वतः क्लेशाः कर्म स्यात्तत्त्वतः कथम् ॥ २६ ॥

B 327 इहेदं कर्म क्लेशात्मकं क्लेशहेतुकम् । ते च क्लेशास्तत्त्वतो न सन्ति । वक्ष्यति हि –

शुभाशुभविपर्यासान् संभवन्ति प्रतीत्य ये ।
ते स्वभावान्न विद्यन्ते तस्मात्क्लेशा न तत्त्वतः ॥ इति ।

[मध्यमकशास्त्र – २३:२]

तदेवं तावत् न तत्त्वतः क्लेशाः[1], तद्धेतुकं कर्म तदानीं कुतस्तत्त्वतो भविष्यति? तस्मान्नास्ति कर्म स्वभावतः ॥ २६ ॥

---

1. Mss. क्लेशा यदतत्त्वहेतुकं for क्लेशाः, तद्धेतुकं which is confirmed by T.

अत्राह — विद्यन्त एव क्लेशाः कर्माणि च, तत्कार्यसद्भावात् । इह हि क्लेशकर्मणां देहाख्यं कार्यमुपलभ्यते । यस्य च कार्यमुपलभ्यते तदस्ति, अविद्यमानस्य खपुष्पादेः कार्यादर्शनात् इति । उच्यते । स्युः क्लेशाः कर्माणि च, यदि तत्कार्यं देहा विद्येरन् । न तु विद्यन्ते इत्याह —

**कर्म क्लेशाश्च देहानां प्रत्ययाः समुदाहृताः ।**
**कर्म क्लेशाश्च ते शून्या यदि देहेषु का कथा ॥ २७ ॥** 5

यथा कर्म क्लेशाश्च शून्याः, तथा प्रतिपादितम् । ततश्च कर्म क्लेशा यदा न सन्ति, तदा तत्कार्याणां देहानामसत्त्वे का कथा भविष्यति ? नास्तित्वं तेषां पूर्वमेव सिद्धं यस्मात्, तस्मान्नात्र कश्चिद्वक्तव्यविशेषोऽस्तीत्यभिप्रायः ॥ २७ ॥

अत्राह — विद्यत एव स्वभावतः कर्म, तत्फलभोक्तृसद्भावात् । यन्नास्ति, न तस्य फलोपभोक्तास्ति, तद्यथा गगनचूतफलस्येति । अस्ति च कर्मणः फलोपभोक्ता — 10

**अविद्यानिवृतो जन्तुस्तृष्णासंयोजनश्च सः ।** B 328
**स भोक्ता स च न कर्तुरन्यो न च स एव सः ॥ २८ ॥**

तत्र अविद्या अज्ञानं तमः संमोह इति पर्यायाः । अविद्यया निवृतश्छादितः । पाञ्चगतिकसंसारे पुनः पुनर्जायत इति जन्तुः । सत्त्वः पुद्गलः प्राणीति तस्यैव पर्यायाः । तृष्णा रागः सक्तिर्विसक्तिश्चेति पर्यायाः । संयोजनं बन्धनम् । तृष्णा संयोजनमस्येति तृष्णासंयोजनः तृष्णाबन्धन 15 इत्यर्थः । यथोक्तं सूत्रे — अविद्यानिवृताः सत्त्वास्तृष्णासंयोजना इति । अथ च पुनरिदं पापं कर्म स्वयमेव कृतम्, अस्य स्वयमेव विपाकः प्रत्यनुभवितव्यः इति वचनात् । स च भोक्ता कर्मफलस्य । स च न कर्तुरन्यः, न च स एव सः । तत्त्वान्यत्वावाच्यत्वात् । तस्मात् फलोपभोक्तृसद्भावादस्त्येव कर्मेति ॥ २८ ॥

अत्रोच्यते — स्यात्कर्मणः कर्ता कर्मफलस्य चोपभोक्ता यदि कर्मैव स्यात् । न त्वस्ति । 20 कथं कृत्वा ?

**न प्रत्ययसमुत्पन्नं नाप्रत्ययसमुत्थितम् ।**
**अस्ति यस्मादिदं कर्म तस्मात्कर्तापि नास्त्यतः ॥ २९ ॥**
**कर्म चेन्नास्ति कर्ता च कुतः स्यात्कर्मजं फलम् ।** B 329
**असत्यथ फले भोक्ता कुत एव भविष्यति ॥ ३० ॥** 25

यदि कर्म नाम किंचित्स्यात्, तत् प्रत्ययसमुत्पन्नं वा भवेत्, अप्रत्ययसमुत्पन्नं वा ? यदि तावत् प्रत्ययसमुत्पन्नमिष्यते, तन्न युक्तम्, प्रत्ययपरीक्षायामुक्तदोषत्वात् । अथ अप्रत्ययजनितं निर्हेतुकम्, तदपि — हेतावसति कार्यं च कारणं च [ म० शा० ८.४ ] इत्यादिना कर्मकारकपरीक्षायां विस्तरेण प्रतिपादितम् । यतश्चैवं प्रत्ययसमुत्पन्नं वा अप्रत्ययसमुत्पन्नं वा कर्मेदं न संभवति, तस्मादस्य कर्मणः कर्तापि न संभवति । यदा चैवं कर्म च कर्ता च नास्ति, तदा निर्हेतुकं कर्मजं फलं कुतो भविष्यतीति, असति च फले कुत एव फलभोक्ता भविष्यतीति, सर्वमेतत् स्वभावतोऽसंविद्यमानमेवेति विज्ञेयम् ॥

अत्राह - यदि एवं नैःस्वाभाव्यं भावानां व्यवस्थापितं भवति, यत्तर्हि एतदुक्तं भगवता — स्वयं कृतस्य कर्मणः स्वयमेव विपाकः प्रत्यनुभवितव्यः इति, तदेतत् सर्वममुना न्यायेन अपाकृतं भवति। कर्मफलापवादाच्च प्रधाननास्तिको भवानिति। उच्यते। न वयं नास्तिकाः। अस्तित्व-नास्तित्वद्वयवादनिरासेन तु वयं निर्वाणपुरगामिनमद्वयपथं विद्योतयामः। न च कर्मकर्तृफलादिकं 5 नास्तीति ब्रूम, किं तर्हि निःस्वभावमेतदिति व्यवस्थापयामः। अथ मन्यसे — निःस्वभावानां भावानां व्यापारकरणानुपपत्तेः तदवस्थ एव दोष इति, एतदपि नास्ति। सस्वभावानामेव व्यापारादर्शनात् निःस्वभावानामेव व्यापारदर्शनात्। तथाहि निःस्वभावा एव सन्तो घटादयः लोके स्वकार्यकृत् उपलभ्यन्ते॥ ३०॥

B 330 अपि च। अमुष्माद् दृष्टान्तात् स्पष्टतरादयमर्थोऽवसीयताम् —

10 **यथा निर्मितकं शास्ता निर्मिमीतर्द्धिसंपदा।**
**निर्मितो निर्मिमीतान्यं स च निर्मितकः पुनः॥ ३१॥**

तद्यथा-एकं निर्मितकं शास्ता बुद्धो भगवान् ऋद्धिसंपदा ऋद्धिप्रभावेण निर्मिमीत, स चापि निर्मितकः पुनः योऽयं बुद्धेन भगवता निर्मितः, स पुनर्भूयोऽन्यमपरं निर्मितकं निर्मिमीत। तत्र य एष निर्मितकः अपरस्य निर्मितकस्य निर्माता, स शून्यः निःस्वभावः, तथागतस्वभावरहित 15 इत्यर्थः। यश्चायमपरो निर्मितकः, यो निर्मितकेन[1] निर्मितः, असावपि शून्यो निस्वभावः, तथागत-स्वभावरहित इत्यर्थः। यथात्र निःस्वभावानां निस्वभावकार्यकृत्त्वं कर्मकर्तृव्यपदेशश्च भवति,

**तथा निर्मितकाकारः कर्ता कर्म च तत्कृतम्।**
**तद्यथा निर्मितेनान्यो निर्मितो निर्मितस्तथा॥ ३२॥**

B 331 यो ह्यत्र कर्मणः कर्ता स निर्मितकाकारः स्वभावशून्यः। तेन च स्वभावशून्येन 20 स्वतन्त्रकर्त्रा यत् किंचित् कर्म क्रियते, तदपि स्वभावशून्यम्। तद्यथा निर्मितकेन अन्यो निर्मितको निर्मितः तथा वेदितव्यम्। यथोक्तमागमे—

एकस्य भाषमाणस्य सर्वे भाषन्ति निर्मिताः।
एकस्य तूष्णींभूतस्य सर्वे तूष्णींभवन्ति हि॥

[दिव्यावदान - १२.२०]

तस्मादद्वयवादिनां माध्यमिकानां कुतो मिथ्यादर्शनम्? उक्तं च आर्यसमाधिराजे—

25 यद सुगतु कथां कथेति नाथो
वीथिगतान् मनुजान् कृपायमानः।
निर्मित जिनु तत्र निर्मिनित्व
विचरति तेषु प्रणीतबुद्धधर्मान्॥
B 332 प्राणिशतसहस्र तं श्रुणित्वा
प्रणिदधयिंसु[2] वराग्रबुद्धज्ञाने।

१. Mss. निर्माणेन for निर्मितकेन which reading is confirmed by T. २. T om. स्वतन्त्र॰
२. Mss. प्रणिदहि चित्त for प्रणिदधयिंसु which is conjectural.

कद वय लभि ज्ञानमेवरूपं
आशय ज्ञात्व जिनोऽस्य व्याकरोति ॥
[ समाधिराजसूत्र - १०.३९, ४१ ]

रश्मि शतसहस्र अप्रमेयान्
अवसिरि पादतलेहि धर्मराजाँ ।
सर्वि निरय शीतला भवन्ति 5
दुखमपनीय सुखं च वेदयन्ति ॥
धर्म दशंबलप्रभाषितेऽत्र
मरुमनुजान विशुद्ध भोति चक्षुः ।
[ समाधिराजसूत्र - १०.८७-८८ ]

इत्यादि । 10 B 333

केचि स्पृह जनेन्ति तत्र काले
परम अचिन्त्य तेहि लब्धलाभा ।
येहि जिनु निमन्त्रितो नरेन्द्रो
न च परियन्त तेषु दक्षिणाया ॥
[ समाधिराजसूत्र - १०.४२ ]

इत्यादि विस्तरः ॥

तथा आर्यविमलकीर्तिनिर्देशे - 15

तन्निर्मितबोधिसत्त्वेन गन्धसुगन्धायां लोकधातौ समन्तभद्रतथागतोपभुक्तशेषं भोजनमानीतं नानाव्यञ्जनखाद्यादिसंप्रयुक्तं पृथक्पृथग्विविधरसमेकभोजनेन सर्वं तच्छ्रावकबोधिसत्त्वसंघराजराजामात्यपुरोहितान्तःपुरदौवारिकसार्थवाहादिजनपदं संतर्प्य प्रीत्याकारं नाम महासमाधिं लम्भयामास । इति ॥

विनये च पठ्यते - 20 B 334

पापभिक्षुरप्रतिरूपको भगवता भिक्षुरभिनिर्मितः । तद्वचनेन शीलवतोऽपि विशुद्धिप्रतिज्ञासंवासः प्रज्ञप्तः इति ॥ ३२ ॥

न च केवलं निर्माणदृष्टान्तेन नैःस्वभाव्यदर्शनमुपपद्यमानरूपम्, अपि च अमीभ्यो दृष्टान्तेभ्यः स्फुटं नैःस्वभाव्यं भावानां प्रतीयतामिति प्रतिपादयन्नाह-

**क्लेशाः कर्माणि देहाश्च कर्तारश्च फलानि च । 25**
**गन्धर्वनगराकारा मरीचिस्वप्नसंनिभाः ॥ ३३ ॥**

तत्र क्लेशा रागादयः, क्लिश्नन्ति सत्त्वचित्तसंतानानीति कृत्वा । कर्माणि कुशलाकुशलानेञ्ज्यानि । देहाः शरीराणि । कर्तारः आत्मानः । फलानि विपाकाधिपत्यनिष्यन्दादीनि । त एते क्लेशादयोऽर्थाः गन्धर्वनगरादिवन्निःस्वभावाः वेदितव्याः । तस्मान्माध्यमिकानामेव भावानां स्वभावानभ्युपगमाच्छाश्वतोच्छेददर्शनद्वयप्रसङ्गो नास्तीति विज्ञेयम् ॥ B 335

अत्र च कर्मफलसंबन्धविचारे कुचोद्यशेषाक्षेपपरिहारो मध्यमकावताराद्विस्तरेणावसेयः ॥

१. T om. the citation. २. T om. आदीनि.

B 336 यथोक्तमार्यरत्नकूटसूत्रे–

पञ्च च भिक्षुशतानि ध्यानलाभीनि उत्थायासनेभ्यः प्रक्रान्तानि इमां गम्भीरां धर्मदेशना-

B 337 मनवबुध्यमानानि अनवतरन्ति अनवगाहमानानि अनधिमुच्यमानानि । भगवानाह – तथा ह्येते काश्यप भिक्षवः आभिमानिकाः इमामनास्रवां शीलविशुद्धिं नावतरन्ति नावगाहन्ते नाधिमुच्यन्ते

5 उत्त्रस्यन्ति संत्रस्यन्ति संत्रासमापद्यन्ते । गम्भीरः काश्यप गाथाभिनिर्हारो गम्भीरा च बुद्धानां भगवतां बोधिः । सा न शक्या अनवरोपितकुशलमूलैः सत्त्वैः पापमित्रपरिगृहीतैरनधिमुक्तिबहुलैरधि-मोक्तुम् । अपि च । एतानि काश्यप पञ्च भिक्षुशतानि काश्यपस्य तथागतस्य प्रवचनेऽन्यतीर्थिकश्रावका अभूवन् । तैरेव तस्य काश्यपस्य तथागतस्यान्तिकादुपालम्भाभिप्रायैरेषा धर्मदेशना श्रुता । श्रुत्वा च एकचित्तप्रसादो लब्धः । एवं तैर्वाग् भाषिता – आश्चर्यं यावत् मधुरप्रियभाणी काश्यपस्तथागतोऽर्हन् सम्यक्संबुद्ध इति । त एतेनैकचित्तप्रसादेन प्रतिलब्धेन कालगताः त्रायस्त्रिंशेषु देवेषूपपन्नाः । ते

10 ततश्च्युताः समानाः इहोपपन्नाः । तेनैव च हेतुना इह मम शासने प्रव्रजिताः । तान्येतानि काश्यप पञ्च भिक्षुशतानि दृष्टिप्रस्कन्धानि इमां गम्भीरां धर्मदेशनां नावतरन्ति नावगाहन्ते नाधिमुच्यन्ते उत्त्रस्यन्ति संत्रस्यन्ति संत्रासमापद्यन्ते । कृतं पुनरेषामनया धर्मदेशनया परिकर्म । न भूयो

B 338 दुर्गतिविनिपातं गमिष्यन्ति । एभिरेव च स्कन्धैः परिनिर्वास्यन्ति ॥

अथ खलु भगवानायुष्मन्तं सुभूतिमामन्त्रयते स्म – गच्छ सुभूते, एतान् भिक्षून् संज्ञपय ।

15 सुभूतिराह – भगवत एव तावदेते भाषितं विलोमयन्ति, कः पुनर्वादो मम ? अथ भगवांस्तस्यां वेलायां येन मार्गेणैते भिक्षवो गच्छन्ति स्म, तस्मिन् मार्गे द्वौ भिक्षू निर्मिमीते स्म । अथ तानि पञ्च भिक्षुशतानि येन मार्गेण तौ द्वौ भिक्षू निर्मितकौ तेनोपसंक्रामन्ति स्म । उपसंक्रम्य एतदवोचन् – कुत्र आयुष्मन्तौ गमिष्यथः ? ताववोचताम् – गमिष्याव आवामरण्यायतनेषु । तत्र ध्यानसुखसंस्पर्श-विहारैर्विहरिष्यावः ॥ .... तान्यपि पञ्च भिक्षुशतान्येतदवोचन् – वयमप्यायुष्मन्तौ भगवतो

20 धर्मदेशनां नावतरामो नावगाहामहे नाधिमुच्यामहे उत्त्रस्यामः संत्रस्यामः संत्रासमापद्यामहे । तेन वयमरण्यायतनेषु ध्यानसुखसंस्पर्शविहारैर्विहरिष्याम इति । निर्मितकाववोचताम् – तेन हि आयुष्मन्तः संगास्यामो न विवदिष्यामः । अविवादपरमो हि श्रमणधर्मः । ....यदिदमायुष्मन्त उच्यते परिनिर्वाणमिति, कतमः स धर्मो यः परिनिर्वास्यति ? कश्चित्पुनरत्र कायः आत्मा वा सत्त्वो वा जीवो वा जन्तुर्वा पोषो वा पुरुषो वा पुद्गलो वा मनुजो वा मानवो वा, यः परिनिर्वास्यति ? कस्य

25 वा क्षयात् परिनिर्वाणम् ? तेऽवोचन्....रागद्वेषमोहक्षयात् परिनिर्वाणम् ।....निर्मितकाववोचताम् – किं पुनरायुष्मतां संविद्यन्ते रागद्वेषमोहा यान् क्षयिष्यथ ? तेऽवोचन् – न ते अध्यात्मं न बहिर्धा नोभयमन्तरेणोपलभ्यन्ते, नापि ते अपरिकल्पिता उत्पद्यन्ते । ........ ॥[१]

B 339 इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ

कर्मफलपरीक्षा नाम सप्तदशमं प्रकरणम् ॥

---

१. The Mss. give here an amplified text of an introductory matter cited already in chapter I. We have, following P, given only those portions which are new. २. The text here as also in Chapter I are almost identical with slight variations in reading individual words like अनुपलब्धितः for अनुपलम्भात्, तीर्णः for उत्तीर्णः; विमुक्तितः for विनिर्मुक्तितः.

## आत्मपरीक्षा अष्टादशमं प्रकरणम् ।

B 340

अत्राह – यदि क्लेशाः कर्माणि च देहाश्च कर्तारश्च फलानि च सर्वमेतन्न तत्त्वम्, केवलं तु गन्धर्वनगरादिवदतत्त्वमेव सत् तत्त्वाकारेण प्रतिभासते बालानाम्, किं पुनरत्र तत्त्वम्, कथं वा तत्त्वस्यावतारः इति? उच्यते । आध्यात्मिकबाह्याशेषवस्त्वनुपलम्भेन अध्यात्मं बहिश्च यः सर्वथा अहंकारममकारपरिक्षयः, इदमत्र तत्त्वम् । तत्त्वावतारः पुनः – 5

सत्कायदृष्टिप्रभवानशेषान्
क्लेशांश्च दोषांश्च धिया विपश्यन् ।
आत्मानमस्या विषयं च बुद्ध्वा
योगी करोत्यात्मनिषेधमेव ॥

[ मध्यमकावतार – ६.१२० ]

इत्यादिना मध्यमकावताराद्विस्तरेणावसेयः । कायदृष्टिमूलकमेव संसारमनुपश्यन् आत्मानुपलम्भाच्च सत्कायदृष्टिप्रहाणं तत्प्रहाणाच्च सर्वक्लेशव्यावृत्तिं समनुपश्यन् प्रथमतरमात्मानमेवोपपरीक्षते, कोऽयमात्मा नामेति, योऽहंकारविषयः । स चायमहंकारस्य विषयः परिकल्प्यमानः स्कन्धस्वभावो वा भवेत्स्कन्धव्यतिरिक्तो वा? आधाराधेयतद्वत्पक्षाणामपि एकत्वान्यत्वपक्षे एव अन्तर्भावात् संक्षेपेणैव च विवक्षितत्वादेकत्वान्यत्वपक्षद्वयप्रतिषेधेनैव आत्मनिषेधमारब्धुकाम आचार्य आह – 10 15

B 341

**आत्मा स्कन्धा यदि भवेदुदयव्ययभाग्भवेत् ।**
**स्कन्धेभ्योऽन्यो यदि भवेद्भवेदस्कन्धलक्षणः ॥ १ ॥**

किमर्थं पुनरन्यत्र तथागतपरीक्षायामग्नीन्धनपरीक्षायां च पञ्च पञ्च पक्षा उपन्यस्ताः, इह तु पुनः पक्षद्वयमेवेति? उच्यते । येनैव तत्र प्रकरणद्वये पञ्च पञ्च पक्षा निर्दिष्टाः, अत एव अन्यत्र निर्दिष्टत्वान्न पुनरिह निर्दिश्यन्ते । संक्षेपेण तु पक्षद्वयमुपन्यस्यते इति ॥ 20

तत्र यदि स्कन्धा आत्मेति परिकल्प्यते, तदा उदयव्ययभाग् उत्पादी च विनाशी च आत्मा प्राप्नोति, स्कन्धानामुदयव्ययभाक्त्वात् । न चैवमिष्यते, आत्मानेक[ त्व ]दोषप्रसङ्गात् वक्ष्यति हि –

नाप्यभूत्वा समुत्पन्नो दोषो ह्यत्र प्रसज्यते ।
कृतको वा भवेदात्मा संभूतो वाप्यहेतुकः ॥ इति । 25

[ मध्यमकशास्त्र – २७.१२ ]

तथा–

B 342

न चोपादानमेवात्मा व्येति तत्समुदेति च ।
कथं हि नामोपादानमुपादाता भविष्यति ॥ इति ।

[ मध्यमकशास्त्र – २७.६ ]

किं च–

स्कन्धा आत्मा चेदतस्तद्बहुत्वात्
आत्मानः[1] स्युस्तेऽपि भूयांस एव ।
द्रव्यं चात्मा प्राप्नुयात्तादृशश्च
5 द्रव्ये वृत्तौ वैपरीत्यं च न स्यात् ॥
आत्मोच्छेदो निर्वृतौ स्यादवश्यं
नाशोत्पादौ निर्वृतेः प्राक् क्षणेषु ।
कर्तुर्नाशात्तत्फलाभाव एव
भुञ्जीतान्येनार्जितं कर्म चान्यः ॥

[मध्यमकावतार–६·१२७–१२८]

10 इत्यादिना मध्यमकावतारे विस्तरेण विहितविचारादपि पक्षो बोद्धव्य इति नेह पुनर्विस्तरप्रपञ्च आरभ्यते ॥

B 343 एवं तावत् स्कन्धा आत्मा न भवति । स्कन्धव्यतिरिक्तोऽपि न युज्यते । यदि हि स्कन्धेभ्योऽन्य आत्मा भवेत्, अस्कन्धलक्षणो भवेत् । यथा हि गोरन्योऽश्वः न गोलक्षणो भवति, एवमात्मापि स्कन्धव्यतिरिक्तः परिकल्प्यमानः अस्कन्धलक्षणो भवेत् । तत्र स्कन्धाः 15 संस्कृतत्वाद् हेतुप्रत्ययसंभूता[2] उत्पादस्थितिभङ्गलक्षणाः । तत्र अस्कन्धलक्षण आत्मा भवन् भवन्मतेन[3] उत्पादस्थितिभङ्गलक्षणायुक्तः[4] स्यात् । यश्चैवं भवति, सः अविद्यमानत्वादसंस्कृतत्वाद्वा खपुष्पवन्निर्वाणवद्वा नैव आत्मव्यपदेशं प्रतिलभते, नाप्यहंकारविषयत्वेन युज्यते, इति स्कन्धव्यतिरिक्तोऽप्यात्मा न युज्यते ॥

अथवा । अयमन्योऽर्थः-यदि आत्मा स्कन्धव्यतिरिक्तः स्यात्, सः अस्कन्धलक्षणः 20 स्यात् । रूपणानुभवनिमित्तोद्ग्रहणाभिसंस्करणविषयप्रतिविज्ञप्तिलक्षणाः पञ्च स्कन्धाः । आत्मा च B 344 रूपादिव विज्ञानं स्कन्धेभ्यो व्यतिरिक्त इष्यमाणः पृथग्लक्षणसिद्धः स्यात्, पृथग्लक्षणसिद्धश्च गृह्येत रूपादिव चित्तम् । न च गृह्यते । तस्मात् स्कन्धव्यतिरिक्तोऽपि[5] नास्ति ॥

ननु च तीर्थिकाः स्कन्धेभ्यो व्यतिरिक्तमात्मानं प्रतिपन्ना भिन्नलक्षणमाचक्षते, तस्मात्तेषामबाधक एवायं विधिरिति । यथा च तीर्थिका आत्मनो भिन्नलक्षणमाचक्षते तथोक्तं मध्यमकावतारे—

25 आत्मा तीर्थ्यैः कल्प्यते नित्यरूपोऽ–
कर्ता भोक्ता निर्गुणो निष्क्रियश्च ।
कंचित्कंचिद्भेदमाश्रित्य तस्य
भेदं याता प्रक्रिया तीर्थिकानाम् ॥

[मध्यमकावतार–६.१४२]

---

१. This line and the two following are missing in Paris Ms. as also in Cal.
२. T om. हेतुप्रत्ययसंभूता. ३. T om. भवन्मतेन. ४. T om. लक्षण. ५. Mss. रूपादिविज्ञानस्कन्धेभ्यः व्यतिरिक्तः for °स्कन्धव्यतिरिक्तः which reading is based on T.

इत्यनेन । उच्यते । सत्यं ब्रुवन्ति तीर्थिकाः स्कन्धव्यतिरिक्तस्य लक्षणम्, न पुनस्ते स्वरूपत आत्मानमुपलभ्य तस्य लक्षणमाचक्षते, किं तर्हि यथावदुपादायप्रज्ञप्त्यनवगमेन नाममात्रकमेवात्मानं त्रासादप्रतिपद्यमानाः संवृतिसत्यादपि परिभ्रष्टा मिथ्याकल्पनयैव केवलमनुमानाभासमात्रविप्रलब्धाः सन्तः मोहात् परिकल्पयन्ति आत्मानम्, तस्य च लक्षणमाचक्षते । तेषां च कर्मकारकपरीक्षादिषु आत्मोपादानयोः परस्परापेक्षिकीं सिद्धिं ब्रुवता संवृत्यापि प्रतिषेधो विहित एव । उक्तं च—　B 345　5

यथादर्शमुपादाय स्वमुखप्रतिबिम्बकम् ।
दृश्यते नाम तच्चैव न किंचिदपि तत्त्वतः ॥

अहंकारस्तथा स्कन्धानुपादायोपलभ्यते ।
न च कश्चित्स तत्त्वेन स्वमुखप्रतिबिम्बवत् ॥

यथादर्शमनादाय[1] स्वमुखप्रतिबिम्बकम् ।　10
न दृश्यते तथा स्कन्धाननादायाहमित्यपि ॥

एवंविधार्थश्रवणाद्धर्मचक्षुरवाप्तवान् ।
आर्यानन्दः स्वयं चैव भिक्षुभ्योऽभीक्ष्णमुक्तवान् ॥ इति ॥

अतो न पुनस्तत्प्रतिपादनार्थं यत्न आरभ्यते । उपादाय प्रज्ञप्यमान एव अविद्याविपर्यासानुगतानामात्माभिनिवेशास्पदभूतो मुमुक्षुभिर्विचार्यते, यस्येदं स्कन्धपञ्चकमुपादानत्वेन प्रतिभासते　15 किमसौ स्कन्धलक्षणः उत अस्कन्धलक्षणः इति । सर्वथा च विचारयन्तो मुमुक्षवो नैनमुपलभन्ते भावस्वभावतः । तदा एषाम्—

**आत्मन्यसति चात्मीयं कुत एव भविष्यति ।**

आत्मानुपलम्भादात्मप्रज्ञप्त्युपादानं स्कन्धपञ्चकमात्मीयमिति सुतरां नोपलभन्ते । यथैव　B 346 हि दग्धे रथे तदङ्गान्यपि दग्धत्वान्नोपलभ्यन्ते, एवं योगिनो यदैव आत्मनैरात्म्यं प्रतिपद्यन्ते, तदैव　20 आत्मीयस्कन्धवस्तुनैरात्म्यमपि नियतं प्रतिपद्यन्ते । यथोक्तं रत्नावल्याम्—

अहंकारोद्भवाः स्कन्धाः सोऽहंकारोऽनृतोऽर्थतः ।
बीजं यस्यानृतं तस्य प्ररोहः सत्यतः कुतः ॥

स्कन्धानसत्यान् दृष्ट्वैवमहंकारः प्रहीयते ।
अहंकारप्रहाणाच्च न पुनः स्कन्धसंभवः ॥ इति ॥　25

[ रत्नावली ]

यथैव हि ग्रीष्मे मध्याह्नकालावसानमासादितस्य विघननभोमध्यदेशमाचिक्रंसो-[2] रीषत्परिभ्रम्यमानपटुतरहुतभुग्वितत्स्फुलिङ्गानिव विरूक्षतरमहीमण्डलोत्तापनपरान् प्रदीप्तकिरणस्य किरणान् प्रतीत्य विरूक्षतरमवनिदेशं चासाद्य विपरीतं च दर्शनमपेक्ष्य सलिलाकारा मरीचय उपलभ्यमाना विदूरदेशावस्थितानां जन्मवतामतिप्रसन्नाभिनीलजलाकारं[3] प्रत्ययमादधति

1. T om. this stanza. 2 Mss. विघने नभो° for विघननभो°. 3 Mss. अतिविप्रसम° for अतिप्रसन्न°.

B 347 न तु तत्समीपगतानाम्, एवमिहापि यथावस्थितात्मात्मीयपदार्थतत्त्वदर्शनविदूरदेशान्तरस्थितानां संसाराध्वनि वर्तमानानामविद्याविपर्यासानुगमान्मृषार्थ एव स्कन्धसमारोपः सत्यतः प्रतिभासमानः पदार्थतत्त्वदर्शनसमीपस्थानां न प्रतिभासते । यथोक्तमाचार्यपादैः –

दूरादालोकितं रूपमासन्नैर्दृश्यते स्फुटम् ।
5 मरीचिर्यदि वारि स्यादासन्नैः किं न गृह्यते ॥

दूरीभूतैर्यथाभूतो लोकोऽयं दृश्यते यथा ।
न दृश्यते तदासन्नैरानिमित्तो मरीचिवत् ॥

मरीचिस्तोयसदृशी यथा नाम्भो न चार्थतः ।
स्कन्धास्तथात्मसदृशा नात्मानो नापि तेऽर्थतः ॥ इति ॥

10 अत एव च आत्मात्मीयानुपलम्भात्परमार्थदर्शनसमीपस्थो योगी नियतं भवति –

**निर्ममो निरहंकारः शमादात्मात्मनीनयोः ॥ २ ॥**

B 348 आत्मनि हितमात्मनीनम्, स्कन्धपञ्चकम्, आत्मीयमित्यर्थः । आत्मनोऽहंकारविषयस्य आत्मनीनस्य च स्कन्धादेर्वस्तुनः ममकारविषयस्य शमादनुत्पादादनुपलम्भान्निर्ममो निरहंकारश्च जायते योगी ॥ २ ॥

ननु च योऽसावेवं निर्ममो निरहंकारश्च योगी भवति, स तावदस्ति । सति च तस्मिन् 15 सिद्ध आत्मा स्कन्धाश्चेति । नैतदेवम् । यस्मात्–

**निर्ममो निरहंकारो यश्च सोऽपि न विद्यते ।**
**निर्ममं निरहंकारं यः पश्यति न पश्यति ॥ ३ ॥**

आत्मनि स्कन्धेषु च सर्वथानुपलभ्यमानस्वरूपेषु कुतस्तद्व्यतिरिक्तोऽपरपदार्थो भविष्यति योऽसौ निर्ममो निरहंकारश्चेति । यस्तु एवमसंविद्यमानस्वरूपं निर्ममं निरहंकारं च पश्यति, स 20 तत्त्वं न पश्यतीति विज्ञेयम् । यथोक्तं भगवता –

शून्यमाध्यात्मिकं पश्य पश्य शून्यं बहिर्गतम् ।
न विद्यते सोऽपि कश्चिद्यो भावयति शून्यताम् ॥

तथा–

25 योऽपि च चिन्तयि शून्यक धर्मान्
सोऽपि कुमार्गपपन्नकु बालः ।
अक्षर कीर्तित शून्यक धर्माः
ते च अनक्षर अक्षर उक्ताः ॥

---

१. T om. आचार्यपादैः. २. T न तथा तदासन्नैः for न दृश्यते तदासन्नैः.

शान्त पशान्त य चिन्तयि धर्मान्
सोऽपि च चित्तु न जातु न भूतः ।
चित्तवितर्किण सर्वि पपञ्चाः
तस्य अचिन्तिय बुध्यथ धर्मान् ॥ इति ।

B 349

5

तथा—

स्कन्ध सभावतु शून्य विविक्त
बोधि सभावतु शून्य विविक्त ।
योऽपि चरेत्स पि शून्यसभावो
ज्ञानवतो न तु बालजनस्य ॥

10

इति ॥ ३ ॥

तदेवम्—

**ममेत्यहमिति क्षीणे वहिर्धाध्यात्ममेव च ।**
**निरुध्यत उपादानं तत्क्षयाज्जन्मनः क्षयः ॥ ४ ॥**

सत्कायदृष्टिमूलकाः सत्कायदृष्टिसमुदयाः सत्कायदृष्टिहेतुकाः सर्वक्लेशाः सूत्रे उक्ताः । सा च सत्कायदृष्टिरात्मात्मीयानुपलम्भात्प्रहीयते, तत्प्रहाणाच्च कामदृष्टिशीलव्रतात्मवादोपादानचतुष्टयं प्रहीयते, उपादानक्षयाच्च जन्मनः पुनर्भवलक्षणस्य क्षयो भवति ॥ ४ ॥ 15

यतश्च अयं जन्मनिवृत्तिक्रमः एवं व्यवस्थापितः, तस्मात्—

**कर्मक्लेशक्षयान्मोक्षः**

B 350

इति स्थितम् । उपादाने हि क्षीणे तत्प्रत्ययो भवो न भवति । भवे निरुद्धे कुतो जाति-जरामरणादिकस्य संभव इति । एवं कर्मक्लेशक्षयान्मोक्षो भवतीति स्थितम् । 20

कर्मक्लेशानां तर्हि कस्य क्षयात्परिक्षय इति वक्तव्यम् । उच्यते—

**कर्मक्लेशा विकल्पतः ।**
**ते प्रपञ्चात्प्रपञ्चस्तु शून्यतायां निरुध्यते ॥ ५ ॥**

अयोनिशो हि रूपादिकं विकल्पयतो बालपृथग्जनस्य क्लेशा उपजायते रागादिकः 25 वक्ष्यति हि—

संकल्पप्रभवो रागो द्वेषो मोहश्च कथ्यते ।
शुभाशुभविपर्यासान् संभवन्ति प्रतीत्य हि ॥
[मध्यमकशास्त्र – २३·१]

उक्तं च सूत्रे—

काम जानामि ते मूलं संकल्पात्किल जायसे ।[1]
न त्वां संकल्पयिष्यामि ततो मे न भविष्यसि ॥ इति ॥

---

1. Mss. स धातु for सभावतु which is confirmed by T.

एवं तावत् कर्मक्लेशा विकल्पतः प्रवर्तन्ते। ते च विकल्पाः अनादिमत्संसाराभ्यस्ताद् ज्ञानज्ञेयवाच्यवाचककर्तृकर्मकरणक्रियाघटपटमुकुटरथरूपवेदनास्त्रीपुरुषलाभालाभसुखदुःखयशोऽयशोनिन्दाप्रशंसादिलक्षणाद्विचित्रात्प्रपञ्चादुपजायते । स चायं लौकिकः प्रपञ्चो निरवशेषः शून्यतायां सर्वस्वभावशून्यतादर्शने सति निरुध्यते। कथं कृत्वा ? यस्मात्सति हि वस्तुन
5 उपलम्भे स्याद् यथोदितप्रपञ्चजालम् । न हि अनुपलभ्य वन्ध्यादुहितरं रूपलावण्ययौवनवतीं तद्विषयं प्रपञ्चमवतारयन्ति रागिणः। न च अनवतार्य प्रपञ्चं तद्विषयमयोनिशो विकल्पमवतारयन्ति । न च अनवतार्य कल्पनाजालम् अहंममेत्यभिनिवेशात् सत्कायदृष्टिमूलकान् क्लेशगणानुत्पादयन्ति । न च अनुत्पाद्य सत्कायदृष्ट्यात्मकान् क्लेशगणान् कर्माणि शुभाशुभानिञ्ज्यानि कुर्वन्ति। न च अकुर्वाणाः कर्माणि जातिजरामरणशोकपरिदेवदुःखदौर्मनस्य-
10 [ उपायासादिरूपं ] एकजालीभूतं संसारकान्तारमनुभवन्ति ।[1] एवं योगिनोऽपि शून्यतादर्शनावस्था निरवशेषस्कन्धधात्वायतनानि स्वरूपतो नोपलभन्ते। न च अनुपलभमाना वस्तुस्वरूपं तद्विषयं प्रपञ्चमवतारयन्ति। न च अनवतार्य तद्विषयं प्रपञ्चं विकल्पमवतारयन्ति। न च अनवतार्य विकल्पम् अहंममेत्यभिनिवेशात् सत्कायदृष्टिमूलकं क्लेशगणमुत्पादयन्ति । न च अनुत्पाद्य सत्कायदृष्ट्यादिकं क्लेशगणं कर्माणि कुर्वन्ति। न च अकुर्वाणाः जातिजरामरणाख्यं
15 संसारमनुभवन्ति । तदेवम् अशेषप्रपञ्चोपशमशिवलक्षणां शून्यतामागम्य यस्मादशेषकल्पनाजालप्रपञ्चविगमो भवति, प्रपञ्चविगमाच्च विकल्पनिवृत्तिः, विकल्पनिवृत्त्या च अशेषकर्मक्लेशनिवृत्तिः, कर्मक्लेशनिवृत्त्या च जन्मनिवृत्तिः, तस्मात् शून्यतैव सर्वप्रपञ्चनिवृत्तिलक्षणत्वान्निर्वाणमित्युच्यते । यथोक्तं शतके –

धर्मं समासतोऽहिंसां वर्णयन्ति तथागताः ।
20 शून्यतामेव निर्वाणं केवलं तदिहोभयम् ॥ इति ॥

[ चतुःशतक – १२·२३ ]

आचार्यभावविवेकस्तु श्रावकप्रत्येकबुद्धानां यथोदितशून्यताधिगममप्रतिपद्यमानः एवं वर्णयति – अपरोत्पन्नप्रतिक्षणविनश्वरसंस्कारकलापमात्रमनात्मानात्मीयमवलोकयतः आर्यश्रावकस्यापि आत्मात्मीयवस्त्वभावाद् धर्ममात्रमिदं जायते म्रियते चेति दर्शनमुत्पद्यते । अहंकारविषयो
25 ह्यात्मा, [ तदभावात्तस्याप्यभावः ],[2] तदभावादेव न क्वचिदाध्यात्मिकं बाह्यं वा वस्तु अस्तीति ममकारानुत्पत्तेः निर्ममो निरहंकारोऽहमिति न स्वरूपविनिश्चितिरुपजायते, अन्यत्र व्यवहारसंकेतात्। प्रागेव अजातसर्वसंस्कारदर्शिनां निर्विकल्पप्रज्ञाचारविहारिणां महाबोधिसत्त्वानामिति । अत आह –

निर्ममो निरहंकारो यश्च सोऽपि न विद्यते ॥ इति ॥

---

१. T haplographically seems to om. from न च down to क्लेशगणं कुर्वन्ति a few lines below. २. The portion in brackets supplied after T.

तदयमाचार्यो यथैवंविधे विषये नाचार्यपादमतानुवर्ती तथा प्रतिपादितं मध्यमकावतारे—

दूरंगमायां तु धियाधिकः [मध्यमकावतार-१.८] B 353

इत्यत्रेति न पुनस्तद्दूषणे यत्न आस्थीयते। अत एवोक्तं भगवता आर्याष्टसाहस्रिकायां भगवत्याम्—

श्रावकबोधिमभिसंबोद्धुकामेन सुभूते अस्यामेव प्रज्ञापारमितायां शिक्षितव्यम्। प्रत्येक- 5 बोधिमभिसंबोद्धुकामेन सुभूते अस्यामेव प्रज्ञापारमितायां शिक्षितव्यम्। अनुत्तरां सम्यक्संबोधिमभि-संबोद्धुकामेन सुभूते बोधिसत्त्वेन महासत्त्वेन अस्यामेव प्रज्ञापारमितायां शिक्षितव्यमित्यादि॥

[अष्टसाहस्रिका-३७९]

आह[1] च—

यो इच्छती सुगतश्रावकु हं भवेयं
प्रत्येकबुद्ध भविजा तथ धर्मराजो। 10
इमु क्षान्ति नागत्य न शक्यति पापुणोतुं B 354
यथ आरपारगमनीयं अतीरदर्शी॥

इति॥५॥

अत्राह—यद्येवमाध्यात्मिकबाह्यवस्त्वनुपलम्भादध्यात्मं बहिश्च अहंममेतिकल्पनाजालाना-मनुत्पादस्तत्त्वमिति व्यवस्थापितम्, यत्तर्हि एतदुक्तं भगवता— 15

आत्मा हि आत्मनो नाथः को नु नाथः परो भवेत्।
आत्मना हि सुदान्तेन स्वर्गं प्राप्नोति पण्डितः॥
आत्मा हि आत्मनो नाथः को नु नाथः परो भवेत्।
आत्मा हि आत्मनः साक्षी कृतस्यापकृतस्य च॥

[=धम्मपद,-१६०-६१]

तथा आर्यसमाधिराजे— 20

कृष्णशुभं च न नश्यति कर्म
आत्मन कृत्व च वेदयितव्यम्।
नो पि च संक्रम कर्मफलस्य
नो च अहेतुक प्रत्यनुभोति॥ B 355

[समाधिराज-३७.३५]

इति विस्तरः। तत्कथं न विरुध्यत इति? उच्यते। इदमपि किं नोक्तं भगवता— 25

नास्तीह सत्त्व आत्मा वा धर्मास्त्वेते सहेतुकाः। इति?

तथा हि—रूपं नात्मा रूपवान्नापि चात्मा रूपे नात्मा नात्मनि रूपं....। एवं यावत् विज्ञानं नात्मा, विज्ञानवान्नात्मा विज्ञाने नात्मा नात्मनि विज्ञानम् इति। तथा-अनात्मानः सर्वधर्मा इति। तत्कथमिदानीमनेनागमेन पूर्वकस्यागमस्य विरोधो न स्यात्? तस्माद्देशनाभिप्रायो भगवतोऽन्वेष्यः।

---

१ T अपि च for आह च.

सामान्येन तु भगवद्भिर्बुद्धैः प्रवचने नेय[1]नीतार्थविस्तरप्रभेदेऽशेषजगद्विनेयबुद्धिपद्माकरविबोधनपरैरादित्यकल्पैरनस्तंगतैर्महाकरुणोपायविज्ञानगभस्तिविस्तरैः–

**आत्मेत्यपि प्रज्ञपितमनात्मेत्यपि देशितम् ।**
**बुद्धैर्नात्मा न चानात्मा कश्चिदित्यपि देशितम् ॥ ६ ॥**

B 356 5 अत्र चायमभिप्रायः– इह ये [[2]आत्माभावविपर्यास ]कुदर्शनघनतिमिरपटलावच्छादिताशेषबुद्धिनयनतया लौकिकावदातदर्शनविषयानतिक्रान्तमपि भावजातमपश्यन्तो व्यवहारसत्यावस्थिता एव सन्तः क्षितिसलिलज्वलनपवनाभिधानतत्त्वमात्रानु[3]वर्णनपरा मूलौदनोदक[4]किण्वादिद्रव्यविशेषपरिपाकमात्रप्रत्ययोत्पन्नमदमूर्च्छादिसामर्थ्यविशेषानुगतमद्यपानोपलम्भवत् कललादिमहाभूतपरिपाकमात्रसंभूता एव बुद्धीरनुवर्णयन्तः पूर्वान्तापरान्तापवादप्रवृत्ताः सन्तः परलोकमात्मानं

10 चापवदन्ते– नास्त्ययं लोकः, नास्ति परलोकः, नास्ति सुकृतदुष्कृतानां कर्मणां फलविपाकः, नास्ति सत्त्व उपपादुकः, इत्यादिना । तदपवादाच्च स्वर्गापवर्गविशिष्टेष्टफलविशेषाक्षेपपराङ्मुखाः सततसमितमकुशलकर्माभिसंस्करणप्रवृत्ता नरकादिमहाप्रपातपतनाभिमुखाः । तेषां तदसद्दृष्टिनिवृत्त्यर्थं

B 357 चतुरशीतिचित्त[5]चरितसहस्रभेदभिन्नस्य सत्त्वधातोर्यथाशयानुवर्तकैरशेषसत्त्वधातूत्तारणाक्षिप्तप्रतिज्ञासंपादनतत्परैः प्रज्ञोपायमहाकरुणासंभारपुरःसरैर्निरुपमैरेक[6]जगद्बन्धुभिर्निरव[7]शेषक्लेशमहाव्याधि-

15 चिकित्सकैर्महावैद्यराजभूतैर्हीन[8]मध्योत्कृष्टविनेयजनानुजिघृक्षया हीनानां विनेयानामकुशलकर्मकारिणामकुशलादि निवर्तयितुं बुद्धैर्भगवद्भिः क्वचिदात्मेत्यपि प्रज्ञपितं लोके व्यवस्थापितम् । अहेतुवादप्रतिषेधोपपत्तिश्च कर्मकारकपरीक्षातः, नाप्यहेतुतः इत्यतः, मध्यमकावताराच्च विस्तरेण वेदितव्येति तत्प्रतिषेधार्थं नेह पुनर्यत्न आस्थीयते ॥

ये तु स[9]द्भूतात्मदृष्टिकठिनातिदीर्घशिथिलमहासूत्रबद्धा विहंगमा इव सुदूरमपि गताः कुशल-

B 358 20 कर्मकारिणोऽकुशलकर्मपथव्यावृत्ता अपि न शक्नुवन्ति त्रैधातुकभवोपपत्तिमतिवाह्य शिवमजरममरणं निर्वाणपुरमभिगन्तुम्, तेषां मध्यानां विनेयानां सत्कायदर्शनाभिनिवेशशिथिलीकरणाय निर्वाणाभिलाषसंजननार्थं बुद्धैर्भगवद्भिर्विनेयजना[10]नुग्रहचिकीर्षुभिरनात्मेत्यपि देशितम् ॥

ये तु पूर्वाभ्यासविशेषानुगतगम्भीरधर्माधिमोक्षलब्धबीजपरिपाकाः प्रत्यासन्नवर्तिनि निर्वाणे तेषामुत्कृष्टानां विनेयानां विगतात्मस्नेहानां परमगम्भीरमौनीन्द्र[11]प्रवचनार्थतत्त्वावगाहन-

25 समर्थानामधिमुक्तिविशेषमवधार्य–

बुद्धैरात्मा न चानात्मा कश्चिदित्यपि देशितम् ॥

यथैव हि आत्मदर्शनमतत्त्वम्, एवं तत्प्रतिपक्षभूतमपि अनात्मदर्शनं नैव तत्त्वमिति । एवं नास्त्यात्मा कश्चित्, न चाप्यनात्मा कश्चिदस्तीति देशितम् । यथोक्तमार्यरत्नकूटे–

---

१ T om. from नेयनीतार्थ down to विस्तरैः below. २ T om. आत्माभावविपर्यास. ३ T अनुवर्तन for अनुवर्णन. ४ Mss. मूलोदनोदकस्यादि°. Our reading confirmed by T. ५ T om. °चित्त°. ६ T om. एकजगत्. ७ T om. निरवशेष. ८ T om. from हीन up to निवर्तयितुं. ९ Mss. सूत्रकालबद्धावित्येतोमध्यमकारोहंगमा; P सद्भूतात्मदृष्टिकठिनातिदीर्घतरात्मात्मीयभावस्नेहसूत्रकारबद्धा. Our text is based on T, १० T om. विनेयजनानुग्रहचिकीर्षुभिः. ११ T मुनीन्द्र° for मौनीन्द्र°.

आत्मेति काश्यप अयमेकोऽन्तः। नैरात्म्यमित्ययं द्वितीयोऽन्तः। यदेतदनयोरन्तयोर्मध्यं तदरूप्यमनिदर्शनमप्रतिष्ठमनाभासमविज्ञप्तिकमनिकेतम्। इयमुच्यते काश्यप मध्यमा प्रतिपद् धर्माणां भूतप्रत्यवेक्षा इति॥

उक्तं चार्यरत्नावल्याम्–

नैवमात्मा न चानात्मा यथाभूतेन लभ्यते। 5 B 359
आत्मानात्मकृते दृष्टी ववारास्मान्महामुनिः॥
दृष्टश्रुताद्यं मुनिना न सत्यं न मृषोदितम्।
पक्षाद्धि प्रतिपक्षः स्यादुभयं तच्च नार्थतः॥ इति।

यतश्चैवं हीनमध्योत्कृष्टविनेयजनाशयनानात्वेन आत्मानात्मतदुभयप्रतिषेधेन बुद्धानां भगवतां धर्मदेशना प्रवृत्ता, तस्मान्नास्ति आगमबाधो माध्यमिकानाम्। अत एवोक्तमार्य- 10 देवपादैः–

वारणं प्रागपुण्यस्य मध्ये वारणमात्मनः।
सर्वस्य वारणं पश्चाद्यो जानीते स बुद्धिमान्॥ इति॥

[चतुःशतक–८·१५]

तथा आचार्यपादैरुक्तम्–

यथैव वैयाकरणो मातृकामपि पाठयेत्। 15
बुद्धोऽवदत्तथा धर्मं विनेयानां यथाक्षमम्॥
केषांचिदवदद्धर्मं पापेभ्यो विनिवृत्तये।
केषांचित्पुण्यसिद्ध्यर्थं केषांचिद् द्वयनिश्रितम्॥
द्वयानिश्रितमेकेषां गम्भीरं भीरुभीषणम्। B 360
शून्यताकरुणागर्भं केषांचिद् बोधिसाधनम्॥ इति॥ 20

अथवा–अयमन्योऽर्थः–आत्मेत्यपि प्रज्ञपितं सांख्यादिभिः प्रतिक्षणविनश्वराणां संस्काराणां कर्मफलसंबन्धाभावमुत्प्रेक्ष्य। अनात्मेत्यपि प्रज्ञपितं लोकायतिकैः उपपत्त्या आत्मानं संसर्तारमपश्यद्भिः–

एतावानेव पुरुषो यावानिन्द्रियगोचरः।
भद्रे वृकपदं ह्येतद् यद्वदन्ति बहुश्रुताः॥ 25

इत्यादिना। तैमिरिकोपलब्धकेशमशकादिष्विव वितैमिरिकैरिव बालजनपरिकल्पितात्मानात्मादि- वस्तुस्वरूपं सर्वथैवापश्यद्भिः–

बुद्धैर्नात्मा न चानात्मा कश्चिदित्यपि देशितम्॥

यथोक्तमार्यतथागतगुह्यसूत्रे– B 361

अथ खलु शान्तमतिर्बोधिसत्त्वो भगवन्तमेतदवोचत्–उपशम उपशम इति भगवन्नुच्यते, 30 क एष उपशमो नाम? कस्य चोपशमादुपशम इत्युच्यते? भगवानाह–उपशम इति कुलपुत्र

१ This citation is missing in T.

उच्यते, क्लेशोपशमस्यैतदधिवचनम् । क्लेशोपशम इति संकल्पविकल्पपरिकल्पोपशमस्यैतदधिवचनम् । संकल्पविकल्पपरिकल्पोपशम इति संज्ञामनसिकारोपशमस्यैतदधिवचनम् । संज्ञामनसिकारोपशम इति विपर्यासोपशमस्यैतदधिवचनम् । विपर्यासोपशम इति हेत्वारम्बणोपशमस्यैतदधिवचनम् । हेत्वारम्बणोपशम इति अविद्याभवतृष्णोपशमस्यैतदधिवचनम् । अविद्याभवतृष्णोपशम इति अहंकारममकारोपशमस्यैतदधिवचनम् । अहंकारममकारोपशम इति उच्छेदशाश्वतदृष्ट्युपशमस्यैतदधिवचनम् । उच्छेदशाश्वतदृष्ट्युपशम इति सत्कायदृष्ट्युपशमस्यैतदधिवचनम् । इति शान्तमते ये केचिदारम्बणहेतुदृष्टिसंयुक्ताः संक्लेशाः प्रवर्तन्ते, सर्वे ते सत्कायदृष्टेरुत्पद्यन्ते, सत्कायदृष्ट्युपशमात्सर्वदृष्ट्युपशम इति । सर्वदृष्ट्युपशमात्सर्वप्रणिधानोपशम इति । सर्वप्रणिधानोपशमात्सर्वक्लेशोपशमः । तद्यथापि नाम शान्तमते वृक्षस्य मूले छिन्ने सर्वशाखापत्रफलानि शुष्यन्ति, एवमेव शान्तमते सत्कायदृष्ट्युपशमात्सर्वक्लेशा उपशाम्यन्ते । सत्कायदृष्टौ शान्तमते अपरिज्ञातायां सर्वोपादानोपक्लेशा उत्पद्यन्ते । सत्कायदृष्टिपरिज्ञातोऽपि सर्वोपादानोपक्लेशा नोत्पद्यन्ते न बाधन्ते ॥

शान्तमतिराह – का पुनर्भगवन् सत्कायदृष्टिपरिज्ञा ? भगवानाह – आत्मासमुत्थानं शान्तमते सत्कायदृष्टिपरिज्ञा सत्त्वासमुत्थानं जीवासमुत्थानं पुद्गलासमुत्थानं दृष्ट्यसमुत्थानं सत्कायदृष्टिपरिज्ञा । न खलु पुनः शान्तमते सा दृष्टिरध्यात्मं प्रतिष्ठिता, न बहिर्धा प्रतिष्ठिता । सा दृष्टिः सर्वतोऽप्रतिष्ठिता । यत्तस्या अप्रतिष्ठिताया दृष्टेरप्रतिष्ठितेति ज्ञानम्, इयं शान्तमते सत्कायदृष्टिपरिज्ञा । सत्कायदृष्टिपरिज्ञेति शान्तमते शून्यताया एतदधिवचनम् । यच्छून्यतानुलोमिक्या क्षान्त्या तां दृष्टिं नोद्गृह्णाति, इयमपि शान्तमते सत्कायदृष्टिपरिज्ञा । सत्काय इति शान्तमते शून्यतानिमित्ताप्रणिहितानभिसंस्काराजातानुत्पाददृष्ट्या तां दृष्टिं नोद्गृह्णाति, इयमपि शान्तमते सत्कायदृष्टिपरिज्ञा । सत्काय इति शान्तमते अकाय एषः, न कसति[1] न विकसति न चिनोति नोपचिनोति, आदित एव तदभूतं परिकल्पितम् । यच्च अभूतं परिकल्पितम्, तन्न परिकल्पितं न परिकल्प्यते न विकल्प्यते, तन्न क्रियते न विठप्यते, नोत्थाप्यते नाध्यवस्यते । तदुच्यते उपशम इति ॥

शान्तमतिराह – उपशान्त उपशान्त इति भगवन्नुच्यते, कस्योपशमादुपशान्त इत्युच्यते ? भगवानाह – आरम्बणतः शान्तमते चित्तं ज्वलति । यन्न भूय आलम्बनीकरोति तन्न ज्वलति, अज्वलन् उपशान्त इत्युच्यते । तद्यथापि नाम शान्तमते अग्निरुपादानतो ज्वलति, अनुपादानतः शाम्यति, एवमेव आलम्बनतश्चित्तं ज्वलति अनालम्बनतः शाम्यति । तत्र शान्तमते उपायकुशलोऽयं बोधिसत्त्वः प्रज्ञापारमितापरिशुद्धः आलम्बनसमतां च प्रजानाति, कुशलमूलालम्बनं च शमयति । इत्यादि ॥ ६ ॥

अत्राह – यदि बुद्धैर्भगवद्भिर्नात्मेति देशितम्, नानात्मेति, किं तर्हि देशितमिति ? उच्यते–

> निवृत्तमभिधातव्यं निवृत्ते चित्तगोचरे ।
> अनुत्पन्नानिरुद्धा हि निर्वाणमिव धर्मता ॥ ७ ॥

---

1 Mss. केसति for कसति.

इह यदि किंचिदभिधातव्यं वस्तु स्यात्, तद्देश्येत। यदा तु अभिधातव्यं निवृत्तम्, वाचां विषयो नास्ति, तदा किंचिदपि नैव देश्यते बुद्धैः। कस्मात्पुनरभिधातव्यं नास्तीत्याह— निवृत्ते चित्तगोचरे इति। चित्तस्य गोचरः चित्तगोचरः। गोचरो विषयः। आरम्बणमित्यर्थः। यदि चित्तस्य कश्चिद् गोचरः स्यात्, तत्र किंचिन्निमित्तमध्यारोप्य स्याद् वाचां प्रवृत्तिः। यदा तु चित्तस्य विषय एवानुपपन्नः, तदा क्व निमित्ताध्यारोपः, येन वाचां प्रवृत्तिः स्यात्? कस्मात् 5 पुनश्चित्तविषयो नास्तीति प्रतिपादयन्नाह—

अनुत्पन्नानिरुद्धा हि निर्वाणमिव धर्मता।

यस्मादनुत्पन्नानिरुद्धा निर्वाणमिव धर्मता धर्मस्वभावः धर्मप्रकृतिः व्यवस्थापिता, तस्मान्न तत्र चित्तं प्रवर्तते। चित्तस्याप्रवृत्तौ च कुतो निमित्ताध्यारोपः? तदभावात् कुतो वाचां प्रवृत्तिः? अतश्च न किंचिद् बुद्धैर्भगवद्भिर्देशितमिति स्थितमविकलम्। अत एव च वक्ष्यति— 10

सर्वोपलम्भोपशमः प्रपञ्चोपशमः शिवः।
न क्वचित्कस्यचित्कश्चिद्धर्मो बुद्धेन देशितः॥ इति।

[म० शा०–२४.२४]

एवं चैतत्॥ B 365

अथवा। अयमन्यः पूर्वपक्षः—यदुक्तं 'प्रपञ्चः शून्यतायां निरुध्यते' [१८.५] इति, कथं पुनः प्रपञ्चस्य शून्यतायां निरोध इति? उच्यते। यस्मान्निवृत्तमभिधातव्यमित्यादि पूर्ववद् 15 व्याख्येयम्॥

अथवा। यदेतदुक्तं प्रागाध्यात्मिकबाह्यवस्त्वनुपलम्भेन अध्यात्मं बहिश्च यः सर्वदा[1] अहंकारममकारपरिक्षयः, इदमत्र तत्त्वमिति। कीदृशं तत् किंवत्, वक्तुं वा शक्यते, तस्मात्

निवृत्तमभिधातव्यं निवृत्ते चित्तगोचरे।

तत्र तत्त्वतः इति वाक्यशेषः। किं पुनः कारणं तत्र तत्त्वे निवृत्तमभिधातव्यं निवृत्ते[2] 20 चित्तगोचरे इत्याह—

अनुत्पन्नानिरुद्धा हि निर्वाणमिव धर्मता॥

इति पूर्वकमेव व्याख्यानं योज्यम्॥ अत एवोक्तमार्यतथागतगुह्यसूत्रे— B 366

यां च[3] शान्तमते रात्रिं तथागतोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः, यां च रात्रिमनुपादाय परिनिर्वास्यति, अस्मिन्नन्तरे तथागतेन एकाक्षरमपि नोदाहृतं न प्रव्याहृतं न प्रव्याहरिष्यति। 25 कथं तर्हि भगवता सकलसुरासुरनरकिंनरसिद्धविद्याधरोरगप्रभृतिविनेयजनेभ्यो विविधप्रकारेभ्यो धर्मदेशना देशिता? एकक्षणवागुदाहारेणैव तत्तज्जनमनस्तमोहरणी बहुविधबुद्धिनलिनीवनविबोधिनी जरामरणसरित्सागरोच्छोषिणी कल्पकालानलसप्तार्करश्मिविसरद्वेषिणी शारदरुणमहाप्रभेति॥

तदेवं सूत्रे—

यथा यन्त्रकृतं तूर्यं वाद्यते पवनेरितम्। 30
न चात्र वादकः कश्चिन्निश्चरन्त्यथ च स्वराः॥

---

१ T om. सर्वदा. २ Mss निवृत्तः for निवृत्ते. ३ Compare Lankā. 3.7.

B 367 एवं पूर्वसुशुद्धत्वात्सर्वसत्त्वाशयेरिता ।
वाग्निश्चरति बुद्धस्य न चास्यास्तीह कल्पना ॥
प्रतिश्रुत्कादयः शब्दा नाध्यात्मं न बहिः स्थिताः ।
वागप्येवं नरेन्द्रस्य नाध्यात्मं न बहिः स्थिता ॥ इति ।

5 तथा—

देवत चोदनि दुन्दुभि दिव्य कर्मविपाक निवृत्त मरूणं ।
देव पमत्तविहारिण ज्ञात्वा दुन्दुभिघोष पमुञ्चि नभातो ॥
सर्वे अनित्य अशाश्वत कामा इत्वर अध्रुव फेनसभावाः ।
मायमरीचिसमा दकचन्द्राः सर्वि भवाः सुपिनान्तसभावाः ॥
10 दुन्दुभि वादित शक्रमरुद्धिः सौर्द्धय संक्रमि धर्मसभायाम् ।
धर्मकथां पकरोति मरूणां या कथ शान्त विरागनुकूला ॥

तथा आर्यसमाधिराजे—

बुद्धो यदा मेष्यति धर्मराजः
सर्वाण धर्माण पकाशको मुनिः ।
15 तृणगुल्मवृक्षौषधि शैल पर्वत
अभाव धर्माण रवो भविष्यति ॥
यावन्ति शब्दास्तहि लोकधातौ
सर्वे ह्यभावा न हि कश्चि भावः ।
तावन्तु खो तस्य तथागतस्य
20 स्वरु निश्चरी लोकविनायकस्य ॥

[ समाधिराजसूत्र--८·४,५ ]

B 368 इति विस्तरः ॥

तथा—

एकस्वरा तु तत्र लोकहितो नानाधिमुक्ति स्वरु निश्चरति ।
एकैकमन्विममभाषि जिनो ब्रूहि स्मितं प्रकृतकस्य कृते ॥ इति ॥

[ समाधिराजसूत्र–१४-८७ ]

25 अत्रैके परिचोदयन्ति–नास्तिकाविशिष्टा माध्यमिकाः, यस्मात् कुशलाकुशलं कर्म कर्तारं च फलं च सर्वं च लोकं भावस्वभावशून्यमिति ब्रुवते । नास्तिका अपि हि एतन्नास्तीति ब्रुवते । तस्मान्नास्तिकाविशिष्टा माध्यमिका इति । नैवम् । कुतः ? प्रतीत्यसमुत्पादवादिनो हि माध्यमिकाः, हेतुप्रत्ययान् प्राप्य प्रतीत्य समुत्पन्नत्वात् सर्वमेव इहलोकपरलोकं निःस्वभावं वर्णयन्ति । यथा-स्वरूपवादिनो नैव नास्तिकाः प्रतीत्यसमुत्पन्नत्वाद् भावस्वभावशून्यत्वेन न परलोकाद्यभावं

१ T reads इत्यादि for इति and om. from तथा up to प्रकृतकस्य कृते below. २ Mss. पाकथ for सार्धय. ३ T reads नैवं नास्तिकाः प्रतीत्य...शून्यत्वेन परलोका॰ for यथास्वभाववादिनो...शून्यत्वेन न परलोका॰.

प्रतिपन्नाः । किं तर्हि ऐहलौकिकं वस्तुजातमुपलभ्य स्वभावतः तस्य परलोकादिहागमनम्, इहलोकाच्च परलोकगमनमपश्यन्तः इहलोकोपलब्धपदार्थसदृशपदार्थान्तरापवादं कुर्वन्ति । तथापि वस्तुस्वरूपेण अविद्यमानस्यैव ते नास्तित्वं प्रतिपन्नाः इत्यमुना तावद्दर्शनेन साम्यमस्तीति चेत्, न हि । कुतः? संवृत्या माध्यमिकैरस्तित्वेनाभ्युपगमान्न तुल्यता । वस्तुतस्तुल्यतेति चेत्, यद्यपि वस्तुतोऽसिद्धिस्तुल्या, तथापि प्रतिपत्तृभेदादतुल्यता । यथा हि 5 कृतचौर्यं पुरुषमेकः सम्यगपरिज्ञायैव तदमित्रप्रेरितः तं मिथ्या व्याचष्टे चौर्यमनेन कृतमिति, अपरस्तु साक्षाद् दृष्ट्वा दूषयति, तत्र यद्यपि वस्तुतो नास्ति भेदः, तथापि परिज्ञातृभेदादेकस्तत्र B 369 मृषावादीत्युच्यते, अपरस्तु सत्यवादीति, एकश्च अयशसा च अपुण्येन च सम्यक् परीक्ष्यमाणो युज्यते नापरः, एवमिहापि यथावद्विदितवस्तुस्वरूपाणां माध्यमिकानां ब्रुवतामवगच्छतां च वस्तुस्वरूपाभेदेऽपि यथावदविदितवस्तुस्वरूपैर्नास्तिकैः सह ज्ञानाभिधानयोर्नास्ति साम्यम् । यथैव 10 हि उपेक्षासामान्येऽपि अप्रतिसंख्याय प्रतिसंख्याय उपेक्षकयोरिव पृथग्जनार्हतोः जात्यन्ध-चक्षुष्मतोश्च विषमप्रपातप्रदेशविनिश्चितसामान्येऽपि यथास्ति महान् विशेषः, तथा नास्तिकानां माध्यमिकानां च विशेषो भविष्यतीति पूर्वाचार्याः । इत्यलं प्रसङ्गेन, प्रकृतमेव व्याख्यास्यामः ॥ ७ ॥

अत्राह – यद्यपि एवम्

अनुत्पन्नानिरुद्धा हि निर्वाणमिव धर्मता । 15

तस्यां च नास्ति वाक्चित्तयोः प्रवृत्तिः, तथापि नैवासौ अदेश्यमाना शक्या जनैर्विज्ञातु-मिति अवश्यं तस्यामवतारणार्थं विनेयजनानां संवृतिसत्यापेक्षया कदाचिद्देशनानुपूर्व्या भवितव्यम्, इत्यतः सा कथ्यतामिति । उच्यते । इयमत्र बुद्धानां भगवतां तत्त्वामृतावतारदेशना-नुपूर्वी विज्ञेया, यदुत–

**सर्वं तथ्यं न वा तथ्यं तथ्यं चातथ्यमेव च ।** 20
**नैवातथ्यं नैव तथ्यमेतद्बुद्धानुशासनम् ॥ ८ ॥**

तत्र– B 370

यद्यद्यस्य प्रियं पूर्वं तत्तत्तस्य समाचरेत् ।
न हि प्रतिहतः पात्रं सद्धर्मस्य कथंचन ॥ इति[1] ।

तथा च भगवतोक्तम्– 25

लोको मया सार्धं विवदति । नाहं लोकेन सार्धं विवदामि । यल्लोकेऽस्ति संमतम्, तन्ममाप्यस्ति संमतम् । यल्लोके नास्ति संमतम्, ममापि तन्नास्ति संमतम् ।

इत्यागमाच्च ॥

नान्यया भाषया म्लेच्छः शक्यो ग्राहयितुं यथा ।
न लौकिकमृते लोकः शक्यो ग्राहयितुं तथा ॥ 30

[चतुःशतक–८.१९]

---

[1] P reads after इति, the stanza नान्यया etc. against Mss. and even against T.

इत्यादित एव तावद्भगवता स्वप्रसिद्धपदार्थभेदस्वरूपविभागश्रवणसंजाताभिलाषस्य विनेयजनस्य यदेतत् स्कन्धधात्वायतनादिकमविद्यातैमिरिकैः सत्यतः परिकल्पितमुपलब्धम्, तदेव तावत् सत्यमित्युपवर्णितं[1] भगवता तद्दर्शनापेक्षया, आत्मनि लोकस्य गौरवोत्पादनार्थम्।

B 371 विदितनिरवशेषलोकवृत्तान्तोऽयं भगवान् सर्वज्ञः सर्वदर्शी, यः एवं भवाग्रपर्यन्तस्य वायुमण्डलादे-

5 राकाशधातुपर्यवसानस्य भाजनलोकस्य सत्त्वलोकस्य च अविपरीतं स्थित्युत्पादप्रलयादिकं सातिविचित्रप्रभेदं सहेतुकं सफलं सास्वादं सादीनवं चोपदिष्टवानिति। तदेवं भगवति उत्पन्न-सर्वज्ञबुद्धिविनेयजनस्य उत्तरकालं तदेव सर्वं[2] न वा तथ्यमित्युपदेशितम्। तत्र तथ्यं नाम यस्य अन्यथात्वं नास्ति। विद्यते च प्रतिक्षणविनाशित्वात् संस्काराणामन्यथाभावः, तस्मादन्यथाभाव-सद्भावान्न वा तथ्यम्। वाशब्दश्चकारार्थो देशनासमुच्चये द्रष्टव्यः। सर्वं तथ्यं न च तथ्यमिति॥

10 केषांचित् सर्वमेतत् तथ्यं च अतथ्यं चेति देशितम्। तत्र बालजनापेक्षया सर्वमेतत् तथ्यम्। आर्यज्ञानापेक्षया तु सर्वमेतन्मृषा, तैरेवमनुपलम्भादिति॥

केषांचित्तु अतिचिराभ्यस्ततत्त्वदर्शनानां किंचिन्मात्रानुत्खातावरणतरुमूलानां नैवातथ्यं नैव तथ्यं तदिति देशितम्। तस्यापि किंचिन्मात्रस्यावरणस्य प्रहाणार्थं वन्ध्यासुतस्य अवदात-श्यामताप्रतिषेधवदुभयमेतत् प्रतिषिद्धम्॥

15 एतच्च बुद्धानां भगवतामनुशासनम्— उन्मार्गादपनीय सम्यङ्मार्गप्रतिष्ठापनं शासनम्। एवमानुपूर्व्या शासनमनुशासनम्। विनेयजनानुरूप्येण वा शासनमनुशासनम्॥

B 372 सर्वाश्चैता देशना बुद्धानां भगवतां महाकरुणोपायज्ञानवतां तत्त्वामृतावतारोपायत्वेन व्यवस्थिताः। न हि तथागताः तत्त्वामृतावतारानुपायभूतवाक्यमुदाहरन्ति। व्याध्यनुरूपभैषज्योप-संहारवत् ते विनेयजनानुजिघृक्षया यथानुरूपं धर्मं देशयन्ति। यथोक्तं शतके—

20 सदसत्सदसच्चेति नोभयं चेति कथ्यते।
ननु व्याधिवशात्पथ्यमौषधं नाम जायते॥

इति॥ ८॥ [चतुःशतक – ८·२०]

किंलक्षणं पुनः तत् तत्त्वं यस्यैता देशना अवतारार्थमुपदिशन्ते भगवन्तः[3]? उक्तमेत-दस्माभिः—

25 निवृत्तमभिधातव्यं निवृत्ते चित्तगोचरे। इति।

यदा चैतदेवम्, तदा किमपरं पृच्छ्यते? यद्यप्येवम्, तथापि व्यवहारसत्यानुरोधेन लौकिकतथ्याद्यभ्युपगमवत् तस्यापि समारोपतो लक्षणमुच्यतामिति। तदुच्यते—

**अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।**
**निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम्॥ ९॥**

---

१ P तथ्यं for सत्यम् against Mss. २ P सर्वं for पथ्यम् against Mss. T however seems to read सर्वं. ३ T om. भगवन्तः.

तत्र नास्मिन् परप्रत्ययोऽस्तीति अपरप्रत्ययम्। परोपदेशागम्यम्। स्वयमेवाधिगन्तव्यमित्यर्थः। यथा हि तैमिरिका वितथं केशमशकमक्षिकादिरूपं पश्यन्तो वितिमिरोपदेशेनापि न शक्नुवन्ति केशानां यथावदवस्थितं स्वरूपमदर्शनन्यायेन अधिगन्तव्यमतैमिरिका इवाधिगन्तुम्, किं तर्हि अतैमिरिकोपदेशान्मिथ्यैतदित्येतावन्मात्रकमेव प्रतिपद्यन्ते। यदा तु तिमिरोपघात्यविपरीतशून्यतादर्शनाञ्जनाञ्जितबुद्धिनयनाः सन्तः समुत्पन्नतत्त्वज्ञाना भवन्ति, तदा तत् तत्त्वमनधिगमनयोगेन स्वयमधिगच्छन्तीति। एवमपरप्रत्ययं भावानां यत् स्वरूपं तत् तत्त्वम्। एतच्च शान्तस्वभावमतैमिरिककेशादर्शनवत् स्वभावविरहितमित्यर्थः। अत एव तत् प्रपञ्चैरप्रपञ्चितम्। प्रपञ्चो हि वाक्, प्रपञ्चयति अर्थानिति कृत्वा। प्रपञ्चैरप्रपञ्चितं वाग्भिरव्याहृतमित्यर्थः॥ B 373 5

निर्विकल्पं च तत्। विकल्पश्चित्तप्रचारः। तद्रहितत्वात् तत् तत्त्वं निर्विकल्पम्। यथोक्तं सूत्रे— B 374 10

परमार्थसत्यं कतमत्? यत्र ज्ञानस्याप्यप्रचारः, कः पुनर्वादोऽक्षराणामिति।

एवं निर्विकल्पम्॥

नानार्थोऽस्येति नानार्थं भिन्नार्थम्, न नानार्थः अनानार्थम्, अभिन्नार्थमित्यर्थः। यथोक्तमार्यसत्यद्वयावतारसूत्रे—

देवपुत्र आह-कतमः पुनर्मञ्जुश्रीः सम्यक्प्रयोगः? मञ्जुश्रीराह-यत्समा देवपुत्र परमार्थतस्तथता धर्मधातुः अत्यन्ताजातिश्च, तत्समानि परमार्थतः पञ्चानन्तर्याणि, यत्समानि पञ्चानन्तर्याणि तत्समानि दृष्टिकृतानि, यत्समानि दृष्टिकृतानि तत्समाः पृथग्जनधर्माः; यत्समाः पृथग्जनधर्माः तत्समाः शैक्षधर्माः, यत्समाः शैक्षधर्माः तत्समा अशैक्षधर्माः, यत्समा अशैक्षधर्माः तत्समाः सम्यक्संबुद्धधर्माः, यत्समाः सम्यक्संबुद्धधर्माः तत्समं निर्वाणम्, यत्समं निर्वाणं तत्समः संसारः, यत्समः संसारः तत्समः परमार्थतः संक्लेशः, यत्समः परमार्थतः संक्लेशः तत्समं परमार्थतो व्यवदानम्, यत्समं परमार्थतो व्यवदानं तत्समाः परमार्थतः सर्वधर्माः। एवं परमार्थतः सर्वधर्मसमताप्रयुक्तो देवपुत्र भिक्षुः सम्यक्प्रयुक्त इत्युच्यते॥ 15 20

देवपुत्र आह—कतमया पुनर्मञ्जुश्रीः समतया यावत् परमार्थतो यत्समं व्यवदानं तत्समाः सर्वधर्माः परमार्थत इति? मञ्जुश्रीराह—परमार्थतः सर्वधर्मानुत्पादसमतया परमार्थतः सर्वधर्मात्यन्ताजातिसमतया परमार्थतः समाः सर्वधर्माः। तत् कस्माद्धेतोः? परमार्थतो निर्वाणानानाकरणा हि देवपुत्र सर्वधर्मा अत्यन्तनिरुत्पादतामुपादाय। तद्यथापि नाम देवपुत्र यच्च मृद्भाजनस्याभ्यन्तरमाकाशम्, यच्च रत्नभाजनस्याकाशम्, आकाशधातुरेव एषः। तत् परमार्थतो न किंचिन्नानाकरणम्। एवमेव देवपुत्र यः संक्लेशः, स परमार्थतोऽत्यन्तानुत्पादता। यदपि व्यवदानं तदपि परमार्थतोऽत्यन्तानुत्पादता। संसारोऽपि परमार्थतोऽत्यन्तानुत्पादता। याव- 25 B 375

१ T यदा तु तिमिरोपघात्यञ्जनाञ्जितनयना अतैमिरिका एव [भवन्ति] तदा तत् केशादिस्वरूपमनधिगमनन्यायेनावगच्छन्ति। एवमार्यैः समारोपेण तत्त्वमपि देश्यताम्, तथापि तन्मात्रेण अनार्याणां तत्स्वरूपावगमो न भवति। यदा तु अविद्यातिमिरोपघात्यविपरीत°. It is likely that available Mss. haplographicaly om. from तिमिरो° upto भवन्ति.

न्निर्वाणमपि परमार्थतोऽत्यन्तानुत्पादता। नात्र किंचित्परमार्थतो नानाकरणम्। तत् कस्माद्धेतोः? परमार्थतोऽत्यन्तानुत्पादत्वात्सर्वधर्माणामिति॥

तदेवमनानार्थता तत्त्वस्य लक्षणं वेदितव्यम्, शून्यतैकरसत्वात्। उत्तरोत्तरव्याख्यानं चात्र वेदितव्यम्॥ ९॥

5 एवं तावदार्याणां जातिजरामरणसंसारपरिक्षयाय कृतकार्याणां तत्त्वलक्षणम्।[1] लौकिकं तु तत्त्वलक्षणमधिकृत्योच्यते–

**प्रतीत्य यद्यद्भवति न हि तावत्तदेव तत्।**
**न चान्यदपि तत्तस्मान्नोच्छिन्नं नापि शाश्वतम्॥ १०॥**

B 376 यत् कारणं प्रतीत्य यत् कार्यमुत्पद्यते, तद्यथा शालिबीजं प्रतीत्य पृथिव्यादिसामग्रीं च 10 शाल्यङ्कुर उपजायते, न हि तावत् तदेव तदिति शक्यते वक्तुम्। नैव यदेव बीजं स एव अङ्कुरः, जन्यजनकयोरैकत्वप्रसङ्गात्। ततश्च पितापुत्रयोरपि एकत्वं स्यात्। अनन्यत्वाच्च अङ्कुरावस्थायामङ्कुरवद्बीजग्रहणमपि स्यात्, बीजवच्च अङ्कुरस्यापि ग्रहणं स्यात्।[2] नित्यत्वं चैवं बीजस्य स्यात्, अविनाशाभ्युपगमात्। ततश्च शाश्वतवादप्रसङ्गान्महादोषराशिः स्यात् कर्मफलाद्यभावप्रसङ्गात्। एवं तावद् यदेव बीजं स एव अङ्कुरः इति न युज्यते। न च 15 अन्यदपि तत्तस्मात्। नापि बीजादङ्कुरस्यान्यत्वम्, बीजमन्तरेणापि अङ्कुरोदयप्रसङ्गात्।

यद्यन्यदन्यदन्यस्मादन्यस्मादप्यृते भवेत्।

[म० शा०–१६.६]

इति वचनादङ्कुरावस्थानेऽपि बीजानुच्छेदप्रसङ्गात्। ततश्च सत्कार्यवाददोषः स्यात्। यतश्चैवं यत् कारणं प्रतीत्य यत् कार्यमुत्पद्यते, नैव तत् कारणं कार्यं भवति, न च तस्मात्कारणात्तत् कार्यमन्यत्। तस्मान्न कारणमुच्छिन्नं नापि शाश्वतमिति शक्यते व्यवस्थापयितुम्। 20 यथोक्तमार्यदेवपादैः–

यस्मात्प्रवर्तते भावस्तेनोच्छेदो न जायते।
यस्मान्निवर्तते भावस्तेन नित्यो न जायते॥ इति।

[चतुःशतक–१०.२५]

उक्तं च आर्यललितविस्तरसूत्रे–

B 377 बीजस्य सतो यथाङ्कुरो न च यो बीज स चैव अङ्कुरो।
25 न च अन्यु ततो न चैव तदेवमनुच्छेद अशाश्वत धर्मता॥

[ललितविस्तर–१३.१०२]

इति॥ १०॥

तदेवं यथोपवर्णितेन न्यायेन–

**अनेकार्थमनानार्थमनुच्छेदमशाश्वतम्।**
**एतत्तल्लोकनाथानां बुद्धानां शासनामृतम्॥ ११॥**

---

१ T om. जातिजरा...कृतकार्याणाम्. २ T (wrongly) न स्यात् for स्यात्.

महाकरुणोपायमहामेघपटलनिरन्तरावच्छादिताकाशधातुपर्यन्तदिङ्मण्डलानां रागादिक्लेशगणसमुदाचारातितीक्ष्णतरादित्यमण्डलोपतापितजगज्जातिजरामरणदुःखदहनसंतापोपशमतत्पराणां - सततावरितयथानुरूपचरितप्रतिपक्षसद्धर्मदेशनामृतधारापातैः यथानुरूपविनेयजनकुशलमूलशस्यौषधिफलफुल्लतोत्पन्नातिवृद्धयनुजिघृक्षूणां सद्धर्मामृतमहावर्षवर्षिणां सम्यक्संबुद्धमहानागानामत्राणालौकिकत्राणानामनाथनाथानां सकललोकनाथानामेतत् तत्सद्धर्मामृतं सकलत्रैधातुकभवदुःखक्षय- 5 स्वभावं यथोक्तवर्णितेन न्यायेन एकत्वान्यत्वरहितं शाश्वतोच्छेदवादविगतं च विज्ञेयम् । एतद्धर्मतत्त्वामृतप्रतिपन्नानां श्रावकाणां श्रुतचिन्ताभावनाक्रमात् प्रवर्तमानानां शीलसमाधिप्रज्ञात्मकस्कन्धत्रयामृतरसस्य उपयोगान्नियतमेव जरामरणक्षयस्वभावनिर्वाणाधिगमो भवति । अथापि कथंचिदिह अपरिपक्व- B 378 कुशलमूलतया श्रुत्वाप्येतत् सद्धर्मामृतम्, दृष्ट एव धर्मे न मोक्षमासादयन्ति, तथापि जन्मान्तरेऽपि अवश्यमेषां पूर्वहेतुबलादेव नियता सिद्धिः संपद्यते । यथोक्तं शतके – 10

इह यद्यपि तत्त्वज्ञो निर्वाणं नाधिगच्छति ।
प्राप्नोत्ययत्नतोऽवश्यं पुनर्जन्मनि कर्मवत् ॥

[ चतुःशतक – ८·२२ ]

इति ॥ ११ ॥

अथापि कथंचित् –

**संबुद्धानामनुत्पादे श्रावकाणां पुनः क्षये ।** 15

सति, आर्यमार्गोपदेशककल्याणमित्रप्रत्ययवैकल्यात् न स्याद् धर्मतत्त्वामृताधिगमः, तथापि पूर्वजन्मान्तरधर्मतत्त्वश्रवणहेतुबलादेव ऐहलौकिकोपदेशनिरपेक्षाणामपि प्रविवेकसेवामात्रोपनतप्रत्ययानां स्वायंभुवं –

**ज्ञानं प्रत्येकबुद्धानामसंसर्गात्प्रवर्तते ॥ १२ ॥**

कायचेतसोः प्रविवेकोऽसंसर्गः, कल्याणमित्रापर्येषणं वा । तस्मादसंसर्गाद्धेतोः प्रत्येकबुद्धा- 20 नामसंबुद्धकेऽपि काले यस्माद्भवत्येव धर्मतत्त्वाधिगमः, तस्मादवन्ध्या सिद्धिरस्य संबुद्धमहावैद्यराज- B 379 प्रणीतस्य सद्धर्मतत्त्वामृतभैषज्यस्येति विज्ञेयम् । यतश्च एतदेवम्, अतोऽर्हति प्राज्ञः प्राणानपि परित्यज्य सद्धर्मतत्त्वं पर्येषितुमिति । यथोक्तं भगवता आर्याष्टसाहस्रिकायां भगवत्याम् –

कथं च भगवन् सदाप्ररुदितेन बोधिसत्त्वेन महासत्त्वेन इयं प्रज्ञापारमिता पर्येषिता ? एवमुक्तो भगवानायुष्मन्तं सुभूतिं स्थविरमेतदवोचत् – सदाप्ररुदितेन बोधिसत्त्वेन महासत्त्वेन पूर्वं 25 प्रज्ञापारमितां पर्येषमाणेन कायेऽनर्थिकेन जीवितनिरपेक्षेण लाभसत्कारश्लोकेष्वनिश्रितेन पर्येषमाणेन पर्येषिता । तेन प्रज्ञापारमितां पर्येषमाणेन अरण्यगतेन अन्तरीक्षान्निर्घोषः श्रुतोऽभूत्–गच्छ कुलपुत्र[1] पूर्वस्यां दिशि । तत्र प्रज्ञापारमितां श्रोष्यसि । तथा च गच्छ यथा न कायक्लमथमनसिकारमुत्पादयसि, न स्त्यानमिद्धमनसिकारमुत्पादयसि, न भोजनमनसिकारमुत्पादयसि, यावत् मा क्वचिच्चित्तं प्रणिधा अध्यात्मं वा बहिर्धा वा । मा च कुलपुत्र वामेनावलोकयन् 30

---

१ त्वं for कुलपुत्र in printed edition of BI.

गाः, मा दक्षिणेन, [मा पूर्वेण], मा पश्चिमेन, मा उत्तरेण, मा ऊर्ध्वं मा अधः, मा च अनुविदिश-मवलोकयन् गाः। तथा च कुलपुत्र गच्छ यथा [नात्मतो] न सत्कायतश्चलसि न रूपतो

B 380 न वेदनातो न संज्ञातो न संस्कारेभ्यो न विज्ञानतश्चलसि। यो हि अतश्चलति स वितिष्ठते। [कुतो वितिष्ठते ?] बुद्धधर्मेभ्यो वितिष्ठते। यो बुद्धधर्मेभ्यो वितिष्ठते, स संसारे चरति। यः

5 संसारे चरति, स प्रज्ञापारमितायां न चरति, न च तामनुप्राप्नोतीति ॥

[अष्टसाहस्रिका-४८१]

यावन्मारेण पापीयसा उदकेऽन्तर्धापिते अथास्यैतदभूत्—यन्वहमात्मनः कायं विद्ध्वा इमं पृथिवीप्रदेशं रुधिरेण सिञ्चेयम्। तत्कस्य हेतोः ? अयं पृथिवीप्रदेश उद्धतरजस्कः, मा रजोधातुरितो धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य शरीरे निपतेत्। किमहमात्मभावेन करिष्यामि अवश्यं भेदनधर्मिणा ? वरं खलु पुनर्मम एवंरूपया क्रियया आत्मभावस्य विनाशः

10 कृतो भवेत्, न त्वेवं निःसामर्थ्यक्रियया। बहूनि च मर्म आत्मभावसहस्राणि कामहेतोः कामनिदानं भिन्नानि पुनः पुनः संसारे संसरतः, न पुनरेवंभूतेषु स्थानेषु····। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः तीक्ष्णं शस्त्रं गृहीत्वा समन्तादात्मानं विद्ध्वा समन्ततस्तं पृथिवीप्रदेशं स्वकेन रुधिरेणासिञ्चदित्यादि ॥

[अष्टसाहस्रिका-५२२]

B 381 अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः सहदर्शनादेव धर्मोद्गतस्य बोधिसत्त्वस्य

15 महासत्त्वस्य एवंरूपं सुखं प्रत्यलभत—तद्यथापि नाम प्रथमध्यानसमापन्नस्य भिक्षोरेकाग्रमनसि-कारस्य भिक्षोः। तत्रेयं धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य प्रज्ञापारमितादेशना यदुत सर्वधर्मसमतया प्रज्ञापारमितासमता, सर्वधर्मविविक्ततया प्रज्ञापारमिताविविक्तता, सर्वधर्माचलतया प्रज्ञापारमिताचलता, सर्वधर्मामननतया प्रज्ञापारमितामननता, सर्वधर्मास्तम्भिततया प्रज्ञापारमिता-स्तम्भितता, सर्वधर्मैकरसतया प्रज्ञापारमितैकरसता, सर्वधर्मापर्यन्ततया प्रज्ञापारमितापर्यन्तता,

20 सर्वधर्मानुत्पादतया प्रज्ञापारमितानुत्पादता, सर्वधर्मानिरोधतया प्रज्ञापारमितानिरोधता, गगनापर्यन्त-तया प्रज्ञापारमितापर्यन्तता, यावत् सर्वधर्मासंभेदनतया प्रज्ञापारमितासंभेदनता, सर्वधर्मानुप-लब्धितया प्रज्ञापारमितानुपलब्धिता, सर्वधर्माभिभावनासमतया प्रज्ञापारमिताभिभावनासमता, सर्वधर्मनिश्चेष्टतया प्रज्ञापारमितानिश्चेष्टता, सर्वधर्माचिन्त्यतया प्रज्ञापारमिताचिन्त्यता वेदितव्येति ॥

[अष्टसाहस्रिका-५२४]

॥ इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ

25 आत्मपरीक्षा नाम अष्टादशमं प्रकरणम् ॥

## कालपरीक्षा एकोनविंशतितमं प्रकरणम् ।

अत्राह – विद्यत एव भावानां स्वभावः, कालत्रयविज्ञप्तिहेतुत्वात् । इह अतीतानागत- B 382
प्रत्युत्पन्नास्त्रयः काला भगवता उपदिष्टाः । ते च भावाश्रयाः । यस्मादुत्पन्नो निरुद्धो हि भाव-
स्वभावः अतीत इति व्यपदिश्यते, उत्पन्नोऽनिरुद्धो हि वर्तमानः, अलब्धात्मभावोऽनागत इति ।
एवं भावस्वभावनिबन्धनास्त्रयः काला उपदिष्टाः । ते च सन्ति । तस्मात् तन्निबन्धनोऽपि
भावस्वभावोऽस्तीति । उच्यते । स्यात् कालत्रयप्रज्ञप्तिहेतुर्भावस्वभावः, यदि कालत्रयमेव भवद्भिमतं 5
भवेत् । न त्वस्ति । यथा च नास्ति, तथा प्रतिपादयन्नाह –

प्रत्युत्पन्नोऽनागतश्च यद्यतीतमपेक्ष्य हि ।
प्रत्युत्पन्नोऽनागतश्च कालेऽतीते भविष्यतः ॥ १ ॥

इह तावत् यदि वर्तमानानागतौ स्याताम्, तावपेक्ष्य अतीतं कालं भवेताम्, अनपेक्ष्य
वा ? तत्र यदि अतीतमपेक्ष्य सिध्येते, तथा नियतमतीते काले भविष्यतः । यस्मात्, यस्य 10
हि यत्र असत्त्वम्, तत् तेन नापेक्ष्यते । तद्यथा वन्ध्या स्त्री स्वतनयेन, गगनमालतीलता
स्वकुसुमेन, सिकता स्वतैलेन । अविद्यमानमप्यन्धकारं प्रदीपेन, प्रदीपोऽपि अन्धकारेण
प्रतिद्वन्द्वित्वेन अपेक्ष्यते इति चेत्, नैतदेवम् । अस्यापि साध्यसमत्वात् । तदत्र यदि अतीते
काले वर्तमानानागतौ कालौ इष्येते, अपेक्षासिद्ध्यर्थमेवं सति अतीते काले विद्यमानत्वात्
अतीतकालात्मवत् तयोरप्यतीतत्वं स्यात् । ततश्च अतीतोऽपि न स्यात् । यस्मात् वर्तमानावस्था- 15 B 383
तिक्रान्तो हि अतीतः असंप्राप्तः अनागत इति स्यात् । यदा तु वर्तमानानागतयोरसंभव एव,
तदा कुतः कस्यचिदतीतत्वं स्यात् ? इत्यतः अतीतोऽपि न स्यात् ॥ १ ॥

अथ यथोक्तदोषपरिजिहीर्षया –

प्रत्युत्पन्नोऽनागतश्च न स्तस्तत्र पुनर्यदि ।
प्रत्युत्पन्नोऽनागतश्च स्यातां कथमपेक्ष्य तम् ॥ २ ॥ 20

तत्र अतीते काले यदि वर्तमानानागतौ कालौ न स्तः इति परिकल्प्यते, एवमपि तत्र
अविद्यमानत्वात् गगनेन्दीवरवन्नास्त्यपेक्षा ॥ २ ॥

अथापि स्यात् – कालवादिनां विद्यते एव कालः, तत्र किमपेक्षया प्रयोजनमिति ?
उच्यते । एवमपि –

अनपेक्ष्य पुनः सिद्धिर्नातीतं विद्यते तयोः । 25
प्रत्युत्पन्नोऽनागतश्च तस्मात्कालो न विद्यते ॥ ३ ॥

प्रत्युत्पन्नानागतयोरसत्त्वम्, अतीतानपेक्षत्वात्, खरविषाणवत् । यतश्चैवम् प्रत्युत्पन्नोऽना-
गतश्च तस्मात्कालो न विद्यते इति विज्ञेयम् ॥ ३ ॥

---

१ Mss. यतस्त्वेनोपेक्षतः for तत् तेन नापेक्ष्यते which is confirmed by T. १. T कालवादिनां दर्शने for कालवादिनां. २. Mss. अस्यातीता° for अतीता°.

यदा चैवम् अतीतमपेक्ष्य वा अनपेक्ष्य वा प्रत्युत्पन्नानागतयोर्नास्ति सिद्धिः, एवं प्रत्युत्पन्नापेक्षया वा अनपेक्षया वा अतीतानागतयोः अनागतापेक्षया वा अनपेक्षया वा प्रत्युत्पन्नातीतयोः असिद्धौ इष्यमाणायां तेनैव प्रत्युत्पन्नागतयोः अतीतापेक्षया वा अनपेक्षया असिद्धिक्रमेण दूषणसाम्यमतिदिशन्नाह —

B 384

5 **एतेनैवावशिष्टौ द्वौ क्रमेण परिवर्तकौ ।**
**उत्तमाधममध्यादीनेकत्वादींश्च लक्षयेत् ॥ ४ ॥**

कथं कृत्वा ?

यद्यतीतोऽनागतश्च प्रत्युत्पन्नमपेक्ष्य हि ।
कालोऽतीतोऽनागतश्च प्रत्युत्पन्ने भविष्यतः ॥

10 कालोऽतीतोऽनागतश्च न स्तस्तत्र पुनर्यदि ।
कालोऽतीतोऽनागतश्च स्यातां कथमपेक्ष्य तम् ॥

अनपेक्ष्य पुनः सिद्धिर्न जातं[1] विद्यते तयोः ।
तेनातीतोऽनागतश्च कालो नाम न विद्यते ॥

एष तावदेकः कालपरिवर्तः ।

15 अतीतो वर्तमानश्च यद्यजातमपेक्ष्य हि ।
अतीतो वर्तमानश्च कालेऽजाते भविष्यतः ॥

अतीतो वर्तमानश्च न स्तस्तत्र पुनर्यदि ।
अतीतो वर्तमानश्च स्यातां कथमपेक्ष्य तम् ॥

अनपेक्ष्य पुनः सिद्धिर्नाजातं विद्यते तयोः ।
20 अतीतो वर्तमानश्च तस्मात्कालो न विद्यते ॥

B 385

एष द्वितीयः कालपरिवर्त इति[2] व्याख्यानकारिका इति । एवं द्वौ कालपरिवर्तौ बोद्धव्यौ ॥

यतश्च एवं विचारणे कालत्रयं नास्ति, तस्मात् कालो न विद्यते, कालाभावाच्च भावसद्भावोऽपि नास्ति इति सिद्धम् ॥

25 यथा चैतत्कालत्रयं विचारितम्, एवम्

उत्तमाधममध्यादीनेकत्वादींश्च लक्षयेत् ।

उत्तमाधममध्यमान् इति आदिशब्देन कुशलाकुशलाव्याकृतानि, उत्पादस्थितिभङ्गाः, पूर्वान्तापरान्तमध्यान्ताः, कामरूपारूप्यधातवः, शैक्षाशैक्षनैवशैक्षनैवाशैक्षादयो यावन्तः पदार्थाः त्रिपदार्थसंबन्धव्यवस्थिताः, ते सर्वे गृह्यन्ते । एकत्वादींश्च इत्यनेन आदिशब्देन द्वित्वबहुत्वयो-
30 र्ग्रहणात् ते एव उत्तमादयः एकत्वादयश्च कालत्रयव्याख्यानेन व्याख्याता वेदितव्याः ॥ ४ ॥

---

1. Mss. नातीतं for न जातं which is based on T. २. T om. इति व्याख्यानकारिका इति.

अत्राह—विद्यत एव कालः परिमाणवत्त्वात् । इह यन्नास्ति, न तस्य परिमाणवत्त्वं विद्यते तद्यथा खरविषाणस्य । अस्ति च कालस्य परिमाणवत्त्वं क्षणलवमुहूर्तदिवसरात्र्यहोरात्रपक्षमाससंवत्सरादिभेदेन । तस्मात्, परिमाणवत्त्वाद् विद्यत एव कालः इति । उच्यते । यदि कालो नाम कश्चित् स्यात्, स्यात्तस्य परिमाणवत्त्वम् । न त्वस्ति । यस्मात्—

**नास्थितो गृह्यते कालः स्थितः कालो न विद्यते ।** 5
**यो गृह्येतागृहीतश्च कालः प्रज्ञप्यते कथम् ॥ ५ ॥**

इह यदि कालो नाम कश्चिदवस्थितः क्षणादिव्यतिरिक्तः स्यात्, स क्षणादिभिः परिमाणवत्त्वाद् गृह्येत । न तु अवस्थितः कूटस्थः कश्चित् कालो नाम अस्ति, यः क्षणादिभिर्गृह्येत । तदेवं नास्थितो गृह्यते कालः, अस्थितत्वान्न गृह्यते इत्यर्थः ॥ B 386

अथापि स्यात्—नित्य एवं अवस्थितस्वभावः कालो नाम अस्ति, क्षणादिभिरभिव्यज्यते । 10 तथाहि—

कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ इति ।

यश्चैवंलक्षणः सोऽवस्थितस्वभावोऽस्तीति । उच्यते । एवमपि स्थितः कालो न विद्यते यः क्षणादिभिरभिव्यज्यमानो गृह्येत । कस्मात् पुनः स्थितः कालो नास्तीति चेत्, 15 क्षणादिव्यतिरेकेणागृह्यमाणत्वात् ॥

अपि च । अयं कालः संस्कृतस्वभावः सन् अस्तीति, असंस्कृतस्वभावो वा ? उभयं च संस्कृतपरीक्षायां प्रतिषिद्धम्—

उत्पादस्थितिभङ्गानामसिद्धौ नास्ति संस्कृतम् ।
संस्कृतस्याप्यसिद्धौ च कथं सेत्स्यत्यसंस्कृतम् ॥ 20

[ म० शा०–७.३३ ]

इत्यनेन । तदेवं नास्ति व्यवस्थितः कालः, यो गृह्येत । यश्च इदानीं कालो न गृह्यते अस्थितत्वादविद्यमानस्वरूपत्वात्, सोऽगृह्यमाणः सन् कथं क्षणादिभिः प्रज्ञपयितुं भावतः[1] पार्यत इत्याह—अगृहीतश्च कालः प्रज्ञप्यते कथमिति । तस्मान्नास्त्येव कालः ॥ ५ ॥ B 387

अत्राह—सत्यं नास्ति नित्यः कालो नाम कश्चिद् रूपादिव्यतिरिक्तः स्वभावसिद्धः, किं तर्हि रूपादीनेव स संस्कारानुपादाय प्रज्ञप्तः कालः क्षणादिवाच्यो भवति, तस्माददोष इति । 25 उच्यते । एवमपि—

**भावं प्रतीत्य कालश्चेत्कालो भावादृते कुतः ।**

यद्येवं भावं प्रतीत्य कालो भवतीति भवता[2] व्यवस्थाप्यते, यदा खलु भावो नास्ति, तदा नियतं तद्धेतुकोऽपि कालो नास्तीति प्रतिपादयन्नाह—

---

१ T om. भावतः. २ T om. भवता.

**न च कश्चन भावोऽस्ति**

इति पूर्वं विस्तरेण प्रतिपादितत्वाद्वक्ष्यमाणप्रतिषेधाच्च । यदा चैवं न कश्चिद्भावोऽस्ति भावतः, तदा –

**कुतः कालो भविष्यति ॥ ६ ॥**

5 कालभावाच्च न सन्ति क्षणलवमुहूर्तादयः[1] कालभेदाः तत्परिणामभूताः, इत्यतः कुतः परिणामवत्त्वेन कालसिद्धिर्भविष्यति ? तस्मान्नास्त्येव भावानां स्वभावः इति ॥ उक्तं हि भगवता आर्यहस्तिकक्ष्यसूत्रे –

B 388 यदि कोचि धर्माण भवेत्स्वभावः
तत्रैव गच्छेय जिनः सश्रावको ।
10 कूटस्थधर्माण सिया न निर्वृती
न निष्प्रपञ्चो भवि जातु पण्डितः ॥ इति ।

तथा –

बुद्धसहस्रशता य अतीता
धर्मसहस्रशतानि भणित्वा ।
15 नैव च धर्म न चाक्षर क्षीणा
नास्ति समुद्भवु तेन अक्षीणा ॥ इति ।

[ समाधिराजसूत्र – ३७.२२ ]

तथा[2] –

उत्पादकाले हि तथागतस्य
मैत्रेयनामा त्विह यो भविष्यति ।
20 भविष्यतीयं कनकावृता मही
तस्या इदानीं कुत आगमोऽसौ ॥
उल्लापनाः[3] कामगुणा हि पञ्च
विश्रामणा मोहन मोषधर्मिणः ।
मध्याह्नकाले हि यथैव ग्रीष्मे
25 जलं मरीच्यां हि तथैव कामाः ॥
B 389 एकेन कल्पेन भवेद्धि लोको
आकाशभूतो गगनस्वभावो ।

---

१ T क्षणादयः for क्षणलवमुहूर्तादयः. २ Mss. तद्यथा for तथा which is based on T. ३. T. om. from उल्लापनाः to the end of the chapter.

दाहं विनाशं च पयान्ति मे[भीः]रवः
कुत आगमः कुत्र गतिश्च तेषाम् ॥ इति ॥

तद्यथा –

पञ्चेमानि भिक्षवः संज्ञामात्रं प्रतिज्ञामात्रं व्यवहारमात्रं संवृतिमात्रं यदुत अतीतोऽध्वा अनागतोऽध्वा आकाशं निर्वाणं पुद्गलश्चेति ॥ 5

॥ इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
कालपरीक्षा नाम एकोनविंशं प्रकरणम् ॥

B 390

# सामग्रीपरीक्षा विंशतितमं प्रकरणम् ।

अत्राह – विद्यते कालः, फलप्रवृत्तौ सहकारिकारणभावात् । यो नास्ति, नासौ सहकारिकारणभावेन प्रतिपद्यते, वन्ध्यातनयवत् । तस्मादस्ति कालः, सहकारिकारणभावात् । इह बीजावनिसलिलज्वलनपवनगगनाभिधानहेतुप्रत्ययसामग्रीं प्रतीत्य अयमङ्कुर उपजायमानः, सत्यामपि
5 बीजादिप्रत्ययसामग्र्याम्, ऋतुविशेषासंनिधानान्नोपजायते । यथा च बाह्येषु, एवमाध्यात्मिकेष्वपि । यथोक्तं भगवता –

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ इति ।

यस्माच्च एवमस्ति कालापेक्षा, तस्मादस्त्यसौ कालो नाम, यः अङ्कुरादिप्रवृत्तौ
10 सहकारिकारणं भवतीति । उच्यते । स्यात् सहकारिकारणता कालस्य, यदि अङ्कुरादिफलस्य प्रवृत्तिरेव स्यात् । न त्वस्ति । कथं कृत्वा ? इह बीजादिहेतुप्रत्ययसामग्रीतोऽङ्कुरादिफलोदये
B 391 परिकल्प्यमाने व्यवस्थितस्य वा फलस्य सामग्र्यां सत्यां तत उत्पादः परिकल्प्येत अव्यवस्थितस्य वा ? किं चातः ? यदि तावद् व्यवस्थितस्य परिकल्प्यते, तन्न युज्यते इति प्रतिपादयन्नाह –

**हेतोश्च प्रत्ययानां च सामग्र्या जायते यदि ।**
15 **फलमस्ति च सामग्र्यां सामग्र्या जायते कथम् ॥ १ ॥**

यदि हेतुप्रत्ययसामग्र्यां त्वन्मतेन फलमस्ति, ननु एवं सति यस्मात् सामग्र्यामस्ति, कथं तया तज्जन्यते ? न हि कुण्डे दधि विद्यमानं कुण्डेन जन्यते । अपि च । यद्विद्यते तन्निष्पन्नत्वात् निष्पन्नपुरोवस्थितघटवत् न पुनर्जन्मापेक्षते । अभिव्यक्तिः स्थौल्यं वा सूक्ष्मात्मना विद्यमानस्य क्रियत इति चेत्, तस्यापि पक्षस्य पूर्वमेव[1]–

20 आगच्छत्यन्यतो नाग्निरिन्धनेऽग्निर्न विद्यते ।

[म० शा० – १०·१३]

इत्यत्रोक्तमुत्तरम् ॥ १ ॥

अथ नास्त्येव सामग्र्यां फलमिति परिकल्प्यते, एतदपि नोपपद्यते इति प्रतिपादयन्नाह–

**हेतोश्च प्रत्ययानां च सामग्र्या जायते यदि ।**
**फलं नास्ति च सामग्र्यां सामग्र्या जायते कथम् ॥ २ ॥**

B 392 25 यदि हेतोश्च प्रत्ययानां च सामग्र्यां नास्ति तत्फलम्, कथं तर्हि हेतुप्रत्ययसामग्र्या फलं जन्यते ? तत्र अविद्यमानत्वात् सिकताभिरिव तैलम् । अत एव असंभावयन्नाह–

फलं नास्ति च सामग्र्यां सामग्र्या जायते कथम् ।

न तत्फलं सामग्रीतो जायते इत्यभिप्रायः ॥ २ ॥

किं चान्यत्–

---

१ P reads पूर्वमेवोत्तरत्वात् for पूर्वमेव.

**हेतोश्च प्रत्ययानां च सामग्र्यामस्ति चेत्फलम्।**
**गृह्येत ननु सामग्र्यां सामग्र्यां च न गृह्यते ॥ ३ ॥**

यद् यत्र अस्ति, तत् तत्र गृह्यते, तद्यथा कुण्डे दधि। यच्च यत्र नास्ति न तत्त्र गृह्यते तद्यथा सिकतासु तैलम्, मण्डूकजटायां शिरोमणिः ॥

अथ स्यात्-विद्यमाना अपि पदार्थाः अतिसौक्ष्म्यात्, अतिसंनिकर्षात्, अतिविप्रकर्षात्, 5 इन्द्रियोपघातात्, मूर्तिवद्द्रव्यव्यवधानात्, मूर्त्यन्तर्धानात्, मनोनवस्थानात्, परमाणुवत् अक्षस्थाञ्जनशलाकावत् आदित्यगतिवत् तैमिरिकैकैककेशवत् अन्धबधिरादिरूपशब्दादिवत् कुड्यादिव्यवहितघटादिवत् सिद्धदेवपिशाचादिशरीरवत् विषयान्तरव्यापृतस्य विषयान्तरवन्न गृह्यते इति चेत्, किं खलु एषामगृह्यमाणानामस्तित्वे लिङ्गम्, येन एषामस्तित्वे सति अनुपलब्धिरिति स्यात्? अनुमानोपमानागमैर्ग्रहणादेषामस्तित्वमिति चेत्, न तर्हि तेषामनुपलब्धिरिति वक्तव्यम्, 10 B 393 अनुमानादिभिरुपलभ्यमानत्वात्। यद् रूपीन्द्रियग्राह्यं तद् एभिः कारणैर्विद्यमानमपि सन्न गृह्यते, इति चेत्, उच्यते। किमस्माभिरेवमुक्तम्-रूपीन्द्रियैर्विद्यमानं सद् गृह्येतेति? किं तर्हि सामान्येनैव यद् ब्रूमः-गृह्येत ननु सामग्र्यामिति ॥

अथापि मन्यसे-यद् यत्र नास्ति, न तत् तस्मादुत्पद्यते सिकताभ्यस्तैलवत्। उत्पद्यते च सामग्रीतः फलम्, तस्मादनुमानतः सामग्र्यां फलस्यास्तित्वमिति। उच्यते। यद् यत्र अस्ति, 15 न तत् तस्मादुत्पद्यते, तद्यथा कुण्डाद् दधि इति। अस्मादप्यनुमानादस्तित्वमस्य अयुक्तमिति कृत्वा नास्त्येव सामग्र्यां फलमिति किं न गृह्यते?

अथापि स्यात्-उभयोरपि पक्षयोरनुमानविरोधाद् यथा अस्तित्वं न युक्तम्, एवं नास्तित्वमपीति। उच्यते। न वयमस्यासत्त्वं प्रतिपादयामः, किं तर्हि परपरिकल्पितं सत्त्वमस्य निराकुर्मः। एवं न वयमस्य सत्त्वं प्रतिपादयामः, किं तर्हि परपरिकल्पितमसत्त्वमस्य अपाकुर्मः। 20 अन्तद्वयपरिहारेण मध्यमायाः प्रतिपदः प्रतिपादयितुमिष्टत्वादिति। उक्तं च आर्यदेवपादीये[1] शतके-

स्तम्भादीनामलंकारो गृहस्यार्थे निरर्थकः।
सत्कार्यमेव यस्येष्टं यस्यासत्कार्यमेव च ॥ इति।

[चतुःशतक-११.१५]

तदेवं न सामग्रीतः फलमुत्पद्यते विद्यमानस्य ग्रहणप्रसङ्गात्, इति व्यवस्थितम् ॥ ३ ॥

अथ मन्यसे-नास्त्येव सामग्र्यां फलमिति, एवमपि- 25

**हेतोश्च प्रत्ययानां च सामग्र्यां नास्ति चेत्फलम्।**
**हेतवः प्रत्ययाश्च स्युरहेतुप्रत्ययैः समाः ॥ ४ ॥**

यथा हि ज्वालाङ्गारादिषु अङ्कुरो नास्तीति कृत्वा तस्य ते हेतुप्रत्यया न भवन्ति, एवं B 394 विवक्षितानामपि बीजादीनां हेतुप्रत्ययता न स्यात् तेषु अङ्कुरो नास्तीति कृत्वा। न च अहेतुप्रत्ययेभ्यः फलप्रवृत्तिर्युक्तेति नास्ति स्वभावतः फलप्रवृत्तिः ॥ 30

1 T om. आर्यदेवपादीये.

अत्राह—नैव हि सामग्र्याः फलोत्पादनसामर्थ्यमस्ति यतः इयं चिन्ता स्यात्—किं सामग्र्यां फलमस्ति उताहो नास्तीति। किं तर्हि हेतोः फलोत्पादनसामर्थ्यम्। सामग्री तु हेतोरनुग्रहमात्रं करोति। स हेतुः फलस्योत्पत्त्यर्थं हेतुं दत्वा निरुध्यते, तेन च हेतुना अनुगृह्यमाणं फलमुत्पद्यते इति। उच्यते। नैव हि अजातस्य फलस्य हेतोरनुग्रहणमस्ति। न चाप्यजातस्य 5 वन्ध्यातनयस्येव केनचित्किंचिन्मात्रं कर्तुं शक्यमित्ययुक्तैषा कल्पना॥ ४॥

अपि च—

**हेतुकं फलस्य दत्वा यदि हेतुर्निरुध्यते।**
**यद्दत्तं यन्निरुद्धं च हेतोरात्मद्वयं भवेत्॥ ५॥**

यदि हेतुः फलस्योत्पत्त्यर्थं हेतुकं कारणं दत्वा निरुध्यत इति परिकल्प्यते, एवं सति 10 यद्दत्तं यन्निरुद्धं च तदात्मभावद्वयं हेतोः स्यात्। न चैतद् युक्तम्, अर्धशाश्वतप्रसङ्गात्, नित्यानित्ययोश्च परस्परविरुद्धयोरेकत्वाभावात्॥ ५॥

अथ हेतोरात्मभावद्वयप्रसङ्गपरिहारार्थं सर्वात्मना निरोध इष्यते फलस्योत्पत्त्यर्थं किंचिदप्यदत्वा, एवमपि—

B 395 **हेतुं फलस्यादत्वा च यदि हेतुर्निरुध्यते।**
15 **हेतौ निरुद्धे जातं तत्फलमाहेतुकं भवेत्॥ ६॥**

यदि फलस्य किंचिदप्यदत्वा सर्वात्मना हेतुर्निरुध्यते, ननु तस्मिन् हेतौ निरुद्धे यत्फलमुत्पद्यते तत् आहेतुकं स्यात्। न च आहेतुकमस्ति। इत्ययुक्तैषा कल्पना॥ ६॥

अत्राह—यदि एवं फलस्य हेतोरुत्पत्तौ दोषः, एवं सति सहोत्पन्नैव सामग्री फलस्य जनिका अस्तु, तद्यथा प्रदीपप्रभाया इति। एषापि कल्पना नोपपद्यते इति प्रतिपादयन्नाह—

20 **फलं सहैव सामग्र्या यदि प्रादुर्भवेत्पुनः।**
**एककालौ प्रसज्येते जनको यश्च जन्यते॥ ७॥**

न चैककालयोः सव्येतरगोविषाणयोर्जन्यजनकत्वं दृष्टम्, वामदक्षिणकरयोश्चरणयोर्वा, इत्ययुक्तैषा कल्पना इत्ययुक्तमेतत्॥ ७॥

अत्राहुरेके—नैव हि अभूत्वा भावानामुत्पत्तिर्युक्ता आकस्मिकत्वप्रसङ्गात्। तस्माद् हेतु- 25 प्रत्ययसामग्रीतः पूर्वमेव तत् फलमनागतावस्थायां व्यवस्थितमनागतात्मना। तस्य हेतुप्रत्ययसामग्र्या वर्तमानावस्था जन्यते, द्रव्यं तु व्यवस्थितमेवेति। तान् प्रत्युच्यते—

B 396 **पूर्वमेव च सामग्र्याः फलं प्रादुर्भवेद्यदि।**
**हेतुप्रत्ययनिर्मुक्तं फलमाहेतुकं भवेत्॥ ८॥**

यदि भवतामभीप्सितं सामग्रीतः पूर्वमेव फलं स्वरूपतः स्यादिति, तद् हेतुप्रत्ययनिरपेक्षं 30 स्यात्, ततश्च आहेतुकं स्यात्। न च आहेतुकानां पदार्थानामस्तित्वं युक्तम्, खरतुरगोरगविषाणादीनामप्यस्तित्वप्रसङ्गात्, पूर्वसिद्धस्य च पुनः हेतुप्रत्ययापेक्षया निष्प्रयोजनत्वादित्ययुक्तमेतत्॥ ८॥

---

१ T स हेतुः for हेतुः. २ Mss. हेतुकारणं; T हेतुं तत्कारणहेतुं for हेतुकं. ३ T om. भवतामभीप्सितं.

अन्ये पुनर्वर्णयन्ति—हेतुरेव फलं जनयति न सामग्री । न च उक्तदोषप्रसङ्गः । यस्मात् न हि अन्यो हेतुः अन्यत् फलम् । यतः, किं हेतुं दत्वा फलस्य हेतुर्निरुध्यते उत अदत्वैवेति विचारः स्यात् । अपि तु हेतुरेव निरुद्धः फलात्मना व्यवस्थितः इति । उच्यते । एवमपि—

**निरुद्धे चेत्फलं हेतौ हेतोः संक्रमणं भवेत् ।**
**पूर्वजातस्य हेतोश्च पुनर्जन्म प्रसज्यते ॥ ९ ॥** 5

यदि निरुद्धे हेतौ भवन्मतेन फलमुत्पद्यते, तच्च फलं हेत्वात्मकमेव भवतीति परिकल्प्यते, एवं सति हेतोः संक्रमणं भवेत्, नटस्य वेषान्तरपरित्यागेन वेषान्तरसंचारवत् हेतोः संक्रमण-मात्रमेव स्यात्, न तु अपूर्वस्य फलस्योत्पादः । ततश्च हेतोर्नित्यतैव स्यात् । न च नित्याना-मस्तित्वं क्वचिदस्ति । यथोक्तं शतके—

10 B 397

अप्रतीत्यास्तिता नास्ति कदाचित्कस्यचित्क्वचित् ।
न कदाचित्क्वचित्कश्चिद्विद्यते तेन शाश्वतः ॥ इति ॥

[ चतुःशतक—९.६ ]

किं च । एतस्यां कल्पनायां पूर्वजातस्य च हेतोः पुनर्जन्म प्राप्नोति । न च जातस्य पुनरपि [ जन्म ] युज्यते निष्प्रयोजनत्वात्, अनवस्थाप्रसङ्गाच्च ॥

अथ मन्यसे—येनात्मना विद्यमानो न तेनैवात्मना जायते, येन चात्मना अविद्यमानः तेनैव जायते इति । एतदपि न युक्तम् । अपरित्यक्तहेतुस्वभावस्य हेतुस्वरूपस्य फलमिति 15 संज्ञामात्रभेदादवस्थाभेदाच्च द्रव्याभेदस्य[1] साधयितुमशक्यत्वात् । फलावस्थायां च परित्यक्तहेतु-स्वभावस्य फलशब्दवाच्यत्वाद् हेतुः फलात्मना तिष्ठतीति यत्किंचिदेतत् ॥ ९ ॥

किं चान्यत्—यदि हेतुः फलं जनयेत्, निरुद्धो वा जनयेदनिरुद्धो वा? फलमपि उत्पन्नं वा जनयेदनुत्पन्नं वा? उभयथा च नोपपद्यते इति प्रतिपादयन्नाह—

**जनयेत्फलमुत्पन्नं निरुद्धोऽस्तंगतः कथम् ।** 20
**तिष्ठन्नपि कथं हेतुः फलेन जनयेद्वृतः ॥ १० ॥**

[[2] यदि तावत निरुद्धः अस्तंगतः हेतुः उत्पन्नं सत् विद्यमानं फलं जनयतीति परिकल्प्यते, B 398 तन्नोपपद्यते । कस्मादिति चेत्, कथं निरुद्धः असंविद्यमानः हेतुः फलं जनयेत्? यदि जनयति, वन्ध्यापुत्रोऽपि पुत्रं जनयिष्यति । फलं च सद् विद्यमानमपि जन्मनिरपेक्षमपि कथं हेतुर्जनयि-ष्यति? अथ मन्यसे—शक्त्यभावान्निरुद्धो न जनयति, किं तु तिष्ठन्नेव हेतुः फलं जनयिष्यतीति । 25 उच्यते । ] तिष्ठन्नपि हेतुरविकृतरूपो विद्यमानेन फलेन वृतः संबद्धः कथं जनयेत्? इह हि—

कारणं विकृतिं गच्छज्जायतेऽन्यस्य कारणम् ।

इति कारणाभावं प्रतिपद्यमानस्य हेतोरवश्यं विकारेण भवितव्यम् । यस्तु न विक्रियते, स हेतुलक्षणयुक्त एव न भवतीति । फलेन च संबद्धः कथं जनयेत्? फलस्य विद्यमानत्वात् ॥ १० ॥

---

१ T द्रव्यभेदस्य for द्रव्याभेदस्य. २ The portion in brackets is missing in all Mss. and is supplied from T.

अथ मन्यसे—विद्यमानस्य फलस्य पुनर्जनयितुमशक्यत्वात् अवृत एव असंबद्ध एव हेतुः फलेन फलं जनयिष्यतीति, एतदप्ययुक्तमित्याह—

**अथावृतः फलेनासौ कतमज्जनयेत्फलम् ।**

B 399 यदि हेतुः फलेन असंबद्ध एवेष्यते, तदा कतमदिदानीं फलं जनयेत्? सर्वमेव वा फलं 5 जनयेदसंबद्धत्वात्, न वा किंचिज्जनयेदसंबद्धत्वादेवेत्यभिप्रायः ॥

किं चान्यत्। यदि हेतुः फलं जनयेत्, स दृष्ट्वा फलं जनयेददृष्ट्वा वा? उभयथा च न युज्यते इत्याह—

**न ह्यदृष्ट्वा वा दृष्ट्वा वा हेतुर्जनयते फलम् ॥ ११ ॥**

तत्र यदि हेतुर्दृष्ट्वा जनयतीति परिकल्प्यते, तन्न युज्यते । यस्माद्विद्यमानमेव द्रष्टुं पार्यते 10 नाविद्यमानम्। विद्यमानं चेत्, तन्न जन्यते विद्यमानत्वादिति। एवं तावद् हेतुः फलं दृष्ट्वा न जनयति, अदृष्ट्वापि न जनयति, सर्वस्य फलस्य हेतोर्जनकत्वप्रसङ्गात् ॥

अथ किमिदं दर्शनं किं वा अदर्शनमिति? उच्यते। प्रसिद्धमेतल्लोके—उपलब्धिर्दर्शनमिति ॥

ननु एतद् बीजादिषु निरिन्द्रियेषु न संभवति । संभवतु मा वा। नास्माकमयं पर्यनुयोगः किं तर्हि तस्योत्पादवादिनः । तत्र यः उत्पादवादी ब्रूयात्—दृष्ट्वा जनयतीति, स वक्तव्यः—न 15 दृष्टमेतल्लोके यद्बीजादिकं पश्यतीति । तस्मादयुक्ता एषा कल्पना। अथ अदृष्ट्वा कल्पयेत्, एवमपि यत्किंचिददृष्टं संभवति तत्सर्वमुत्पादयेत्, न चोत्पादयति, तस्मात् न अदृष्ट्वापि जनयति । B 400 अनिष्टापत्त्या हि वयं परकल्पनां विचारयामः संसाराटवीकान्तारगिरिदरीप्रपातदुःखमालासमाकुलामा[1] *** तामीव। बुद्धिपूर्वकर्तृकं च पुरुषादिकारणिनो जगदभ्युपगच्छन्तो निर्ग्रन्थाश्चैकेन्द्रियं बीजादिकं प्रतिपन्नाः प्रसङ्गान्न व्यतिवर्तन्त इति । तस्मान्नास्ति दोषः ॥ ११ ॥

20 किं चान्यत्—यदि युष्मदभिमतं हेतोः फलस्य च अन्योन्यढौकनलक्षणं संगमनं स्यात्, स्यात्तदानीं तयोर्जन्यजनकभावः । यस्मात् न हि परस्परासंगतयोरालोकान्धकारयोः संसारनिर्वाणयोर्जन्यजनकभावो दृष्ट इति । अतः अवश्यं हेतुफलभावयोर्जन्यजनकभावमिच्छता परेण संगतिरभ्युपेया । सा च कालत्रयेऽपि विचार्यमाणा न संभवति । अतो हेतुः फलं न जनयति । यथा च संगतिर्नास्ति तथा प्रतिपादयन्नाह—

25 **नातीतस्य ह्यतीतेन फलस्य सह हेतुना ।**
**नाजातेन न जातेन संगतिर्जातु विद्यते ॥ १२ ॥**

अतीतस्य तावत् फलस्य अतीतेन हेतुना सह जातु कदाचिदपि संगतिर्नास्ति, अतीतत्वेनोभयोरप्यविद्यमानत्वात् । नापि अजातेन हेतुना अतीतस्य फलस्य संगतिर्जातु विद्यते, नष्टाजातत्वेन उभयोरप्यविद्यमानत्वात्, भिन्नकालत्वाच्च। नापि जातेन वर्तमानेन हेतुना सह 30 अतीतस्य फलस्य संगतिः संभवति, भिन्नकालत्वात्, नष्टस्य च फलस्य अविद्यमानत्वाद्वन्ध्यापुत्रेणेव देवदत्तस्येत्यभिप्रायः ॥ १२ ॥

---

[1] T om. संसारा ... मिव,

यथा च अतीतस्य फलस्य अतीतेन अनागतवर्तमानेन हेतुना सह न कदाचित् संगतिरस्ति, एवं वर्तमानस्यापि फलस्य त्रैकालिकेन हेतुना सह नास्ति संगतिरिति तत्र प्रतिपादयन्नाह – B 401

**न जातस्य ह्यजातेन फलस्य सह हेतुना।**
**नातीतेन न जातेन संगतिर्जातु विद्यते॥ १३॥** 5

जातस्य फलस्य भिन्नकालत्वादजातेन च अतीतेन च हेतुना सह संगमनं नास्ति। नापि वर्तमानस्य वर्तमानेन हेतुना सह संगतिरस्ति, हेतुफलयोर्यौगपद्याभावात्, तयोश्च संगतिवैयर्थ्यात्। किं हि विद्यमानयोः परस्परनिरपेक्षयोः पुनः संगत्या प्रयोजनमिति नास्ति संगतिः॥ १३॥

इदानीमनागतस्यापि फलस्य यथा अतीतानागतप्रत्युत्पन्नेन हेतुना सह संगमनं नास्ति तथा प्रतिपादयन्नाह – 10

**नाजातस्य हि जातेन फलस्य सह हेतुना।**
**नाजातेन न नष्टेन संगतिर्जातु विद्यते॥ १४॥**

अजातं हि फलमसंविद्यमानम्। तस्य भिन्नकालेन वर्तमानेन अतीतेन च हेतुना सह नास्ति संगमनं भिन्नकालत्वात्। अनागतेनापि हेतुना सह नास्ति संगमनम्, उभयोरविद्यमानत्वात्॥ १४॥ 15

यदा चैवं सर्वथा हेतुफलयोः संगतिर्नास्ति, तदा –

**असत्यां संगतौ हेतुः कथं जनयते फलम्।**

नैव हेतुः फलं जनयति संगतेरविद्यमानत्वात् वन्ध्यापुत्रमिवेत्यभिप्रायः॥ B 402

अथापि स्यात् – सत्यामेव संगतौ हेतुः फलं जनयतीति, तदपि न युक्तम्, कालत्रयेऽपि संगत्यनुपलब्धेः। अथापि कथंचिद् हेतुफलयोः संगतिः परिकल्प्यते, एवमपि – 20

**सत्यां वा संगतौ हेतुः कथं जनयते फलम्॥ १५॥**

संनिहितस्य फलस्य पुनर्जन्मवैयर्थ्यात्, असंहितानां च संगतेरयुक्तत्वात् इत्यभिप्रायः॥ १५॥

किं चान्यत् – 25

**हेतुः फलेन शून्यश्चेत्कथं जनयते फलम्।**
**हेतुः फलेनाशून्यश्चेत्कथं जनयते फलम्॥ १६॥**

योऽयं फलस्य हेतुः फलस्य जनक इष्यते, स तेन शून्यो वा भवन् फलमुत्पादयेत्, अशून्यो वा? तत्र हेतुः शून्यः फलेन रहितः फलं न जनयति, अहेतुवत् फलशून्यत्वात्। फलेन अशून्योऽपि हेतुः फलं न जनयति, विद्यमानत्वात् फलस्य, विद्यमानपुत्रं देवदत्त इव। एवं तावत् फलशून्यो वा फलाशून्यो वा हेतुः फलं न जनयति॥ १६॥ 30

यच्चापि फलमुत्पद्यते, तच्चाप्यशून्यं वा समुत्पद्यते, शून्यं वा? तत्र तावत् –

फलं नोत्पत्स्यतेऽशून्यमशून्यं न निरोत्स्यते ।
अनिरुद्धमनुत्पन्नमशून्यं तद्भविष्यति ॥ १७ ॥

B 403 अशून्यं हि फलमप्रतीत्यसमुत्पन्नं स्वभावव्यवस्थितम्, तदेवंविधं फलं नैवोत्पत्स्यते स्वभावस्यानपायित्वाच्च न निरोत्स्यते । ततश्च अशून्यं तदिष्यमाणमनिरुद्धमनुत्पन्नं च स्यात् ।
5 न चैतदिष्टम्, इत्यतः अशून्यं तत्फलं न भवति, उत्पादनिरोधाभ्युपगमात् ॥ १७ ॥

इदानीं शून्यमपि तत्फलं न संभवति, अनुदयाव्ययवत्त्वप्रसङ्गात् इति प्रतिपादयन्नाह –

कथमुत्पत्स्यते शून्यं कथं शून्यं निरोत्स्यते ।
शून्यमप्यनिरुद्धं तदनुत्पन्नं प्रसज्यते ॥ १८ ॥

तत्र शून्यमुच्यते यत्स्वभावेन नास्ति । यच्च वस्तु स्वभावेन नास्ति, तत् कथमुत्पत्स्यते,
10 कथं वा निरोत्स्यते ? न हि स्वभावेन अविद्यमानस्य आकाशादेः उदयव्ययौ दृष्टौ । तस्माच्छून्यमपि तत्फलमिष्यमाणमनिरुद्धमनुत्पन्नं च प्रसज्यते ॥ १८ ॥

किं चान्यत् – यदि हेतुः फलं जनयेत्, स फलादव्यतिरिक्तो वा जनयेत्, व्यतिरिक्तो वा ? उभयथा च नोपपद्यते इत्याह –

हेतोः फलस्य चैकत्वं न हि जातूपपद्यते ।
15 हेतोः फलस्य चान्यत्वं न हि जातूपपद्यते ॥ १९ ॥

तदेतत् प्रतिज्ञामात्रकमिति[1] प्रतिपादयन्नाह –

B 404 एकत्वे फलहेत्वोः स्यादैक्यं जनकजन्ययोः ।
पृथक्त्वे फलहेत्वोः स्यात्तुल्यो हेतुरहेतुना ॥ २० ॥

यदि हेतोः फलस्य च एकत्वं स्यात्, तदा जन्यजनकयोरेकत्वमभ्युपेतं स्यात् । न
20 चानयोरेकत्वम्, पितापुत्रयोश्चक्षुश्चक्षुर्विज्ञानयोर्बीजाङ्कुरयोश्चैक्यप्रसङ्गात् । एवं तावद् हेतोः फलस्य च एकत्वं नास्ति ॥

इदानीमन्यत्वमपि नास्ति । किं कारणम् ? यदि हेतोः फलस्य च भवन्मतेनाभिमतमन्यत्वं स्यात्, तदा परत्र निरपेक्षत्वाद् हेतुनिरपेक्षमेव फलं स्यात् । न चैतदेवम्, इत्यतः अन्यत्वमपि हेतोः फलस्य च न संभवति । ययोश्च एवं विचार्यमाणयोस्तत्त्वान्यत्वे न स्तः, तयोर्न
25 कदाचिज्जन्यजनकभावः इष्यते । अतो नैव हेतुः फलं जनयति ॥ २० ॥

किं चान्यत् – यदि हेतुः फलं जनयेत्, स तत्फलं स्वभावेन सद्भूतं वा जनयेत्, असद्भूतं वा ? उभयथा च न युज्यते इत्याह –

फलं स्वभावसद्भूतं किं हेतुर्जनयिष्यति ।
फलं स्वभावासद्भूतं किं हेतुर्जनयिष्यति ॥ २१ ॥

25 तत्र यत् फलं स्वभावेन सद्भूतं स्वभावेन विद्यमानम्, तन्न पुनर्जन्यते विद्यमानत्वात्, विद्यमानघटवत् । यदपि स्वभावेन असद्भूतं फलम्, तदपि हेतुर्न जनयति, स्वभावेन असद्भूतत्वात्, खरविषाणवत् ॥

---

1 T प्रतिज्ञामात्रमस्ति, कथं सिध्यतीति चेत्, प्रतिपादनार्थमाह for प्रतिज्ञामात्रकमिति प्रतिपादयन्नाह.

प्रतिबिम्बेनानैकान्तिकतेति चेत्, भवतु अनैकान्तिकता, नैःस्वाभाव्यं तु सिद्धं भावानाम्। ततश्च सस्वभाववादत्यागः स्यात्, अस्मद्वादानुवर्णनमेव स्यात्। सस्वभावश्च न कश्चित् पदार्थो नाम अस्तीति प्रतिद्वन्द्व्यभावात्[1] निःस्वभावोऽपि पदार्थो नास्तीति कुतोऽनैकान्तिकता? न हि अस्माकं प्रतिबिम्बकं सस्वभावं नापि निःस्वभावम्, धर्मिणमन्तरेण तद्धर्मयोरप्यभावात्। न हि आर्याः प्रतिबिम्बकं नाम किंचित् निःस्वभावं सस्वभावं वा उपलभन्त इति ॥   B 405   5

तत्र पूर्वं फलं नोत्पत्स्यते [ २०.१७–१८ ] इत्यादिना श्लोकद्वयेन साक्षादुत्पत्तिक्रियाकर्तृत्वं फलस्य निषिद्धम्। इदानीं हेतोः फलोत्पत्तिक्रियाप्रयोजकत्वं प्रतिषिद्धमिति। अयमस्य पूर्वकाद्विशेष इति विज्ञेयम् ॥ २१ ॥

अत्राह—यद्यपि हेतोः फलोत्पत्तिक्रियाप्रयोजकत्वं निषिद्धम्, तथापि हेतुस्तावत् स्वभावतोऽस्ति, न च असति फले हेतोर्हेतुत्वं सिध्यति, तस्मात फलमपि भविष्यतीति। उच्यते — स्याद्धेतुः, यदि अजनयतोऽस्य हेतुत्वं स्यात्[2]।   10

**न चाजनयमानस्य हेतुत्वमुपपद्यते।**

अथ स्यात्—यद्यपि एवं हेतोर्हेतुत्वं नास्ति, तथापि फलं तावदस्ति। न च हेतुमन्तरेण फलं युक्तमिति फलसद्भावाद् हेतुरपि भविष्यतीति। उच्यते। यदा अजनयमानस्य हेतोर्हेतुत्वं नास्तीत्युक्तम्, तदा —   15

**हेतुत्वानुपपत्तौ च फलं कस्य भविष्यति ॥ २२ ॥**

इति। तस्मात् फलमपि नास्तीति ॥ २२ ॥

अत्राह-नैव हि केवलस्य हेतोः फलोत्पत्तिक्रियायाः प्रयोजकत्वम्, किं तर्हि हेतुप्रत्ययसामग्र्या फलं जन्यते इति। उच्यते। उक्तदोषत्वात् न युक्तमेतत्। अपि च, इयं हेतुप्रत्ययसामग्री यदि फलस्य जनिकेति कल्प्यते, किं सा स्वयमेव तावदात्मानं जनयति, उताहो न? यदि जनयतीति कल्प्यते, तन्न युज्यते। न हि अलब्धात्मभावस्य प्रयोजकत्वं दृष्टमित्यतः सामग्र्या अवश्यं लब्धात्मभावया भवितव्यम्। न च लब्धात्मभावायाः पुनः स्वात्मोत्पादे प्रयोजकत्वं युक्तम्, इत्यतः न सामग्री स्वात्मानमुत्पादयति। या च आत्मानं नोत्पादयति, सा कथं फलमुत्पादयितुं शक्नोतीति प्रतिपादयन्नाह —   B 406   20

**न च प्रत्ययहेतूनामियमात्मानमात्मना।**   25
**या सामग्री जनयते सा कथं जनयेत्फलम्॥ २३॥**

प्रत्ययानां हेतूनां च येयं सामग्री सा तावदात्मनैव आत्मानं नोत्पादयति, स्वात्मनि वृत्तिविरोधात, सत्याः पुनरुत्पादवैयर्थ्याच्च। या च एवमात्मानमेव तावन्न जनयति, सा कथं फलं जनयिष्यति? न हि वन्ध्यादुहिता आत्मानं जनयितुमशक्ता सती पुत्रं जनयिष्यतीति युज्यते। एवं सामग्र्यपि स्वात्माजनिका फलं जनयतीति न युज्यते॥ २३॥   30

१ Mss. प्रतिद्वन्द्व्यभावाभावान्निःस्वभावोऽपि स्वभावो नास्ति. Our text is based on T.
२ Mss. न स्यात् for स्यात् which is confirmed by T.

तस्मात् –

**न सामग्रीकृतं फलं**

B 407 अथापि स्यात् – यदि सामग्रीकृतं फलं न संभवति, एवं तर्हि असामग्रीकृतं भविष्यतीति चेत्, उच्यते –

5 **नासामग्रीकृतं फलम् ।**

यदा सामग्रीकृतं फलं न संभवति, तदा कथमत्यन्तविरुद्धमसामग्रीकृतं भविष्यति ? असामग्रीकृतं फलं न संभवति ॥

अथ स्यात् – यद्यपि नास्ति फलं स्वभावतः, तथापि हेतुप्रत्ययसामग्री तावदस्ति । न च फलमन्तरेण हेतुप्रत्ययसामग्री संभवतीति फलमपि संभविष्यतीति । उच्यते । स्याद्धेतुप्रत्यय-
10 सामग्री, यदि फलमेव भवेत् । यदा तु यथोदितेन न्यायेन फलनेव नास्ति, तदा –

**अस्ति प्रत्ययसामग्री कुत एव फलं विना ॥ २४ ॥**

फलाभावे सति निर्हेतुका हेतुप्रत्ययसामग्री अपि नास्तीत्यभिप्रायः । उक्तं हि आर्यललितविस्तरसूत्रे –

कण्ठोष्ठ प्रतीत्य तालुकं
15 जिह्वपरिवर्ति रवन्ति अक्षराः ।
न च कण्ठगता न तालुके
अक्षरैकैकश[1] नोपलभ्यते ॥
B 408 सामग्रि प्रतीत्यतश्च सा
वाच मनबुद्धिवशेन निश्चरी ।
20 मन वाच अदृश्यरूपिणी
बाह्यतोऽभ्यन्तरि नोपलभ्यते ॥
उत्पादव्ययं विपश्यतो
वाचरुतघोषस्वरस्य पण्डितः ।
क्षणिकां वशिकां तदा दृशी
25 सर्व वाच प्रतिश्रुतकोपमा ॥

[ललितविस्तर – १३.१११–११३]

तथा आर्योपालिपरिपृच्छायामुक्तं भगवता –

इह शासनि सूरमणीये
प्रव्रजथा गृहिलिङ्ग जहित्वा ।
फलवन्तु भविष्यथ श्रेष्ठा
30 एषु निदेशितु कारुणिकेन ॥

---

1 P अक्षरैकैक च for अक्षरैकैकश.

प्रव्रजित्व गृहिलिङ्ग जहित्वा
सर्वफलस्य भविष्यति प्राप्तिः ।
पुन धर्मसभाव तुलित्वा
सर्वफलान फलान च प्राप्तिः ॥
अलभन्त फलं तथ प्राप्ति
आश्चरियं पुन जायति तेषाम् ।
अहोऽतिकारुणिको नरसिंहो
सुष्टुपदेशित युक्ति जिनेन ॥ इति ।

B 409

5

तथा आर्यप्रज्ञापारमितायामष्टसाहस्रिकायाम् —

तेन हि कौशिक बोधिसत्त्वेन महासत्त्वेन महासंनाहसंनद्धेन न रूपे स्थातव्यं न वेदनायां न संज्ञायां न संस्कारेषु न विज्ञाने स्थातव्यम् । न स्रोतआपत्तिफले न सकृदागामिफले न अनागामिफले न अर्हत्त्वे न प्रत्येकबुद्धत्वे न सम्यक्संबुद्धत्वे स्थातव्यम् ॥ इति ॥ 10

[ अष्टसाहस्रिका – ३४ ]

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
सामग्रीपरीक्षा नाम विंशतितमं प्रकरणम् ॥

B 410

## संभवविभवपरीक्षा एकविंशतितमं प्रकरणम्।

अत्राह—विद्यत एव स्वभावतः कालः, संभवविभवनिमित्तत्वात्। इह कंचित् कालविशेषमपेक्ष्य अङ्कुरोत्पत्तिः भावानामुत्पादो भवति, कंचित्कालविशेषमपेक्ष्य विभवो विनाशो भवति, न सर्वदा, विद्यमानायामपि हेतुप्रत्ययसामग्र्याम्—इत्यतो विद्यत एव कालः, संभवविभवनिमित्तत्वात्। उच्यते। स्यात् संभवविभवनिमित्तता कालस्य यदि संभवविभवावेव स्याताम्।
5 न तु स्तः। यथा च न स्तः, तथा प्रतिपादयन्नाह—

**विना वा सह वा नास्ति विभवः संभवेन वै।**
**विना वा सह वा नास्ति संभवो विभवेन वै॥ १॥**

इह यदि संभवविभवौ स्याताम्, तौ अन्योन्यं सहभावेन वा स्याताम्, विनाभावेन वा। उभयथा च विचार्यमाणौ न संभवतः। कथं कृत्वा? तत्र तावद् यथा विना संभवेन उत्पादेन
10 विभवो विनाशो नास्ति, तथा प्रतिपादयन्नाह—

B 411

**भविष्यति कथं नाम विभवः संभवं विना।**
**विनैव जन्म मरणं विभवो नोद्भवं विना॥ २॥**

संभवं विना कथं नाम विभवो विनाशो भविष्यति? कथं नामेत्यनेन प्रसिद्धमत्यन्तासंभवं दर्शयति। कथं नाम भविष्यति, नैव एतत्संभवतीत्यभिप्रायः। यदि पुनर्विनैव
15 संभवं विभवः स्यात्, को दोषः स्यात्? उच्यते। विनैव जन्म मरणं स्यात्, अजातस्य मरणं स्यात्। न च अजातस्य मरणं दृष्टमिति। तस्माद्विभवो नोद्भवं विना भवितुमर्हति। आद्येनात्र श्लोकस्यार्धेन प्रतिज्ञा, मध्येन पादेन प्रसङ्गापादनम्, अन्त्येन निगमनमिति विज्ञेयम्॥ २॥

एवं तावद्विना संभवेन विभवो न युक्तः इति प्रतिपाद्य इदानीं सह संभवेनापि विभवो न संभवति तथा प्रतिपादयन्नाह—

20 **संभवेनैव विभवः कथं सह भविष्यति।**
**न जन्ममरणं चैवं तुल्यकालं हि विद्यते॥ ३॥**

यदि हि संभवेन सह युगपत् तुल्यकालं विभवः स्यात्, एवं सति जन्ममरणे युगपत् स्याताम्। न चैवं परस्परविरुद्धे आलोकान्धकारवदेकस्मिन् काले विद्येते इति। तस्मात् सहापि संभवेन विभवस्य नास्ति सिद्धिरिति स्थितम्॥ ३॥

B 412 25 यदा चैवं संभवेन विना वा सह वा विभवस्य नास्ति सिद्धिः, एवं संभवस्यापि विना वा सह वा विभवेन नास्ति सिद्धिरिति प्रतिपादयन्नाह—

**भविष्यति कथं नाम संभवो विभवं विना।**
**अनित्यता हि भावेषु न कदाचिन्न विद्यते॥ ४॥**

नैव हि संभवो विभवेन विना युज्यते। यस्मादनित्यता हि भावेषु भवनधर्मकेषु उत्पाद-
30 धर्मकेषु न कदाचिन्न विद्यते, किं तर्हि सर्वदैव विद्यते। उक्तं हि—

---

1 T अङ्कुरादीनामुत्पत्तिरुत्पादो for अङ्कुरोत्पत्तिः भावनामुत्पादो.

जरामरणधर्मेषु सर्वभावेषु सर्वदा ।
तिष्ठन्ति कतमे भावा ये जरामरणं विना ॥ इति ।

[ म० शा०–७.२४ ]

यदा चैवं नित्यमनित्यतानुगताः सर्वे भावाः, तदा कुतः सा काचिदवस्था या विनाशरहिता स्यादिति ? अतो नास्ति विभवेन विना उत्पाद इति । एवं तावद्विना विभवेन नास्ति संभवः । शेषमत्र संस्कृतपरीक्षायां विचारितत्वान्न विचार्यते ॥ 5

यस्तु सहेतुको विनाशः, संस्कृतलक्षणत्वात्, उत्पादवत्, इति साधनमुत्क्षिप्य अन्त्यचित्तचैत्तक्षणैरनैकान्तिकतामाह, स न युक्तमाह, तद्विनाशस्यापि जातिप्रत्ययत्वेन सहेतुकत्वात् साध्यसमत्वाच्च अनैकान्तिकताभावात् । यदपि निर्दिष्टम्–भावात्मभाव एव अभूत्वा भावादुत्पाद उच्यते, तस्माद् द्रव्यसदुत्पादसिद्धेर्व्यवहारतो दृष्टान्तभाव इति, तदपि न युक्तम्, अद्रव्यसतां प्रतिबिम्बादीनां सहेतुकत्वाभ्युपगमात् । यथोक्तमाचार्यपादैः– 10 [B 413]

हेतुतः संभवो येषां तदभावान्न सन्ति ये ।
कथं नाम न ते स्पष्टं प्रतिबिम्बसमा मताः ॥ इति ।

अस्मादा[ गमात् ] कुतो व्यवहारतो दृष्टान्तासिद्धिः ? यदि च भावात्, यत् तत्त्वान्यत्वेन न शक्यते वक्तुम्, तत् संवृत्यापि नास्तीत्युच्यते । नीलादिकमपि नास्तीत्युच्यते । यथोक्तं रत्नावल्याम्– 15

रूपस्याभावमात्रत्वादाकाशं नाममात्रकम् ।
भूतैर्विना कुतो रूपं नाममात्रकमप्यतः ॥ इति ।

अपि च । कुतो माध्यमिकानां स्वभावरूपं सिद्धसत्ताकं यस्य अवस्थाविशेष उत्पादः स्यात् ? अतः अयुक्तमेव दृष्टान्तासिद्धतोद्भावनम् । यच्चोक्तम्–न सहेतुको विनाशः, अविनाशवत्त्वात्, यथा असंस्कृतमिति, तस्यैवं ब्रुवतो महान्तं विरोधमयं हेतुराभवति[3] । यथा हि अयं हेतुर्विनाशस्य निर्हेतुकत्वं साधयति, एवं संस्कृतलक्षणत्वाभावमपि साधयति । तथा संस्कारस्कन्धसंग्रहप्रतीत्यसमुत्पादाङ्गसंग्रहादिकमपि सर्वं विरोधयतीति न युक्तमेतन्मतम् । तथा । न विज्ञानं विषयस्वरूपच्छेदकम्, अविज्ञानवत्त्वात्, असंस्कृतवत्, इत्यादिना सर्वनिषेधान्महती अनिष्टापत्तिरुपपद्यतेऽस्य, इति नास्थेयमेतत् ॥ ४ ॥ 20 [B 414]

इदानीं विभवेन सह यथा संभवस्य नास्ति सिद्धिः, तथा प्रतिपादयन्नाह– 25

**संभवो विभवेनैव कथं सह भविष्यति ।**
**न जन्ममरणं चैव तुल्यकालं हि विद्यते ॥ ५ ॥**

यदि हि संभवो विभवेनैव सह स्यात्, तदा जन्ममरणयोस्तुल्यकालता स्यात् । न च [ सा ] संभवति । तस्मात् सहभावेनापि संभवविभवयोर्नास्ति सिद्धिः ॥ ५ ॥

---

१ T द्रव्यसतामुत्पादसिद्धेः for द्रव्यसदुत्पादसिद्धेः. २ T उच्यताम् for उच्यते. ३ P आपतति for आभवति against Mss.

अथ स्यात्—यद्यपि जन्ममरणयोरेकीभावेन वा नानाभावेन वा नास्ति सिद्धिः, तथापि विद्येते एव संभवविभवौ, वाच्यत्वात्, विज्ञानवत्, इति। उच्यते। यदि वाच्यत्वेन अनयोः सिद्धिरिष्यते, वन्ध्यापुत्रस्यापि इष्यताम्॥

अपि च—

B 415 5 **सहान्योन्येन वा सिद्धिर्विनान्योन्येन वा ययोः।**
**न विद्यते, तयोः सिद्धिः कथं नु खलु विद्यते॥ ६॥**

सहभावासहभावरहितं नास्ति पक्षान्तरं यतः संभवविभवयोः सिद्धिः स्यात्। अवाच्यतया सिद्धिर्भविष्यतीति चेत्, केयमवाच्यता नाम? यदि मिश्रीभावः, सोऽनुपपन्नः, पृथक्पृथगसिद्धयोर्मिश्रीभावाभावात्। अनिर्धार्यमाणौ[1] स्वरूपत्वात् वन्ध्यापुत्रस्यामगौरतादिवन्न स्तः एव संभवविभवाविति। 10 यदा चैवं संभवविभवौ न स्तः, तदा तद्धेतुरपि कालो नास्तीति सिद्धम्॥ ६॥

किं चान्यत्—इहेमौ संभवविभवौ परिकल्प्यमानौ क्षयधर्मिणो वा भावस्य परिकल्प्येयातामक्षयधर्मिणो वा? उभयथा च नोपपद्यते इति प्रतिपादयन्नाह—

**क्षयस्य संभवो नास्ति नाक्षयस्यापि संभवः।**
**क्षयस्य विभवो नास्ति विभवो नाक्षयस्य च॥ ७॥**

B 416 15 तत्र क्षयस्य[2] क्षयलक्षणस्य भावस्य विरोधिधर्मसद्भावात् संभवो न युक्तः। अक्षयस्यापि भावलक्षणवियुक्तत्वात् खरविषाणस्येव संभवो न युक्तः। एवं क्षयस्य विभवो नास्ति। क्षयधर्मो हि अविद्यमानः, तस्य निराश्रयो विभवो न युक्तः। तथा विभवो नाक्षयस्य च। अक्षयधर्मो हि भावाभावलक्षणविलक्षणः। तस्य अविद्यमानस्य कुतो विभवो भविष्यति? यौ च संभवविभवौ न क्षयधर्मिणो नाक्षयधर्मिणो भावस्य संभवतः, तौ न संभवतः। इति न स्तः संभवविभवौ॥ ७॥

20 अत्राह—विद्येते एव भावानां संभवविभवौ, तदाश्रयिधर्मिसद्भावात्। इह भावाश्रयौ संभवविभवौ, स च तावद् भावोऽस्ति, तत्सद्भावात् तदाश्रितावपि धर्मौ भविष्यतः इति। उच्यते। स्यातां भावाश्रितावेतौ धर्मौ, यदि भावः स्यात्। यदा तु भावो नास्ति, तदा—

**संभवो विभवश्चैव विना भावं न विद्यते।**

कस्मात्पुनर्भावो नास्तीति चेत्, यस्मात्—

25 **संभवं विभवं चैव विना भावो न विद्यते॥ ८॥**

भावस्य हि लक्षणभूतौ संभवविभवौ, तौ च स्वरूपतो न स्तः इति प्रतिषिद्धौ। यदा च तौ भावतः प्रतिषिद्धौ, तदा भावलक्षणं संभवं विभवं च विना कुतो भावलक्षणविलक्षणो भावो भविष्यति? भावं च विना न स्तः संभवविभवौ॥

B 417 अपरे तु पूर्वार्धं पश्चिमं कृत्वा व्याचक्षते। स्तः एव संभवविभवौ, भावधर्मत्वात्[3]। इह 30 यन्नास्ति, न तस्यास्ति भावधर्मत्वम्, तद्यथा मण्डूकजटाशिरोमणेः। भावधर्मौ च संभवविभवौ,

---

१ Mss. अनिर्धार्यमाणो for °माणौ. २ Mss. नाक्षय° for क्षय°. ३ Mss. भावधर्मित्वात् for °धर्मत्वात् which is confirmed by T.

तस्मात् स्तः एव तौ इति । यदि कस्यचित् परमार्थतः संभवविभवौ स्याताम्, स भाव इति युक्तं स्यादभिधातुम् । तौ च न स्तः, इति

संभवं विभवं चैव विना भावो न विद्यते ।

भावस्य संभवविभवसत्त्वे विद्यमानत्वात्, इति भावः । तदसत्त्वे च हेतोरसिद्धार्थता । तथा—

संभवो विभवश्चैव विना भावं न विद्यते ॥ 5

आश्रयस्याभावादाश्रितस्य असिद्धिः इत्यभिसंधिरिति ॥ ८ ॥

किं चान्यत्—इहेमौ संभवविभवौ परिकल्पमानौ शून्यस्य वा भावस्य परिकल्प्येयाता-मशून्यस्य वा ? उभयथा च नोपपद्यते इति प्रतिपादयन्नाह—

**संभवो विभवश्चैव न शून्यस्योपपद्यते ।**

अविद्यमानाश्रयत्वादाकाशचित्रवदित्यभिप्रायः । तथा— 10 B 418

**संभवो विभवश्चैव नाशून्यस्योपपद्यते ॥ ९ ॥**

अशून्यस्य असत्त्वात् निराश्रयौ संभवविभवौ नोपपद्यतः ॥ ९ ॥

किं चान्यत्—इह यदि संभवविभवौ स्याताम्, तौ एकत्वेन वा स्यातामन्यत्वेन वा ? उभयथा च नोपपद्यते इत्याह—

**संभवो विभवश्चैव नैक इत्युपपद्यते ।** 15

परस्परविरुद्धयोरालोकान्धकारयोरिवैकत्वानुपपत्तेः ।

**संभवो विभवश्चैव न नानेत्युपपद्यते ॥ १० ॥**

उभयोः परस्परमव्यभिचारित्वात् । न हि संभवरहितस्य विनाशः, न विभवरहितस्य संभवो दृष्ट इति । एवमुभयोः परस्परमव्यभिचारित्वात्

संभवो विभवश्चैव न नानेत्युपपद्यते ॥ 20

अथ स्यात्—किमनया सूक्ष्मेक्षिकया ? आगोपालाङ्गनादिको हि जनः यस्मात् संभवं विभवं च पश्यति, तस्मात् स्तः संभवविभवौ । न हि अविद्यमानो वन्ध्यातनयः शक्यो द्रष्टुमिति । एवमपि—

**दृश्यते संभवश्चैव विभवश्चैव ते भवेत् ।** B 419

उच्यते । अनैकान्तिकमेतत् । न हि यद् यद् लोकेनोपलभ्यते तस्य तस्य अस्तित्वम् । 25 तथा हि आगोपालाङ्गनादिको जनो गन्धर्वनगरमायास्वप्नालातचक्रमरीचिकासलिलादिकमविद्यमान-मपि पश्यति इन्द्रियोपघातात्, एवमिमावपि संभवविभवौ असन्तौ मोहादेव पश्यतीत्याह—

**दृश्यते संभवश्चैव मोहाद्विभव एव च ॥ ११ ॥**

अथ कस्मात् पुनरेतदेवं निश्चीयते—अविद्यमानस्वरूपाविमौ संभवविभवौ मोहादेव बालजनेन दृश्येते इति । युक्त्या ह्येतदेवं निश्चीयते । का पुनरत्र युक्तिः ? इह यदि कश्चिद् भावो 30 नाम भवेत्, नियतं स भावाद्वा जायेत अभावाद्वा । तथा यदि अभावो नाम कश्चित्, सोऽपि भावाद्वा जायेत अभावाद्वा । उभयथा च उभयोरप्यसंभवः इत्याह—

---

१ T reads तत्रोच्यते before यदि. २ T seems to enlarge the text after इन्द्रियोपघातात्.

न भावाज्जायते भावो भावोऽभावान्न जायते ।
नाभावाज्जायतेऽभावोऽभावो भावान्न जायते ॥ १२ ॥

B 420 भावात् तावत् संभवाख्याद् भावस्य संभवाख्यस्य उत्पादो न विद्यते, कार्यकारणयोर्यौगपद्याभावात्, उत्पादस्य च लब्धजन्मनः पुनरुत्पादवैयर्थ्यात् । अभावादपि भावो न जायते । किं 5 कारणम् ? अभावो हि नाम विभवो विनाशः । स च भावविरुद्धः । तस्माद्भावविरुद्धात् कथं भावः स्यात् ? यदि स्यात्, तदा वन्ध्यादुहितुरपि पुत्रः स्यात् । न चैतदेवमिति । तस्मादभावादपि भावो न भवति । इदानीमभावोऽप्यभावान्न भवति । भावनिवृत्तिरूपो हि अभावः, तत् कुतोऽस्य कार्यकरणसामर्थ्यम् ? यदि स्यात्, निर्वाणस्यापि कार्यकरणसामर्थ्यं स्यात् । यदि च अभावादभावः स्यात्, तदा वन्ध्यादुहितुरपि पुत्रः स्यात् । न चैतदेवमिति । तस्मादभावादप्य-10 भावो न भवति । इदानीं भावादप्यभावो न भवति । भावविरुद्धो ह्यभावः । स कथं भावाद्भवेत् ? यदि भवेत्, प्रदीपादन्धकारः स्यात् । यतश्चैवं विचार्यमाणौ संभवविभवौ न स्तः, तस्मान्मोहादेव लोकेन दृश्येते इति विज्ञेयम् ॥

अथवा । अयमन्यः पूर्वपक्षः—इह हि यदि संभवविभवौ स्याताम्, तौ भावाश्रयौ वा स्यातामभावाश्रयौ वा । तौ च भावाभावौ सर्वथा विचार्यमाणौ न संभवतः । ततश्च कुतो निरा-15 श्रयौ संभवविभवाविति ? अतः—

दृश्यते संभवश्चैव मोहाद्विभव एव च ।

इति विज्ञेयम् । यथा च भावाभावौ न संभवतः, तथा प्रतिपादयन्नाह—

न भावाज्जायते भावो भावोऽभावान्न जायते ।
नाभावाज्जायतेऽभावोऽभावो भावान्न जायते ॥

20 अस्यार्थः पूर्ववत् ॥ १२ ॥

B 421 अपि च । यदि कश्चिद् भावो नाम स्यात्, तस्य उदयव्ययवत्त्वात् संभवविभवौ स्याताम् । न च कश्चिद् भावः स्वरूपतोऽस्ति खरविषाणवत् स्वभावानुत्पन्नत्वात् । अनुत्पन्नत्वमसिद्धमिति चेत्, तत् सिद्धम्, यस्मात्—

न स्वतो जायते भावः परतो नैव जायते ।
25 न स्वतः परतश्चैव जायते, जायते कुतः ॥ १३ ॥

एतच्च आद्य एव प्रकरणे व्याख्यातत्वान्न पुनर्व्याख्यायते । यश्चैवं यथोक्तप्रकारेण जायते स इदानीं कुतो जायते ? नैव कुतश्चिज्जायते इत्यभिप्रायः । अवश्यं चैतदेवमभ्युपेयम्—सर्वथा नास्ति भावस्योत्पाद इति ॥ १३ ॥

भावसद्भावताभ्युपगमे च भवतः शाश्वतोच्छेददर्शनमापद्यते बौद्धमतानुगस्येत्याह[1]—

30 भावमभ्युपपन्नस्य शाश्वतोच्छेददर्शनम् ।
प्रसज्यते

यस्मात्,

---

१ T अन्यथा for भाव...त्याह. २ P बौद्धमतानुगत्येत्याह for बौद्धमतानुगस्येत्याह.

**स भावो हि नित्योऽनित्योऽथ वा भवेत्॥ १४॥**

योहि यथोदितपदार्थव्यवस्थामतिक्रम्य भावसद्भावदर्शनमभ्युपैति, तस्य अवश्यं प्रवचनात्यन्तविरुद्धं शाश्वतोच्छेददर्शनद्वयमापद्यते। किं कारणम्? यस्मात् स भावः परिकल्प्यमानः नित्यो वा भवेदनित्यो वा। यदि नित्यः, तदा नियतं शाश्वतवादः। अथ अनित्यः, तदा नियतमुच्छेद इति॥ १४॥ B 422 5

अत्राह –

**भावमभ्युपपन्नस्य नैवोच्छेदो न शाश्वतम्।**

किं कारणम्? यस्मात्–

**उदयव्ययसंतानः फलहेत्वोर्भवः स हि॥ १५॥**

यो हि हेतुफलयोरुदयव्ययानुप्रबन्धः, स हि अस्माकं भवः संसारः। तत्र यदि हेतुर्निरुध्येत, तद्धेतुकं फलं नोत्पद्येत, तदा स्यादुच्छेदवाददोषः[1]। यदि च हेतुर्न निरुध्येत, स्वरूपेणावतिष्ठेत, तदा स्याच्छाश्वतवाददर्शनदोषः[2]। न चैतदेवमिति। तस्माद् भावाभ्युपगमेऽपि नास्ति शाश्वतोच्छेददर्शनदोषद्वयप्रसङ्गः[3]। स एव संसारः योऽयं हेतुफलाविच्छिन्नक्रमवर्ती उत्पादव्ययानुप्रबन्धः संस्काराणामिति। अतो नास्ति अस्माकमयं दोष इति॥ १५॥ 10

उच्यते– 15

**उदयव्ययसंतानः फलहेत्वोर्भवः स चेत्।**

ननु एवमपि– B 423

**व्ययस्यापुनरुत्पत्तेर्हेतूच्छेदः प्रसज्यते॥ १६॥**

यो हि हेतुक्षणः फलस्योत्पत्तौ हेतुभावमुपेत्य निरुध्यते, ननु तस्य व्ययवतो हेतुक्षणस्य पुनरनुत्पादादुच्छेददर्शनमापद्यते। तत्रायं कथं न दोष इति चेत्, भावमभ्युपपन्नस्य अयं दोषः। न च मया भावोऽभ्युपगतः, स्वभावानुत्पन्नत्वात् सर्वधर्माणाम्। यत्रापि मया– 20

प्रतीत्य यद्यद्भवति न हि तावत्तदेव तत्।
न चान्यदपि तत्तस्मान्नोच्छेदो नापि शाश्वतम्॥
[म० शा० – १८·१०]

इत्युक्तम्, तत्रापि अमुना न्यायेन नैःस्वाभाव्यमेव भावानां प्रतिपादितम्। अन्यथा हि सति भावस्वरूपे बीजाङ्कुरयोः कथमन्यत्वं न स्यात्? तस्मान्नायं प्रसङ्गोऽस्माकं बाधक इति॥ १६॥ 25

एवं तावद् भावमभ्युपपन्नस्य हेतोः पुनरनुत्पादादुच्छेददर्शनप्रसङ्गमुद्भाव्य इदानीं शाश्वतवादे दोषप्रसङ्गमुद्भावयन्नाह[4]–

**सद्भावस्य स्वभावेन नासद्भावश्च युज्यते।**

यदि हि हेतोः सद्भावः स्वभावतः स्यात्, तस्य पश्चादसद्भावो न स्यात् स्वभावस्यानपायित्वात्[5]। ततश्च शाश्वतदर्शनप्रसङ्गः तदवस्थ एव॥ B 424 30

१ T स्यादुच्छेदः for स्यादुच्छेदवाददोषः. २ T स्याच्छाश्वतदर्शनं for स्याच्छाश्वतवाददर्शनदोषः. ३ T om. °दोषद्वय°. ४ T शाश्वतदोष° for शाश्वतवादे दोष°. ५ T om. स्वभावस्यानपायित्वात्.

किं चान्यत्—

**निर्वाणकाले चोच्छेदः प्रशमाद्भवसंततेः ॥ १७ ॥**

यद्यपि हेतुफलयोरुदयव्ययसंतानप्रवृत्त्या शाश्वतोच्छेददर्शनप्रसङ्गः परिह्रियते, तथापि यत्रास्य संतानस्य पुनरप्यप्रवृत्तिः, तत्र निर्वाणे नियतमुच्छेददर्शनमापद्यते । उच्छेददर्शनं च
5 प्रहातव्यमित्युक्तं भगवता । एवंविधमुच्छेददर्शनं न भविष्यतीति चेत्, अन्यदपि किमर्थं भवतां भविष्यतीति भावविच्छेदालम्बनत्वात्, निर्वाणकाले भावविच्छेदालम्बनवदित्यभिप्रायः ॥

यच्चोक्तम्—

उदयव्ययसंतानः फलहेत्वोर्भवः स हि ।

इति, तदपि नोपपद्यते । कथं कृत्वा ? इह हि चरमो भवो निर्वृत्तिलक्षणः, प्रथमो
10 गतिप्रतिसंधिलक्षणः । तत्र चरमो भवो निरुध्यमानो हेतुत्वेनावतिष्ठते । उपपत्तिलक्षणस्तु प्रथमो भवः फलरूपत्वेन व्यवतिष्ठते । अनयोश्च भवयोः संसार इति संज्ञा कृता ॥ १७ ॥

B 425 अत्र च इदं विचार्यते—य एष प्रथमो भवः फलरूपत्वेन व्यवस्थाप्यते, स किं चरमे भवे निरुद्धे उपजायते, अथानिरुद्धे, उत निरुध्यमाने, यतो हेतुफलानुप्रबन्धात् संसारः स्यात् ? सर्वथा च विचार्यमाणो न संभवतीति प्रतिपादयन्नाह—

15 **चरमे न निरुद्धे च प्रथमो युज्यते भवः ।**
**चरमे नानिरुद्धे च प्रथमो युज्यते भवः ॥ १८ ॥**

तत्र यदि चरमे भवे निरुद्धे प्रथमो भवो जायते इति परिकल्प्यते, तदा निर्हेतुकः स्यात् । दहनदग्धबीजादपि अङ्कुरोदयः स्यात् । न चैतदिष्टम् । तस्माच्चरमे निरुद्धे प्रथमो भवो न युज्यते ॥

20 इदानीमनिरुद्धेऽपि चरमे भवे प्रथमो भवो न युज्यते । यदि स्यात्, निर्हेतुकः स्यात्, द्विरूपता च एकस्य सत्त्वस्य स्यात्, अपूर्वसत्त्वप्रादुर्भावश्च, पूर्वस्य च नित्यता स्यात्, अविनष्टे च बीजे अङ्कुरोदयः स्यात् । न चैतदेवमिष्टमिति । अतः—

चरमे नानिरुद्धे च प्रथमो युज्यते भवः ।

इति स्थितम् ॥ १८ ॥

25 इदानीं निरुध्यमानेऽपि चरमे भवे प्रथमो भवो यथा नोपपद्यते तथा प्रतिपादयन्नाह—

B 426 **निरुध्यमाने चरमे प्रथमो यदि जायते ।**
**निरुध्यमान एकः स्याज्जायमानोऽपरो भवेत् ॥ १९ ॥**

तत्र निरुध्यमानो वर्तमानो वर्तमानप्रत्ययान्तवाच्यत्वात्, जायते-इत्यपि वर्तमान एवोच्यते वर्तमानशब्दवाच्यत्वात् । अथवा निरुध्यमानो निरोधक्रियाकारकः । यश्चापि जायते, असावपि
30 जनिक्रियाकारकः, तौ च एककालाविष्यमाणौ यौगपद्येनैव स्तः । ततश्च निरुध्यमानः एको भवः स्यात्, जायमानश्चापर इति यौगपद्येनैव द्वौ भवौ प्राप्नुतः । न चैकस्य युगपद् द्वौ भवौ संभवतः इत्ययुक्तमेतत् ॥ १९ ॥

---

[1] Mss. गतिवृत्तिलक्षणः for निवृत्ति° which is confirmed by T.

तदेवं यथोक्तेन विचारक्रमेण—

न चेन्निरुध्यमानश्च जायमानश्च युज्यते ।
सार्धं च म्रियते येषु तेषु स्कन्धेषु जायते ॥ २० ॥

चशब्दः समुच्चयार्थः । पृथक्पृथक् चेति एतत्संनिधापयति । यदा एवं यथोदितन्यायेन निरुद्धे चरमे प्रथमो भवो न संभवति, अनिरुद्धेऽपि चरमे प्रथमो भवो न संभवति, सार्धं 5 चैकस्मिंश्च काले चरमेन भवेन सह प्रथमो भवो न संभवति, तत् किमिदानीं येषु एव स्कन्धेषु म्रियते तेषु एव जायते इति स्यात् । येषु स्कन्धेषु स्थितो म्रियते, तेष्वेव जायते इति अत्यन्त-विरुद्धमेतत् । न हि म्रियमाणो जायते इति दृष्टम् ॥ २० ॥

तत्—

एवं त्रिष्वपि कालेषु न युक्ता 10 B 427

भवदभिमता

भवसंततिः ।

चरमे भवे निरुद्धेऽनिरुद्धे निरुध्यमाने यस्मात् प्रथमो भवो न संभवति, तस्मात् त्रिष्वपि कालेषु भवसंततिर्नास्ति ।

त्रिषु कालेषु या नास्ति सा कथं भवसंततिः ॥ २१ ॥ 15

या च इदानीं त्रिषु कालेषु नास्ति, कुतः सा अन्येनात्मना भविष्यतीति सर्वथा नास्ति भवन्मता भवसंततिः । ततश्च यदुक्तम्—

उदयव्ययसंतानः फलहेत्वोर्भवः स हि ।

इति, तन्न युक्तम् । ततश्च भावाभ्युपगमे सति स एव शाश्वतोच्छेदवादप्रसङ्गो दुर्निवारो भवताम्, इत्यतो नास्त्येव भावानां स्वभावत उत्पत्तिरिति सिद्धम् । यथोक्तमार्यसमाधिराजभट्टारके— 20

* * * *

तथा[२]— B 428

बीजस्य सतो यथाङ्कुरो
न च यो बीजु स चैव अङ्कुरो ।
न च अन्यु ततो न चैव त-
देवमनुच्छेद अशाश्वत धर्मता ॥ 25
मुद्रात्प्रतिमुद्र दृश्यते
मुद्रसंक्रान्ति न चोपलभ्यते ।
न च तत्र न चैव सान्यतो
एवं संस्कार अनुच्छेदशाश्वताः ॥

[ ललितविस्तर—१३·१०२, १०४ ]

---

१ The Mss. reproduce here the stanzas already appearing at the end of chapter II ( Pages 41-42), which we have omitted here as they are omitted in T.
२ T om. these two stanzas.

अत एवोक्तमार्यनागार्जुनपादैः

स्वाध्यायदीपमुद्रादर्पणघोषार्ककान्तबीजाम्लैः ।

स्कन्धप्रतिसंधिरसंक्रमश्च विद्वद्भिरवधार्यौ ॥ इति ।

तथा भगवान्—

B 429 5 जायते च्यवते चापि न च जातिर्न च च्युतिः ।

यस्य विजानत एष समाधिर्नास्य दुर्लभः ॥ इति ।

तथा—

सूसुखिता सद ते नर लोके

येहि अचिन्तिय ज्ञातिमि धर्माः ।

10 न च धर्म अधर्म विकल्पो

चित्तपपञ्च विभावित सर्वि ॥

भाव अभाव विभावयि ज्ञानं

सर्वमचिन्तयि सर्वमभूतम् ।

ये पुन चित्तवशानुग बाला-

15 स्ते दुखिता भवकोटिशतेषु ॥

योऽपि च चिन्तयि शून्यकधर्मान्

सोऽपि कुमार्गपपन्नकु बालः ।

अक्षर कीर्तित शून्यक धर्मा-

स्ते च अनक्षर अक्षर उक्ताः ॥

B 430 20 शान्त पशान्त य चिन्तयि धर्मान्

सोऽपि च चित्तु न जातु न भूतः ।

चित्तवितर्कण सर्वि पपञ्चाः

सूक्ष्म अचिन्तिय बुध्यथ धर्मान् ॥

इति ॥ २१ ॥

25 इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ संभवविभवपरीक्षा नाम एकविंशतितमं प्रकरणम् ॥

---

1 The source of this stanza is not known. It is also omitted in T here as well as in Chapter xxvi.

# २२

## तथागतपरीक्षा द्वाविंशतितमं प्रकरणम् ।

अत्राह — विद्यत एव भवसंततिः, तथागतसद्भावात् । इह हि भगवता महाकरुणोपाय- B 431
प्रज्ञाद्वयधारिणा सकलत्रैधातुकाशेषसत्त्वजात्यादिदुःखव्युपशमैकमनसा त्रिभिः कल्पासंख्येयैः सततमविरां
नैरन्तर्यक्रमेणोद्यच्छता तैस्तैर्निरतिशयैरतिविचित्रैः पुण्यक्रियाप्रारम्भैः सकलजगद्धितोदयैकक्रिया-
लक्षणैः प्रियैकपुत्रादप्यधिकतरनिरवशेषजगदनुग्रहतत्परेण महाकरुणापरवशेन तत्रतत्रोपपत्त्यायतने 5
क्षितिसलिलज्वलनपवनसाधारणभैषज्यमहामहीरुहवज्जनानां स्वेच्छात उपभोग्यतामात्मानमुपगमयता
महाकालेन सार्वज्ञं सर्वाकारपरिच्छेदि पदमधिगतम् । स एवमधिगतसर्वज्ञज्ञानो भगवान् यथा B 432
धर्माणां तत्त्वं व्यवस्थितं तथैव अशेषतो गतत्वाद् बुद्धत्वात् तथागत इत्युच्यते । यदि भवसंततिर्न
स्यात्, तदा तथागतोऽपि न स्यात् । न हि एकेन जन्मना शक्यं तथागतत्वमनुप्राप्तुम् ।
तस्माद्विद्यत एव भवसंततिः, तथागतसद्भावादिति । उच्यते । भवदीयमेव हि इदमतिमहदज्ञानं 10
भवसंतानस्य अविच्छेदवर्तितां च अतिदीर्घकालं च गमयति, यस्य नाम भवतः अतिमहदज्ञान-
घनान्धकारमेव विचित्रैरुपपत्तिशरच्चन्द्रज्ञानालोकैर्विध्वस्यमानमपि अतिचिरतरकालाभ्यासवासना-
विस्तराभिवृद्धमद्यापि न विध्वस्यते न निवर्तते । यदि हि तथागतो नाम कश्चित् स्यात्
स्वभावतः, तदा तस्य महता कालेनाभिनिष्पत्तेर्भवसंततिः स्यात् । न च तथागतो
नाम कश्चिद् भावस्वभावत उपलभ्यते । केवलं तु भवानविद्यातिमिरोपहतमतिनयनतया द्विचन्द्र- 15
केशमशकादिवन्मिथ्या तथागतं नाम स्वभावत उपलभते । यथा च तथागतो नास्ति स्वभावतः,
तथा प्रतिपादयन्नाह —

**स्कन्धा न नान्यः स्कन्धेभ्यो नास्मिन् स्कन्धा न तेषु सः ।**
**तथागतः स्कन्धवान्न कतमोऽत्र तथागतः ॥ १ ॥**

यदि हि तथागतो नाम कश्चित् पदार्थोऽमलो निष्प्रपञ्चः स्यात्, स स्कन्धस्वभावो वा 20
भवेत्, रूपवेदनासंज्ञासंस्कारविज्ञानाख्यस्कन्धपञ्चकस्वभावो वा भवेत् । यदि वा शीलसमाधि-
प्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनाख्यपञ्चस्कन्धस्वभावः, तद्व्यतिरिक्तो वा भवेत् । पूर्वका एव पञ्च B 433
स्कन्धाः सत्त्वप्रज्ञप्तिनिमित्तत्वादिह विचारे परिगृह्यन्ते नोत्तरे, अव्यापकत्वादेषां पूर्वकैरन्तर्भावित-
त्वादिति ॥

यदि वा पञ्चस्कन्धव्यतिरिक्तो भवेत्, तत्र तथागते वा स्कन्धाः स्युः, स्कन्धेषु वा स 25
भवेत्, तथागतो वा स्कन्धवान् भवेत् धनवानिव देवदत्तः ? सर्वथा च विचार्यमाणो न संभवति ।
कथं कृत्वा ? तत्र तावत् स्कन्धा एव न तथागतः । किं कारणम् ? उक्तं हि —

यदिन्धनं स चेदग्निरेकत्वं कर्तृकर्मणोः ।

[म० शा० — १०·१]

---

१ T om. from महा° upto °मनसा. २ Mss. °वारिणा for °धारिणा. ३ Mss. स्वेच्छतोपभोग्य° for स्वेच्छात उपभोग्य°. ४ Mss. महाकारेण for महाकालेन which is based on T. ५ P यद्यपि for यदि. ६ P suggests that we should read कालवर्तितां. ७ T om. अमलो निष्प्रपञ्चो.

भवेदिति, तदिहापि योज्यम्,

स बुद्धो यो ह्युपादानमेकत्वं कर्तृकर्मणोः।

भवेदिति। तथा—

आत्मा स्कन्धा यदि भवेदुदयव्ययभाग्भवेत्।

[म० शा०—१८.१]

5 इत्युक्तम्, तदिहापि योज्यम्,

बुद्धः स्कन्धा यदि भवेदुदयव्ययभाग्भवेत्। इति।

एवं तावत् स्कन्धा न तथागतः॥ इदानीं नान्यः स्कन्धेभ्यस्तथागत इति। किं कारणम्? उक्तं हि—

B 434 अन्यश्चेदिन्धनादग्निरिन्धनादप्यृते भवेत्।

[म० शा०—१०.१]

10 तथा—

परत्र निरपेक्षत्वादप्रदीपनहेतुकः।
पुनरारम्भवैयर्थ्यमेवं चाकर्मकः सति॥ इति,

[म० शा०—१०.२]

तथा इहापि योज्यम्,

बुद्धोऽन्यश्चेदुपादानादुपादानं विना भवेत्।

20 तथा—

परत्र निरपेक्षत्वादनुपादानहेतुकः।
पुनरारम्भवैयर्थ्यमेवं चाकर्मकः सति॥

तथा—

स्कन्धेभ्योऽन्यो यदि भवेद्भवेदस्कन्धलक्षणः। इति।

25 अन्यत्वाभावाच्च स्कन्धादीनां तथागतस्य च, तथागते स्कन्धा नोपपद्यन्ते॥

नापि स्कन्धेषु तथागत इति उपपद्यते। उक्तं चैतन्मध्यमकावतारे पक्षद्वयव्याख्यानम्—

स्कन्धेष्वात्मा विद्यते नैव चामी
सन्ति स्कन्धा आत्मनीतीह यस्मात्।
सत्यन्यत्वे स्यादियं कल्पना वै
30 तच्चान्यत्वं नास्त्यतः कल्पनैषा॥

[मध्यमकावतार—६.१४२]

स्कन्धवानपि तथागतो यथा न भवति, तथा तत्रैवोक्तम्—

इष्टो नात्मा रूपवान्नास्ति यस्मा-
दात्मा वत्त्वार्थोपयोगो हि नातः।

मेदे गोमान् रूपवानप्यमेदे　　　B 435
तत्त्वान्यत्वेऽरूपतो नात्मनः स्तः ॥

[मध्यमकावतार – ६·१४३]

तत्त्वान्यत्वपक्षे एव तु पञ्चापि पक्षा अन्तर्गता वस्तुतः। सत्कायदृष्टिप्रवृत्त्यपेक्षया तु पञ्च पक्षाः समुपवर्ण्यन्ते आचार्येणेति विज्ञेयम्। यश्चैवं स्कन्धेषु पञ्चधा विचार्यमाणो नास्ति तथागतः, स केनान्येन आत्मना भविष्यतीति, सर्वथा न संभवत्येव तथागत इति भावस्वभावादपश्यन्त 5 आचार्यपादाः प्राहुः – कतमोऽत्र तथागत इति। नास्त्येव स कश्चित् सकलत्रैलोक्यवस्तुविपश्चिद्भाव-स्वभाव इत्यभिप्रायः। तथागताभावाच्च भवसंततिरपि द्रव्यसंततिर्नास्तीति सिद्धम्॥ १ ॥

अत्रैके वदन्ति–नैव हि स्कन्धास्तथागत इति ब्रूमः, यथोक्तदोषप्रसङ्गात्। नापि स्कन्धव्यतिरिक्तः। नापि तथागते अनास्रवान् स्कन्धान् वर्णयामः, हिमवति पर्वते इव तरुखण्डम्। नापि स्कन्धेषु, तरुखण्डे इव सिंहम्। नापि स्कन्धवन्तं वर्णयामः, लक्षणवन्तमिव चक्रवर्तिनम्, 10 एकत्वान्यत्वानभ्युपगमादेव। किं तर्हि स्कन्धानमलानुपादाय तत्त्वान्यत्वाद्यवाच्यं तथागतं व्यव-　　B 436 स्थापयामः। तस्मान्नायं विधिरस्माकं बाधक इति। अत्रोच्यते –

**बुद्धः स्कन्धानुपादाय यदि नास्ति स्वभावतः।**
**स्वभावतश्च यो नास्ति कुतः स परभावतः ॥ २ ॥**

यदि हि बुद्धो भगवानमलान् स्कन्धानुपादाय तत्त्वान्यत्वेनावक्तव्यः प्रज्ञप्यते, न 15 तर्हि स्वभावतः सोऽस्तीति व्यक्तमापद्यते, प्रतिबिम्बवदुपादाय प्रज्ञप्यमानत्वात्। यश्च इदानीं स्वभावतो नास्ति आत्मीयेन स्वरूपेण, स कथमविद्यमानः स्वभावतः स्कन्धानुपादाय परभावतो भविष्यतीति? न हि अविद्यमानो वन्ध्यातनयः परभावमपेक्ष्य भवतीति युज्यते ॥ २ ॥

अथ स्यात्–यथैव हि प्रतिबिम्बकं स्वभावतोऽसंविद्यमानमपि परभावं मुखादर्शादिकमपेक्ष्य भवति, एवं च तथागतोऽपि स्वभावतोऽसंविद्यमानः अनास्रवान् पञ्च स्कन्धानुपादाय परभावतो 20 भविष्यतीति, एवमपि—

**प्रतीत्य परभावं यः सोऽनात्मेत्युपपद्यते।**　　B 437
**यश्चानात्मा स च कथं भविष्यति तथागतः ॥ ३ ॥**

यदि प्रतिबिम्बवत् परभावं प्रतीत्य तथागतः इष्यते, एवं सति प्रतिबिम्बवदेव स तथा-गतोऽनात्मेत्युपपद्यते। न तु स्वभावत इति युज्यते। आत्मशब्दोऽयं स्वभावशब्दपर्यायः। यश्च 25 अनात्मा निःस्वभावः प्रतिबिम्बवदेव, स कथं तथागतः स्वभावरूपतो भविष्यति? अविपरीत-मार्गगतो न भविष्यतीत्यभिप्रायः ॥ ३ ॥

किं चान्यत्–इह यदि तथागतस्य कश्चित् स्वभावः स्यात्, तदा तत्स्वभावापेक्षया स्कन्धस्वभावः परभाव इति स्यात्, तं च परभावं प्रतीत्य तथागतः स्यात्। यदा तु तथागतस्य स्वभाव एव नास्ति, तदा कुतः स्कन्धानां परत्वं स्यादिति प्रतिपादयन्नाह – 30

---

१ T तथागतस्य सर्वथा असंभवं पश्यन्तः for तथागत इति... दपश्यन्तः २ T om. from कश्चित् upto स्वभावः. ३ T om. द्रव्यसंतति. ४ T om. अमलान्. ५ T om. स्वभावरूपतो.

**यदि नास्ति स्वभावश्च परभावः कथं भवेत्।**

यदा चैवं स्वभावपरभावौ न स्तः, तदा

**स्वभावपरभावाभ्यामृते कः स तथागतः ॥ ४ ॥**

पदार्थो हि भवन् स्वभावो भवेत्, परभावो वा। ताभ्यां तु विना कोऽसौ अपरः
5 पदार्थोऽस्ति, यस्तथागत इति व्यवस्थाप्यते ? तस्मान्नास्ति स्वभावतस्तथागत इति ॥ ४ ॥

B 438 किं चान्यत्—

**स्कन्धान् यद्यनुपादाय भवेत्कश्चित्तथागतः।**
**स इदानीमुपादद्यादुपादाय ततो भवेत् ॥ ५ ॥**

यदि मन्यसे—स्कन्धेभ्यस्तत्त्वान्यत्वेन अवक्तव्यस्तथागतः स्कन्धानुपादाय प्रज्ञप्यते इति,
10 तत् कदा युज्यते ? यदि स्कन्धाननुपादाय अगृहीत्वा पूर्वं कश्चित्तथागतो नाम भवेत्, स स्कन्धानुपादद्यात्। व्यतिरिक्त एव हि पूर्वसिद्धो धनाद् देवदत्तो धनस्योपादानं कुरुते, तद्वदेतान् स्कन्धाननुपादाय यदि कश्चित् तथागतः स्यात्, स इदानीं स्कन्धानुपादद्यात्, ततश्च तान् स्कन्धानुपादाय ततो भवेत् ॥ ५ ॥

विचार्यमाणस्तु सर्वथा—

15 **स्कन्धांश्चाप्यनुपादाय नास्ति कश्चित्तथागतः।**

निर्हेतुकत्वप्रसङ्गात्।

**यश्च नास्त्यनुपादाय स उपादास्यते कथम् ॥ ६ ॥**

अविद्यमानत्वादित्यभिप्रायः। यदा चैवं न किंचिदप्युपादत्ते, तदा स्कन्धानुपादाय तथागतो नाम भविष्यतीति नोपपद्यते ॥ ६ ॥

20 यदा चैवं तथागतः उपादानात्पूर्वमविद्यमानत्वात् न किंचिदुपादत्ते, तदा तदुपादानस्यापि केनचिदपि अनुपादीयमानस्य उपादानत्वं न संभवत्येवेति प्रतिपादयन्नाह—

B 439 **न भवत्यनुपादत्तमुपादानं च किंचन।**

यदा चैवमुपादानं केनचिदप्यनुपादीयमानत्वादुपादानं न भवतीति, तदा उपादानाभावादुपादातापि कश्चिन्नास्तीति प्रतिपादयन्नाह—

25 **न चास्ति निरुपादानः कथंचन तथागतः ॥ ७ ॥**

इति ॥ ७ ॥

तदेवं यथोपपादितन्यायेन—

**तत्त्वान्यत्वेन यो नास्ति मृग्यमाणश्च पञ्चधा।**
**उपादानेन स कथं प्रज्ञप्येत तथागतः ॥ ८ ॥**

30 यो हि तथागतो विचार्यमाणो मृग्यमाणः तत्त्वेन स्कन्धेभ्य एकत्वेन नास्ति, अन्यत्वेन स्कन्धेभ्यः पृथक्त्वेन च यो नास्ति, एवं तत्त्वान्यत्वासत्त्वादाधाराधेयतद्वत्पक्षपञ्चप्रकारैर्मृग्यमाणो

---

1 Mss. अनुपादातं for अनुपादत्तं. 2 P प्रज्ञप्यते for प्रज्ञप्येत.

यो नास्ति, स कथमत्यन्तोऽसंविद्यमानस्तथागतः उपादानेन शक्यः प्रज्ञपयितुम् ? इत्यतोऽपि नास्ति तथागतो नाम स्वभावतः ॥ ८ ॥

न केवलमनेन विचारेण तथागत एव नास्ति,

**यदपीदमुपादानं तत्स्वभावत्वान्न विद्यते ।**

यदपि इदमुपादानं रूपवेदनासंज्ञासंस्कारविज्ञानाख्यं स्कन्धपञ्चकम्, तदपि स्वभावेन न 5 B 440 विद्यते, प्रतीत्यसमुत्पन्नत्वात्, स्कन्धपरीक्षायां च [ म० शा० ४ ] विस्तरेण प्रतिषिद्धत्वात् ॥

अथापि स्यात्—यद्यपि स्वभावतः उपादानं नास्ति, तथापि हेतुप्रत्ययात्मकात् परभावाद्भविष्यतीति, तदापि नोपपद्यते इति प्रतिपादयन्नाह—

**स्वभावतश्च यन्नास्ति कुतस्तत्परभावतः ॥ ९ ॥**

न हि वन्ध्यासूनुः स्वभावतोऽसंविद्यमानः शक्यः परभावेन प्रज्ञपयितुमिति । अतः 10 उपादानमपि नास्ति ॥

अथवा—

यदपीदमुपादानं तत्स्वभावान्न विद्यते ।

उपादातृसापेक्षत्वादुपादातृनिरपेक्षस्य च उपादानत्वाभावान्नास्ति स्वभावसिद्धमुपादानम् । अथ यद्यपि उपादातृनिरपेक्षमुपादानं स्वभावसिद्धं न संभवति, एवं तदुपादातृ̐पेक्षमेव भवत्विति । 15 उच्यते । एवमपि —

स्वभावतश्च यन्नास्ति कुतस्तत्परभावतः ॥

स्वभावतो यदुपादानं न सिद्धम्, तदविद्यमानस्वभावं कथमुपादातुः परभावतो भविष्यतीति । तस्मादुपादानमपि नास्तीति ॥ ९ ॥

इदानीं यथाप्रसाधितमेवार्थमुपदर्शयन्नाह— 20

**एवं शून्यमुपादानमुपादाता च सर्वशः ।**

सर्वेण प्रकारेण विचार्यमाणं शून्यमुपादानं निःस्वभावम्, उपादाता च शून्यः स्वभावरहितः । तेनेदानीमुपादानेन —

**प्रज्ञप्यते च शून्येन कथं शून्यस्तथागतः ॥ १० ॥** B 441

नैव तत्संभवति यदविद्यमानेन अविद्यमानस्य तथागतस्य प्रज्ञप्तिः स्यादिति । तस्मात् 25 स्कन्धानुपादाय तथागतः प्रज्ञप्यते इति नोपपद्यते ॥

अत्राहुः—अहो बत हता प्रत्याशा अस्माकम्, ये हि नाम वयं स्वविकल्पविकल्पितातिकठिनकुदर्शनमालुतालताजालावबद्धेषु[1] निर्वाणपुरगाम्यविपरीतमार्गगमनपरिभ्रष्टेषु अनतिक्रान्तसंसाराटवीकान्तारदुर्गेषु कणभक्षाक्षपाददिगम्बरजैमिनिनैयायिकप्रभृतिषु तीर्थकरेषु अविपरीतस्वर्गापवर्गमार्गोपदेशाभिमानिषु स्पृहां परित्यज्य निरवशेषान्यतीर्थ्यमतान्धकारोपघातकं स्वर्गाप- 30 वर्गानुगाम्यविपरीतमार्गसंप्रकाशकं सद्धर्मदेशनातिपटुतरकिरणन्यासाशेषाशामुखं विविधविनेय-

---

१ Mss. °मारुता°; Dhammapada reads मालुवा.

जनमतिकमलकुड्मलविबोधनतत्परं यथावदवस्थितपदार्थतत्त्वार्थभाजनानाममलैकचक्षुर्भूतं सकल-
B 442 जगच्छरण्यभूतमद्वितीयं दशबलवैशारद्यावेणिकबुद्धधर्मामलमण्डलं महायानमहानयसारथिवरं सप्त-
बोध्यङ्गोत्तुङ्गतुरंगपदातियोजितं सकलत्रिभुवनजनजातिजरामरणसंसारकान्तारसरिदुच्छोषणतत्परं
चतुरसममाराऽरातिसमरशरसंपातविजयिनं सकलजगदसद्ग्राहराहुग्रहविग्रहोद्ग्रहनिरासिनं तथागत-
5 सवितारमज्ञानघनगहनान्धकारनिराकरणाय मोक्षार्थिनोऽनुत्तरसम्यक्संबोध्यर्थिनः शरणं प्रतिपन्नाः,
तस्य च त्वया—

एवं शून्यमुपादानमुपादाता च सर्वशः ।
प्रज्ञप्यते च शून्येन कथं शून्यस्तथागतः ॥

इत्यादिना स्वभावतोऽसत्त्वं ब्रुवता भवता हता अस्माकं मोक्षप्रत्याशा अनुत्तरसम्यक्संबोध्यागमा-
10 भिलाषः इति । तदलं भवता तथागतमहादित्यप्रच्छादकेन आकालिकघनघनावलीविसरणेन जगदन्ध-
कारोपमेनेति । उच्यते । अस्माकमेव हता प्रत्याशा भवद्विधेष्वबुधजनेषु ये हि नाम भवन्तः मोक्षकामतया
अन्यतीर्थ्यमतानि परित्यज्य भगवन्तं तथागतमपि अविपरीतं परमशास्तारं प्रतिपद्य परमगम्भीर-
मनुत्तरं सर्वतीर्थ्यवादासाधारणं नैरात्म्यसिंहनादमसहमानाः कुरङ्गमा इव स्वाधिमुक्तिदरिद्रतया
B 443 विविधकुदृष्टिव्यालमालाकुलं विपर्यस्तजनानुयातं तमेव महाघोरसंसाराटवीकान्तारचारकानुगमार्गमव-
गाहन्ते । न हि तथागताः कदाचिदप्यात्मनः स्कन्धानां वा अस्तित्वं प्रज्ञपयन्ति । यथोक्तं भगवत्याम्—

बुद्धोऽप्यायुष्मन् सुभूते मायोपमः स्वप्नोपमः । बुद्धधर्मा अप्यायुष्मन् सुभूते मायोपमाः
स्वप्नोपमाः ॥ इति ॥

[ अष्टसाहस्रिका – ३९ ]

तथा—

15 धर्म स्वभावतु शून्य विविक्तो
बोधि स्वभावतु शून्य विविक्ता ।
यो हि चरेत्स पि शून्यस्वभावो
ज्ञानवतो न तु बालजनस्य ॥ इति ।

न च वयं सर्वथैव निष्प्रपञ्चानां तथागतानां नास्तित्वं ब्रूमः, यदस्माकं तदपवादकृतो
20 दोषः स्यात् ॥ १० ॥

अपि च । निःस्वभावं हि तथागतं व्याचक्षाणेन अविपरीतार्थाभिधित्सुना योगिना सता
सर्वथा—

B 444 **शून्यमिति न वक्तव्यमशून्यमिति वा भवेत् ।**
**उभयं नोभयं चेति**

25 सर्वमेतन्न वक्तव्यमस्माभिः । किं तु अनुक्ते यथावदवस्थितं स्वभावं प्रतिपत्ता प्रतिपत्तुं न
समर्थ इत्यतो वयमपि आरोपतो व्यवहारसत्ये एव स्थित्वा व्यवहारार्थं विनेयजनानुरोधेन

---

१ T om. from महायान upto निराकरणाय. २ T. om. मोक्षप्रत्याशा...भिलाष इति. ३ T तथागतमहाभैषज्यवृक्षं निर्मूलयता सार्धं विवादेन for तथा॰ ॰पमेनेति. ४ T om. योगिना सता सर्वथा.

शून्यमित्यपि ब्रूमः, अशून्यमित्यपि, शून्याशून्यमित्यपि, नैव शून्यं नाशून्यमित्यपि ब्रूमः । अत एवाह –

**प्रज्ञप्त्यर्थं तु कथ्यते ॥ ११ ॥**

इति । यथोक्तं भगवता–

शून्याः सर्वधर्मा निःस्वभावयोगेन । निर्निमित्ताः सर्वधर्मा निर्निमित्ततामुपादाय । अप्रणिहिताः सर्वधर्मा अप्रणिधानयोगेन । प्रकृतिप्रभास्वराः सर्वधर्माः प्रज्ञापारमितापरिशुद्ध्या । इति ॥ 5

अन्यत्र अशून्यमुक्तम्–

अतीतं चेद्भिक्षवो रूपं नाभविष्यन्न श्रुतवानार्यश्रावकोऽतीतं रूपमभ्यनन्दिष्यत् । यस्मात्तर्हि भिक्षवः अस्ति अतीतं रूपम्, तस्मादार्यश्रावकः श्रुतवानतीतं रूपमभिनन्दतीति । अनागतं चेद्भिक्षवः – इत्यादि । एवं यावत् अतीतं चेद्भिक्षवो विज्ञानं नाभविष्यत् – इत्यादि पूर्ववत् ॥ 10

तथा सौत्रान्तिकमते अतीतानागतं शून्यम्, अन्यदशून्यम् । विप्रयुक्ता विज्ञप्तिः शून्या । विज्ञानवादेऽपि कल्पितस्वभावस्य शून्यत्वम्, अप्रतीत्यसमुत्पन्नत्वात्, तैमिरिकद्विचन्द्रादिदर्शनवत् । B 445

न शून्यं नापि चाशून्यं तस्मात्सर्वं विधीयते । 15
[ तथा ] सत्त्वादसत्त्वाच्च मध्यमा प्रतिपच्च सा ॥ इति ॥

[ मध्यान्तविभाग ? ]

येन त्वभिप्रायेण शून्यत्वादिकमुपदिश्यते, स आत्मपरीक्षातो [ म० शा० १८ ] बोद्धव्यः । यथोक्तं सूत्रे –

मायोपमं जगदिदं भवता 20
नटरङ्गस्वप्नसदृशं विहितम् ।
नात्मा न सत्त्व न च जीवगती
धर्मा मरीचिदकचन्द्रसमाः ॥
शून्यं च शान्तमनुपादमयं
अविजानदेव जगदुद्भ्रमती । 25
तेषामुपायनययुक्तिशतै-
[1]रवतारयस्यपि कृपालुतया ॥
रागादिभिश्च बहुरोगशतैः
संत्रासितं सकलमीक्षि जगत् ।
वैद्योपमो विचरसेऽप्रतिमो
परिमोचयं सुगत सत्त्वशतान् ॥ 30

---

1 T om. this stanza and the following.

B 446

रथचक्रवद् भ्रमति सर्वजगत्
तिर्यक्षु प्रेतनिरयेषु गताः ।
मूढा अदेशिक अनाथगताः
तेषां प्रदर्शयसि मार्गवरम् ॥ इति ।

5 सर्वास्त्वेताः कल्पना निष्प्रपञ्चे तथागते न संभवन्ति ॥ ११ ॥

न च केवलं शून्यत्वादिकमेव चतुष्टयं तथागते न संभवति, अपि च –

**शाश्वताशाश्वताद्या कुतः शान्ते चतुष्टयम् ।**
**अन्तानन्तादि चाप्यत्र कुतः शान्ते चतुष्टयम् ॥ १२ ॥**

इह चतुर्दश अव्याकृतवस्तूनि भगवता निर्दिष्टानि । तद्यथा—शाश्वतो लोकः, अशाश्वतो 10 लोकः, शाश्वतश्च अशाश्वतश्च लोकः, नैव शाश्वतो नाशाश्वतश्च लोकः, इति चतुष्टयम् । अन्तवान् लोकः, अनन्तवान् लोकः, अन्तवांश्च अनन्तवांश्च लोकः, नैव अन्तवान् न अनन्तवांश्च लोकः, इति द्वितीयम् । भवति तथागतः परं मरणात्, न भवति तथागतः परं मरणात्, भवति च न भवति च तथागतः परं मरणात्, नैव भवति न न भवति च तथागतः परं मरणात्, इति तृतीयम् । स जीवस्तच्छरीरम्, अन्यो जीवोऽन्यच्छरीरम्, इति । तान्येतानि 15 चतुर्दश वस्तूनि अव्याकृतत्वादव्याकृतवस्तूनि इत्युच्यन्ते । तत्र यथोपवर्णितेन न्यायेन यथा शून्यत्वादिकं चतुष्टयं प्रकृत्या शान्ते निःस्वभावे तथागते न संभवति, एवं शाश्वताशाश्वतादिकमपि चतुष्टयमत्र न संभवति । असंभवादेव च चतुष्टयं वन्ध्यापुत्रस्य श्यामगौरत्वादिवत् न व्याकृतं भगवता लोकस्य । यथा च एतच्चतुष्टयं तथागते न संभवति, एवमन्तानन्तादिकमपि शान्ते तथागते न संभवति ॥ १२ ॥

B 447

20 इदानीं भवति तथागतः परं मरणात् इत्यादिकस्यापि कल्पनाचतुष्टयस्य प्रवृत्त्यसंभवमुद्भावयन्नाह –

**येन ग्राहो गृहीतस्तु घनोऽस्तीति तथागतः ।**
**नास्तीति स विकल्पयन्निर्वृतस्यापि कल्पयेत् ॥ १३ ॥**

येन हि घनतरो[1] महताभिनिवेशेन अस्ति तथागतः इति ग्राहो गृहीतः, परिकल्प 25 उत्पादितः, सः नियतं परिनिर्वृते तथागते, न भवति तथागतः परं मरणात्, मरणादुत्तरकालं न भवति, उच्छिन्नस्तथागतः, न संविद्यते, इति परिकल्पयेत् । तस्य एवं विकल्पयतः स्याद् दृष्टिकृतम् ॥ १३ ॥

यस्य तु न कस्यांचिदप्यवस्थायां स्वभावशून्यत्वात् तथागतस्य अस्तित्वनास्तित्वम्, तस्य पक्षे –

30 **स्वभावतश्च शून्येऽस्मिंश्चिन्ता नैवोपपद्यते ।**
**परं निरोधाद्भवति बुद्धो न भवतीति वा ॥ १४ ॥**

आकाशे चित्ररूपकल्पनावदेषा कल्पना नास्तीत्यभिप्रायः ॥ १४ ॥

---

1 T om. घनतरो.

तदेवं प्रकृतिशान्ते निःस्वभावे तथागते सर्वप्रपञ्चातीते मन्दबुद्धितया शाश्वताशाश्वतादिकया नित्यानित्यास्तिनास्तिशून्याशून्यसर्वज्ञासर्वज्ञादिकया कल्पनया— B 448

**प्रपञ्चयन्ति ये बुद्धं प्रपञ्चातीतमव्ययम् ।**
**ते प्रपञ्चहताः सर्वे न पश्यन्ति तथागतम् ॥ १५ ॥**

वस्तुनिबन्धना हि प्रपञ्चाः स्युः, अवस्तुकश्च तथागतः। कुतः प्रपञ्चानां प्रवृत्तिसंभव इति ? 5 अतः प्रपञ्चातीतस्तथागतः। अनुत्पादस्वभावत्वाच्च स्वभावान्तरागमनादव्ययः। तमित्थंविधं तथागतं स्वोत्प्रेक्षितमिथ्यापरिकल्पमलमलिनमानसतया विविधैरभूतैः परिकल्पविशेषैः ये बुद्धं भगवन्तं प्रपञ्चयन्ति, ते स्वकैरेव प्रपञ्चैर्हताः सन्तः तथागतगुणसमृद्धेरत्यन्तपरोक्षवर्तिनो भवन्ति । ततश्च शवभूताः एतस्मिन् प्रवचने न पश्यन्ति तथागतं जात्यन्धा इवादित्यम्। अत एवाह भगवान्— 10

ये मां रूपेण अद्राक्षुर्ये मां घोषेण अन्वयुः ।
मिथ्याप्रहाणप्रसृता न मां द्रक्ष्यन्ति ते जनाः ॥

धर्मतो बुद्धा द्रष्टव्या धर्मकाया हि नायकाः ।
धर्मता चाप्यविज्ञेया न सा शक्या विजानितुम् ॥

[ वज्रच्छेदिका-४३ ]

इति ॥ १५ ॥ 15

तदत्र तथागतपरीक्षायां सत्त्वलोकः सकलः ससुरासुरनरादिः परीक्षितः। यथा चायं सत्त्वलोको निःस्वभावः, तथा भाजनलोकस्यापि वायुमण्डलादेरकनिष्ठवितानभवनपर्यन्तस्य नैःस्वाभाव्यमुद्भावयन्नाह—

**तथागतो यत्स्वभावस्तत्स्वभावमिदं जगत् ।**

इदं जगदिति अयं भाजनलोक इत्यर्थः। किंस्वभावस्तथागतः पुनरित्याह— 20 B 449

**तथागतो निःस्वभावो निःस्वभावमिदं जगत् ॥ १६ ॥**

इति। यथा च जगतो नैःस्वाभाव्यम्, तथा प्रत्ययपरीक्षादिभिः प्रतिपादितम्। अत एवोक्तं सूत्रे —

अनुपादधर्मः सततं तथागतः
सर्वे च धर्माः सुगतेन सादृशाः। 25
निमित्तग्राहेण तु बालबुद्धयः
असत्सु धर्मेषु चरन्ति लोके॥
तथागतो हि प्रतिबिम्बभूतः
कुशलस्य धर्मस्य अनास्रवस्य।
नैवात्र तथता न तथागतोऽस्ति 30
बिम्बं च संदृश्यति सर्वलोके॥ इति।

उक्तं च भगवत्यां प्रज्ञापारमितायाम्—

अथ खलु ते देवपुत्राः आयुष्मन्तं सुभूतिं स्थविरमेतदवोचन्— किं पुनरार्यसुभूते मायोपमास्ते सत्त्वाः, न ते माया? एवमुक्ते आयुष्मान् सुभूतिस्तान् देवपुत्रानेतदवोचत्—मायोपमास्ते देवपुत्राः सत्त्वाः, स्वप्नोपमास्ते देवपुत्राः सत्त्वाः। इति हि माया च सत्त्वाश्च अद्वयमेत-
5 दद्वैधीकारम्। इति हि स्वप्नश्च सत्त्वाश्च अद्वयमेतदद्वैधीकारम्। सर्वधर्मा अपि देवपुत्रा मायोपमाः
B 450 स्वप्नोपमाः। स्रोतआपन्नोऽपि मायोपमः स्वप्नोपमः। स्रोतआपत्तिफलमपि मायोपमं स्वप्नोपमम्। एवं सकृदागाम्यपि सकृदागामिफलमपि। अनागाम्यपि अनागामिफलमपि। अर्हन्नपि मायोपमः स्वप्नोपमः। अर्हत्त्वफलमपि मायोपमं स्वप्नोपमम्। प्रत्येकबुद्धोऽपि मायोपमः स्वप्नोपमः। प्रत्येकबुद्धत्वमपि मायोपमं स्वप्नोपमम्। सम्यक्संबुद्धोऽपि मायोपमः स्वप्नोपमः इति। सम्यक्संबुद्धत्वमपि
10 मायोपमं स्वप्नोपममिति वदामि॥

अथ खलु देवपुत्रा आयुष्मन्तं सुभूतिमेतदवोचन्—सम्यक्संबुद्धोऽपि मायोपमः स्वप्नोपम इति, सम्यक्संबुद्धत्वमपि मायोपमं स्वप्नोपममिति आर्यसुभूते वदसि? सुभूतिराह—निर्वाणमपि देवपुत्रा मायोपमं स्वप्नोपममिति वदामि, किं पुनरन्यं धर्मम्? देवपुत्रा आहुः—निर्वाणमप्यार्यसुभूते मायोपमं स्वप्नोपममिति वदसि? सुभूतिराह—यद्यपि देवपुत्रा निर्वाणादप्यन्यः
15 कश्चिद्धर्मो विशिष्टतरः स्यात्, तमप्यहं मायोपमं स्वप्नोपममिति वदेयम्। इति हि माया च निर्वाणं च अद्वयमेतदद्वैधीकारमिति॥

[अष्टसाहस्रिका – ३९]

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
तथागतपरीक्षा नाम द्वाविंशतितमं प्रकरणम्॥

## विपर्यासपरीक्षा त्रयोविंशतितमं प्रकरणम् ।

अत्राह – विद्यत एव भवसंततिः, तत्कारणसद्भावात् । इह हि क्लेशेभ्यः कर्म प्रवर्तते । B 451
कर्मक्लेशहेतुका जन्ममरणपरंपरा उपजायते । सा च भवसंततिर्व्यपदिश्यते । तस्याश्च प्रधानं
कारणं क्लेशाः, प्रहीणक्लेशानां भवसंततेरभावात् । ते च रागादयः क्लेशाः सन्ति । तस्मात्
कार्यभूतापि जन्ममरणपरंपरा अविच्छेदप्रवन्धेन भवसंततिरपि भविष्यतीति । उच्यते । स्याद् 5
भवसंततिः, यदि तद्धेतुभूताः क्लेशाः स्युः । न तु सन्ति । कथं कृत्वा ? इह भगवद्भिर्बुद्धैः
सकलत्रिभुवनजनसंक्लेशशत्रुविध्वंसिभिश्चतुर्माराराातिसमरपराजयैः[1] –

**संकल्पप्रभवो रागो द्वेषो मोहश्च कथ्यते ।**
**शुभाशुभविपर्यासान् संभवन्ति प्रतीत्य हि ॥ १ ॥**

संकल्पो वितर्कः । संकल्पात् प्रभवतीति संकल्पप्रभवः । 10

काम जानामि ते मूलं संकल्पात्किल जायसे ।
न त्वां संकल्पयिष्यामि ततो मे न भविष्यसि ॥

[ महावस्तु– ३.१९० ]

इति गाथाभिधानात्

संकल्पप्रभवो रागो द्वेषो मोहश्च कथ्यते ।

B 452

एतन्मूलकत्वादन्येषां क्लेशानां मुख्यत्वादेषामेवोपादानं त्रयाणाम् । एते च त्रयः क्लेशाः– 15

शुभाशुभविपर्यासान् संभवन्ति प्रतीत्य हि ।

तत्र हि शुभमाकारं प्रतीत्य राग उत्पद्यते, अशुभं प्रतीत्य द्वेषः, विपर्यासान् प्रतीत्य
मोह उत्पद्यते । संकल्पस्तु एषां त्रयाणामपि साधारणकारणमुत्पत्तौ । कथं पुनर्मोहः संकल्पप्रभवः ?
उच्यते । उक्तं हि प्रतीत्यसमुत्पादे भगवता –

अविद्यापि भिक्षवः सहेतुका सप्रत्यया सनिदाना । कश्च भिक्षवः अविद्याया हेतुः ? 20
अयोनिशो भिक्षवो मनस्कारोऽविद्याया हेतुः । आविलो मोहजो मनस्कारो भिक्षवोऽविद्याया हेतुः ॥

इत्यतः अविद्या संकल्पप्रभवा भवति ॥ १ ॥

B 453

ततश्च–

**शुभाशुभविपर्यासान् संभवन्ति प्रतीत्य ये ।**
**ते स्वभावान्न विद्यन्ते तस्मात् क्लेशा न तत्त्वतः ॥ २ ॥**

इति । यदि रागादयः स्वभावसिद्धाः स्युः, नैव ते शुभाशुभविपर्यासान् प्रतीत्य 25
संभवेयुः, स्वभावस्य अकृत्रिमत्वात् परनिरपेक्षत्वाच्च । भवन्ति च शुभाशुभविपर्यासान् प्रतीत्य,
तस्मान्निःस्वभावा एव ते । तत्त्वतो न विद्यन्ते, परमार्थतः स्वभावतो न विद्यन्ते इत्यर्थः ॥ २ ॥

---

1 T om. from सकल° upto° पराजयैः.

अपि च—

आत्मनोऽस्तित्वनास्तित्वे न कथंचिच्च सिध्यतः ।
तं विनास्तित्वनास्तित्वे क्लेशानां सिध्यतः कथम् ॥ ३ ॥

आत्मनो यथा अस्तित्वनास्तित्वे न स्तः, तथा उक्तं विस्तरेण । ततश्च—तदाश्रितस्य
5 धर्मस्य कुतोऽस्तित्वनास्तित्वे भविष्यतः ? ॥ ३ ॥

अथ स्यात्—यदि अस्तित्वनास्तित्वे आत्मनो न स्तः, तदा किमत्र क्लेशानामायातम्, यतस्तेषामपि अस्तित्वनास्तित्वे न स्तः इति ? उच्यते—

कस्यचिद्धि भवन्तीमे क्लेशाः स च न सिध्यति ।
B 454 कश्चिदाहो विना कंचित्सन्ति क्लेशा न कस्यचित् ॥ ४ ॥

10 इह अमी रागादयः कुड्यं चित्रवत् फलं पक्तादिवच्च उत्पत्तौ आश्रयमपेक्षन्ते । ततश्च कस्यचिदेते भवन्ति, न विना कंचिदाश्रयम् । स च आश्रयः परिकल्प्यमानः आत्मा वा चित्तं वा भवेत् । स चैषामाश्रयः पूर्वमेव प्रतिषिद्धत्वान्नास्ति । तं च कंचिदाश्रयं विना कस्य क्लेशा भवन्तु ? नैव कस्यचिद्भवन्ति, तस्याविद्यमानत्वात्, आहो विना कंचित् सन्ति क्लेशा न कस्यचित् ॥ ४ ॥

15 अत्राह—नैव हि क्लेशानां कश्चिदाश्रयः पूर्वं सिद्धोऽभ्युपगम्यते । न च आत्मा नाम कश्चिदस्ति, यः आश्रयत्वेन व्यवस्थाप्येत, निर्हेतुकत्वाद् व्योमचूततरुवत् । किं तर्हि क्लिष्टं चित्तं प्रतीत्य क्लेशा उपजायन्ते, तच्च चित्तं सहैव क्लेशैरुपजायत इति । एतदपि न युक्तमित्याह—

स्वकायदृष्टिवत् क्लेशाः क्लिष्टे सन्ति न पञ्चधा ।
स्वकायदृष्टिवत् क्लिष्टं क्लेशेष्वपि न पञ्चधा ॥ ५ ॥

20 स्वकायो हि नाम रूपादिलक्षणसंहतिः । स्वकायदृष्टिः[1] स्वकाये आत्मदृष्टिः आत्मीयाकारग्रहणप्रवृत्ता । यथेयं पञ्चधा विचार्यमाणा स्वकाये न संभवति,

स्कन्धा न नान्यः स्कन्धेभ्यो नास्मिन् स्कन्धा न तेषु सः ।
तथागतः स्कन्धवान्न कतमोऽत्र तथागतः ॥

B 455 [म० शा० -२२.१]

इत्यनेन । एवं क्लिष्टेऽपि क्लेशा विचार्यमाणाः पञ्चधा न संभवन्ति । तत्र क्लिश्यन्तीति क्लेशाः,
25 क्लिश्यते इति क्लिष्टम् । तत्र यदेव क्लिष्टं तदेव क्लेशा इति न युज्यते दग्धृदाह्ययोरप्येकत्वप्रसङ्गात् । अन्यत् क्लिष्टम्, अन्ये क्लेशा इति न युज्यते । परत्र निरपेक्षत्वात्, अक्लिष्टहेतुकक्लेशप्रसङ्गात् । अत एव च एकत्वान्यत्वाभावादाधाराधेयतद्वत्पक्षाणां च अभावान्न क्लेशेषु क्लिष्टम्, न क्लिष्टे क्लेशाः, नापि क्लेशवत् क्लिष्टम् । इत्येवं क्लिष्टे पञ्चधा विचार्यमाणाः क्लेशा न संभवन्ति । यथा च क्लिष्टहेतुकाः क्लेशा न संभवन्ति, एवं क्लेशहेतुकमपि क्लिष्टं क्लेशेषु विचार्य-
30 माणं पञ्चधा न संभवति । न हि क्लेशा एव क्लिष्टम्, कर्तृकर्मणोरेकत्वप्रसङ्गात्, नान्ये क्लेशा अन्यत् क्लिष्टम्, निरपेक्षत्वप्रसङ्गात्, न च क्लिष्टे क्लेशाः, न च क्लेशेषु क्लिष्टम्, न क्लिष्टवन्तः

[1] T स्वकाये दृष्टिः स्वकायदृष्टिः आत्मीया° for स्वकायदृष्टिः स्वकाये आत्मदृष्टिः आत्मीया°.

क्लेशाः। इत्येवं स्वकायदृष्टिवदेव क्लिष्टं क्लेशोऽपि पञ्चधा नास्ति। यतश्चैवम्, अतः परस्परापेक्षयापि क्लेशक्लिष्टयोर्नास्ति सिद्धिः॥ ५॥

अत्राह—यद्यपि त्वया क्लेशाः प्रतिषिद्धाः, तथापि क्लेशहेतवः शुभाशुभविपर्यासास्तावत् सन्ति, तत्सद्भावाच्च क्लेशाः सन्तीति। उच्यते। स्युः क्लेशाः, यदि शुभाशुभविपर्यासा एव स्युः, यावता[1] एतेऽपि प्रतीत्य समुत्पन्नत्वाद्वक्ष्यमाणप्रतिषेधाच्च। यदा च ते न सन्ति स्वभावतः, तदा— 5

**स्वभावतो न विद्यन्ते शुभाशुभविपर्ययाः।**

प्रतीत्यसमुत्पन्नत्वाद्वक्ष्यमाणप्रतिषेधाच्च। यदा च ते न सन्ति स्वभावतः, तदा—

**प्रतीत्य कतमान् क्लेशाः शुभाशुभविपर्ययान्॥ ६॥**

नैव सन्ति क्लेशाः, तद्धेतुशुभाशुभविपर्ययाभावादित्यभिप्रायः॥ ६॥

अत्राह—विद्यन्त एव क्लेशाः, तदालम्बनसद्भावात्। इह हि यन्नास्ति, न तस्यालम्बनमस्ति, तद्यथा वन्ध्यासूनोः। अस्ति च रूपशब्दगन्धरसस्प्रष्टव्यधर्माख्यं षड्विधमालम्बनम्। तस्मादालम्बनसद्भावाद्विद्यन्त एव क्लेशा इति। उच्यते। अस्त्येतत्, यद् भवद्भिः— 10 B 456

**रूपशब्दरसस्पर्शा गन्धा धर्माश्च षड्विधम्।**
**वस्तु रागस्य द्वेषस्य मोहस्य च विकल्प्यते॥ ७॥**

तत्र वस्तु आलम्बनम्, वसतीति वा अस्मिन् रागादिकम्, तदुत्पत्तेः इति कृत्वा। तच्च तदालम्बनं षोढा भवति, इन्द्रियाणां षण्णां परिच्छेदकराणामन्योन्यभेदात्। रूपं शब्दा गन्धा रसाः स्प्रष्टव्यानि धर्माश्चेति। तत्र इदमिहामुत्रेति निरूपणात्, रूपणाच्च रूपम्। तेन शब्देन शब्द्यन्ते प्रकाश्यन्ते पदार्था इति शब्दः। गन्ध्यन्ते हिंस्यन्ते यत्र प्राप्ताः ततोऽन्यत्रागमनाद् गन्धाः। रस्यते आस्वाद्यते इति रसः। स्पृश्यते इति स्पर्शः। स्वलक्षणासाधारणान्निर्वाणाग्रधर्माधारणाद्धर्माः। तदेतत् षड्विधं वस्तु भवति। कस्य? रागस्य द्वेषस्य मोहस्य। तत्र रञ्जनं रागो रक्तिरध्यवसानम्। रज्यते वा अनेन चित्तमिति रागः। दूषणं दोषः, आघातः सत्त्वविषयोऽसत्त्वविषयो वा। दूष्यते वा अनेन चित्तमिति दोषः। मोहनं मोहः संमोहः पदार्थस्वरूपापरिज्ञानम्। मुह्यते वा अनेन चित्तमिति मोहः। तदेषां क्लेशानां रूपादिकं षड्विधं वस्तु आलम्बनं भवति। तत्र शुभाकाराध्यारोपेण यथा रूपादिभ्यो राग उपजायते, अशुभाकाराध्यारोपेण द्वेषः, नित्यात्माद्यध्यारोपेण मोहः संभवतीति॥ ७॥ 15 B 457 20 25

सत्यं विकल्प्यते एतद्बालजनैः षड्विधं वस्तु। किं तु अविद्यमानस्वभावसत्ताकमेतद् रागादीनामालम्बनत्वेन परिकल्प्यते भवता तैमिरिकैरिव असत्केशमशकमक्षिकाद्विचन्द्रादिकमिति प्रतिपादयन्नाह—

**रूपशब्दरसस्पर्शा गन्धा धर्माश्च केवलाः।**

---

१ T यस्मात् for यावता एतेऽपि.

केवला इति परिकल्पितमात्रा निःस्वभावा इत्यर्थः । यदि निःस्वभावाः, कथं तर्हि उपलभ्यन्ते इति ? उच्यते —

**गन्धर्वनगराकारा मरीचिस्वप्नसंनिभाः ॥ ८ ॥**

इति एते उपलभ्यन्ते ॥ ८ ॥

5 यथा गन्धर्वनगरादिप्रख्या एते केवलं विपर्यासादुपलभ्यन्ते, तदा —

B 458

**अशुभं वा शुभं वापि कुतस्तेषु भविष्यति ।**
**मायापुरुषकल्पेषु प्रतिबिम्बसमेषु च ॥ ९ ॥**

तदनेन मिथ्याश्रयसमुत्पन्नत्वाच्छुभाशुभयोरपि निमित्तयोर्मृषात्वमेव भवति । यथोक्तम् —

अहंकारोद्भवाः स्कन्धाः सोऽहंकारोऽनृतोऽर्थतः ।
10 बीजं यस्यानृतं तस्य प्ररोहः सत्यतः कुतः ॥
स्कन्धानसत्यान् दृष्ट्वैवमहंकारः प्रहीयते ।
अहंकारप्रहाणाच्च न पुनः स्कन्धसंभवः ॥

इति ॥ ९ ॥

न च केवलमाश्रयमिथ्यात्वे शुभाशुभयोर्निमित्तयोर्मिथ्यात्वम्, अपि च अनयाप्युपपत्त्या
15 अनयोर्मिथ्यात्वमिति प्रतिपादयन्नाह —

**अनपेक्ष्य शुभं नास्त्यशुभं प्रज्ञपयेमहि ।**
**यत्प्रतीत्य शुभं तस्माच्छुभं नैवोपपद्यते ॥ १० ॥**

इह यदि शुभं नाम किंचित् स्यात्, नियतं तदशुभमपेक्ष्य भवेत्, पारावारवत्,
B 459 बीजाङ्कुरवत्, ह्रस्वदीर्घवद्वा, शुभस्य संबन्ध्यन्तरपदार्थसापेक्षत्वात् । तच्चाप्यपेक्षणीयमशुभं शुभेन
20 विना नास्ति । [ अनपेक्ष्य शुभं नास्त्यशुभं ] शुभं निरपेक्ष्याशुभं नास्तीत्यभिप्रायः । यदशुभं प्रतीत्य यदशुभमपेक्ष्य शुभं प्रज्ञपयेमहि व्यवस्थापयेमहि । यच्छब्देन अनन्तरस्याशुभस्य परामर्शः । प्रज्ञपयेमहीत्यनेन उत्तरस्य शुभस्य संबन्धः । यतश्च एवं शुभस्य प्रज्ञप्तौ संबन्ध्यन्तरमपेक्षणीय-मशुभाख्यं पदार्थान्तरं नास्ति, तस्माच्छुभं नैवोपपद्यते ह्रस्वासंभवादिव दीर्घम्, पारासंभवादिव अवारमित्यभिप्रायः ॥ १० ॥

25 इदानीमशुभमपि यथा न संभवति, तथा प्रतिपादयन्नाह—

**अनपेक्ष्याशुभं नास्ति शुभं प्रज्ञपयेमहि ।**
**यत्प्रतीत्याशुभं तस्मादशुभं नैव विद्यते ॥ ११ ॥**

यदि हि अशुभं नाम किंचित् स्यात्, नियतमेव तच्छुभमपेक्ष्य भवेत्, पारावारवत्, ह्रस्वदीर्घवद्वा, अशुभस्य संबन्ध्यन्तरपदार्थसापेक्षत्वात् । तच्चाप्यपेक्षणीयं शुभमशुभेन विना
30 नास्ति, अनपेक्ष्याशुभं नास्ति शुभम् । अशुभं निरपेक्ष्य शुभं न संभवतीत्यभिप्रायः । यच्छुभं प्रतीत्य यच्छुभमपेक्ष्य अशुभं प्रज्ञपयेमहि, अशुभं व्यवस्थापयेमहि । अत्रापि यच्छब्देन अनन्तरस्य

---

१ T °केशादिकं for केश[illegible]दिकं. २ T om. this stanza.

शुभस्य परामर्शः । प्रज्ञपयेमहीत्यनेन च उत्तरस्याशुभस्य संबन्धः । यतश्चैवमशुभस्य प्रज्ञप्तौ संबन्ध्यन्तरमपेक्षणीयं शुभाख्यं पदार्थान्तरं नास्ति, तस्मादशुभं नैव विद्यते ॥ ११ ॥

यतश्चैवं शुभाशुभयोरसंभवः, अतः—

**अविद्यमाने च शुभे कुतो रागो भविष्यति[१]।**
**अशुभेऽविद्यमाने च कुतो द्वेषो भविष्यति ॥ १२ ॥** 5

शुभाशुभनिमित्तकयो रागद्वेषयोः शुभाशुभनिमित्ताभावे सति निर्हेतुकत्वान्नास्ति संभव इत्यभिप्रायः ॥ १२ ॥ B 460

तदेवं शुभाशुभनिमित्ताभावेन रागद्वेषयोरभावमुपपाद्य विपर्यासस्वभावाभावप्रतिपादनेन मोहस्याप्यधुना स्वभावाभावं प्रतिपादयन्नाह—

**अनित्ये नित्यमित्येवं यदि ग्राहो विपर्ययः ।** 10
**नानित्यं विद्यते शून्ये कुतो ग्राहो विपर्ययः ॥ १३ ॥**

इह चत्वारो विपर्यासा उच्यन्ते । तद्यथा—अनित्ये प्रतिक्षणविनाशिनि स्कन्धपञ्चके यो नित्यमिति ग्राहः, स विपर्यासः । तथा—

अनित्यस्य ध्रुवा पीडा पीडा यस्य न तत्सुखम् ।
तस्मादनित्यं यत्सर्वं दुःखं तदिति जायते ॥ 15

इत्यमुना न्यायेन यदनित्यं तद्दुःखम्, सर्वसंस्काराश्च अनित्याः, तस्माद्दुःखात्मके स्कन्धपञ्चके यः सुखमिति विपरीतो ग्राहः, सोऽपरो विपर्यासः । तथा—

शुक्रशोणितसंपर्कबीजं विण्मूत्रवर्धितम् ।
अमेध्यरूपमाजानन् रज्यसेऽत्र कयेच्छया ॥
अमेध्यपुञ्जप्रच्छन्ने तत्क्लेदार्द्रेण चर्मणा । 20 B 461
यः शयीत स नारीणां शयीत जघनोदरे ॥ इत्यादि ।

एवमिदं शरीरं सर्वात्मना सततमशुचिस्वभावम् । तत्र यो मोहाच्छुचित्वेन ग्राहोऽभिनिवेशः, स विपर्यासः । तथा पञ्चस्कन्धकमात्मलक्षणविलक्षणमस्थिरत्वादुदयव्ययधर्मित्वाच्च निरात्मकमात्मस्वभावशून्यम्, तस्मिन् य आत्मग्राहोऽभिनिवेशः अनात्मनि आत्माभिनिवेशः, स विपर्यासः । इत्येते चत्वारो विपर्यासाः संमोहस्य हेतुभूताः ॥ 25

अत्रेदानीं विचार्यते—यदि नित्यत्वं नित्यदर्शनं स्वभावशून्येषु नित्यग्राहो विपर्यास इत्येवं व्यवस्थाप्यते, ननु च स्वभावशून्येषु स्कन्धेषु अनित्यत्वमपि नास्ति, इति

नानित्यं विद्यते शून्ये कुतो ग्राहो विपर्ययः ।

अनित्यत्वं हि विपरीतमपेक्ष्य नित्यत्वं विपर्यास इति व्यवस्थाप्यते । न च अनित्यत्वं विद्यते शून्ये । यदा अनित्यत्वस्याभावः, तदा कुतस्तद्विरोधि नित्यत्वं नित्य[२]दर्शनविपर्यासो भविष्यतीति भावः । 30

---

१ T om. this stanza. २ T om. नित्यदर्शन.

तस्मान्नास्ति विपर्यासः। यथा च अनित्यत्वं शून्ये न संभवति भावस्वभावरहिते सस्वभावेन अनुत्पन्ने, एवं दुःखत्वमपि न संभवति, अशुचित्वमपि नास्ति। अनात्मकत्वमपि नास्ति। यदा च स्वभावशून्यत्वाद्दुःखत्वादिकं नास्ति, तदा कुतस्तद्विपक्षभूता नित्यसुखशुच्यात्मविपर्यासा भविष्यन्ति? तस्मात् सन्ति विपर्यासाः स्वरूपतः। तदभावे कुतो भविष्यत्यविद्या? हेत्वभावात्।

B 462 5 यथोक्तं भगवता—

अविद्यया नैव कदाचि विद्यते
अविद्यत प्रत्ययसंभवश्च।
अविद्यमानेयमविद्य लोके
तस्मान्मया उक्त अविद्य एषा॥

10 तथा—

कथं भगवन् मोहो धारणीपदम्? भगवानाह—अत्यन्तमुक्तो हि मञ्जुश्रीः मोहः, तेनोच्यते मोहः।

इत्यादिना विपर्यय इति व्यवस्थाप्यते॥ १३॥

ननु एवं सति स्वभावेन अविद्यमाने पदार्थे अनित्यमित्यपि ग्राहो न संभवति इति 15 असावपि कस्मान्न विपर्यास इति व्यवस्थाप्यते इति प्रतिपादयन्नाह—

**अनित्ये नित्यमित्येवं यदि ग्राहो विपर्ययः।**
**अनित्यमित्यपि ग्राहः शून्ये किं न विपर्ययः॥ १४॥**

यदा च उभयस्यापि वैपरीत्यं नित्यस्य अनित्यस्य च, तदा तद्व्यतिरिक्तं तृतीयमपरं नास्ति यन्न विपर्ययः स्यात्। यदा च अविपर्यासो नास्ति, तदा किमपेक्षो विपर्यासः स्यादिति। 20 तस्मादमुनापि न्यायेन नास्ति विपर्ययः। तस्याभावाच्च नास्त्यविद्या स्वरूपतः। यथा च अनित्ये नित्यमित्येवं ग्राहो विपर्यासो न संभवति, एवं शेषविपर्यासासंभवेऽपि योज्यम्। अत एवोक्तं भगवता आर्यदृढाशयपरिपृच्छायाम्—

B 463 भगवानाह—किमेतत् कुलपुत्र तस्य भवति यो मार्गेण निःसरणं पर्येषते? न कुलपुत्र तथागतेन रञ्जनीयान् धर्मान् परिवर्ज्य रागप्रहाणं प्रज्ञप्तम्, एवं न दोषणीयान् मोहनीयान् 25 धर्मान् परिवर्ज्य तथागतेन दोषमोहप्रहाणं प्रज्ञप्तम्। तत् कस्माद्धेतोः? न कुलपुत्र तथागताः कस्यचिद्धर्मस्य उत्सर्गाय वा प्रतिलम्भाय वा धर्मं देशयन्ति न परिज्ञायै न प्रहाणाय न साक्षात्क्रियायै नाभिसमयाय न संसारचरणतायै न निर्वाणगमनतायै नोत्क्षेपाय न प्रभेदाय। न हि कुलपुत्र द्वयप्रभाविता तथागतधर्मता। तत्र ये द्वये चरन्ति, न ते सम्यक्प्रयुक्ताः। मिथ्याप्रयुक्तास्ते वक्तव्याः। कतमच्च कुलपुत्र द्वयम्? अहं रागं प्रहास्यामीति द्वयमेतत्। अहं द्वेषं प्रहास्यामीति 30 द्वयमेतत्। अहं मोहं प्रहास्यामीति द्वयमेतत्। ये एवंप्रयुक्ताः, न ते सम्यक्प्रयुक्ताः। मिथ्याप्रयुक्तास्ते वेदितव्याः॥

तद्यथापि नाम कुलपुत्र कश्चिदेव पुरुषो मायाकारनाटके प्रत्युपस्थिते मायाकारनिर्मितां स्त्रियं दृष्ट्वा रागचित्तमुत्पादयेत्। स रागपरीतचित्तः पर्षच्छारद्यभयेन उत्थायासनादपक्रमेत्। सोऽपक्रम्य तामेव स्त्रियमशुभतो मनसि कुर्यादनित्यतो दुःखतः शून्यतोऽनात्मतो मनसि कुर्यात्। भगवानाह–एवमेव कुलपुत्र इहैके भिक्षुभिक्षुण्युपासकोपासिका द्रष्टव्याः, येऽनुत्पन्नान् धर्मानजातानशुभतो मनसि कुर्वन्ति, अनित्यतो दुःखतोऽनात्मतो मनसि कुर्वन्ति। 5
नाहं तेषां मोहपुरुषाणां मार्गभावनां वदामि। मिथ्याप्रयुक्तास्ते वेदितव्याः॥

तद्यथापि नाम कुलपुत्र कश्चिदेव पुरुषः सुप्तः स्वप्नान्तरे स्वगृहे राजभार्यां पश्येत्। स तया सार्धं शय्यां कल्पयेत्। स्मृतिसंमोषाच्चैवं कल्पयेत्–विरुद्धोऽस्मीति। स भीतत्रस्तः पलायेत्, मा मां राजा विध्येत्, स मा मां जीविताद् व्यवरोपयेत्। तत् किं मन्यसे कुलपुत्र अपि नु स पुरुषो भीतत्रस्तः पलायमानस्ततो राजभार्यानिदानभयात्परिमुच्येत? आह–नो 10
भगवन्। तत्कस्य हेतोः? तथा हि भगवंस्तेन पुरुषेण अस्त्रियां स्त्रीसंज्ञा उत्पादिता, अभूतं च परिकल्पितम्। भगवानाह–एवमेव कुलपुत्र इहैके भिक्षुभिक्षुण्युपासकोपासिका द्रष्टव्याः, ये अरागे रागसंज्ञामुत्पाद्य रागभयभीता रागनिःसरणं पर्येषन्ते। एवमदोषे दोषसंज्ञामुत्पाद्य दोषभयभीता दोषनिःसरणं पर्येषन्ते। अमोहे मोहसंज्ञामुत्पाद्य मोहभयभीता मोहनिःसरणं पर्येषन्ते। नाहं तेषां मोहपुरुषाणां मार्गभावनां वदामि। मिथ्याप्रयुक्तास्ते वेदितव्याः॥ 15

तद्यथापि नाम कुलपुत्र स पुरुषः अभये भयसंज्ञामुत्पादयेदसत्संमारोपेण। एवमेव कुलपुत्र सर्वबालपृथग्जना रागकोटिं विरागकोटिमप्रजानन्तो रागकोटिभयभीता विरागकोटिं निःसरणं पर्येषन्ते। दोषकोटिमकिंचनकोटिमप्रजानन्तो दोषकोटिभयभीता अकिंचनकोटिं निःसरणं पर्येषन्ते। मोहकोटिं शून्यताकोटिमप्रजानन्तो मोहकोटिभयभीताः शून्यताकोटिं निःसरणं पर्येषन्ते। नाहं तेषां कुलपुत्र मोहपुरुषाणां मार्गभावनां वदामि। मिथ्याप्रयुक्तास्ते वेदितव्याः॥ इति 20
विस्तरः॥ १४॥

अत्राह–यद्यपि अनित्ये नित्यमित्येवं ग्राहो विपर्ययो न संभवति, तथापि एष तावत् ग्राहोऽस्ति। ग्राहश्च नाम संग्रहणं भावरूपः। तस्य च अवश्यं साधनेन करणेन भवितव्यं साधकतमेन[1] नित्यत्वादिना। कर्त्रा च भवितव्यं स्वतन्त्रेण[2] नित्यात्मना चित्तेन वा। कर्मणा[3] च कर्तुरीप्सिततमेन विषयेण रूपादिना। सत्यां च भावकरणकर्तृकर्मणां सिद्धौ सर्वसिद्धेरिष्टसिद्धिः 25
स्यादस्माकमिति। उच्यते। अलीकेयं प्रत्याशा। ननु च यथोपवर्णितेन न्यायेन–

**येन गृह्णाति यो ग्राहो ग्रहीता यच्च गृह्यते।**
**उपशान्तानि सर्वाणि तस्माद्ग्राहो न विद्यते॥ १५॥**

इह हि कश्चिद् ग्रहीता येन विशेषेण नित्यत्वादिना करणभूतेन किंचित् कर्मभूतं रूपशब्दादिकं वस्तु गृह्णाति, तद्यथा न संभवति तथा पूर्वं प्रतिपादितम्। कथं कृत्वा? 30

अनित्ये नित्यमित्येवं यदि ग्राहो विपर्ययः।

[म० शा० २३. १३–१४]

B 464 (margin, line 7); B 465 (margin, line 23)

---

१ T om. साधकतमेन. २ T om. स्वतन्त्रेण and नित्य. ३ Mss. रूपादिन वार for कर्मणा च... रूपादिना which reading is based on T.

इत्यादिना यथा नित्यत्वादिकं करणं न संभवति, तथा प्रतिपादितम् । ग्रहीतापि यथा नास्ति, तथा—

आत्मनोऽस्तित्वनास्तित्वे न कथंचिच्च सिध्यतः ।

[म० शा०—२३.३]

इत्यनेन प्रतिपादितम् । यच्च गृह्यते तदपि नास्ति तथा—

5 रूपशब्दरसस्पर्शा गन्धा धर्माश्च केवलाः ।

[म० शा०—२३.७]

B 466 इत्यनेन प्रतिपादितम् । यदा चैवं कर्तृकरणकर्माणि न सिद्धानि, तदा कुतो निर्हेतुको ग्राहो भविष्यति ? ततश्च—

येन गृह्णाति यो ग्राहो ग्रहीता यच्च गृह्यते ।
उपशान्तानि सर्वाणि

10 स्वभावेन अनुत्पन्नत्वान्निर्वृतानि सर्वाणीत्यर्थः । यतश्च एवमेवम्—

तस्माद् ग्राहो न विद्यते ॥

अथवा । प्रत्ययपरीक्षादिभिः प्रकरणैर्यस्मात् सर्वेषामेव करणकर्तृकर्मणां सर्वथानुत्पादः प्रतिपादितः, तस्मात् सर्वाण्येतानि भावस्वरूपविरहादुपशान्तानि । अतश्च ग्राहो न विद्यते ॥ १५ ॥

अत्राह—विद्यन्त एव विपर्ययाः, विपरीतसद्भावात् । इह हि विपर्यासानुगतो देवदत्तो 15 नाम विद्यते । न च विना विपर्यासैः स विपर्यासानुगतः संभवति । तस्मात् सन्ति विपर्यासाः विपर्यस्तसद्भावादिति । उच्यते । इह अस्माभिः करणकर्तृकर्मणामभावात् सर्वथा ग्राह एव नास्तीति प्रतिपादितम् । ततश्च—

**अविद्यमाने ग्राहे च मिथ्या वा सम्यगेव वा ।**
**भवेद्विपर्ययः कस्य भवेत्कस्याविपर्ययः ॥ १६ ॥**

सम्यग्वा मिथ्या वा कस्यचित् किंचिदप्यगृह्णतः कुतो विपरीतत्वमविपरीतत्वं वेति । 20 तस्मान्न सन्ति विपर्ययाः ॥ १६ ॥

अपि च । इमे विपर्ययाः कस्यचिदिष्यमाणाः विपरीतस्य परिकल्प्येरन्, अविपरीतस्य वा, विपर्यस्यमानस्य वा ? सर्वथा च नोपपद्यन्ते इति प्रतिपादयन्नाह—

B 467
**न चापि विपरीतस्य संभवन्ति विपर्ययाः ।**
**न चाप्यविपरीतस्य संभवन्ति विपर्ययाः ॥ १७ ॥**
25 **न विपर्यस्यमानस्य संभवन्ति विपर्ययाः ।**
**विमृशस्व स्वयं कस्य संभवन्ति विपर्ययाः ॥ १८ ॥**

तत्र तावद्विपरीतस्य विपर्यया न संभवन्ति । किं कारणम् ? यस्मात्, यो हि विपरीतः, स विपरीत एव । किं तस्य पुनरपि विपर्ययसंबन्धः कुर्यात् ? निष्प्रयोजनत्वात् । अविपरीतस्यापि विपर्यया न युज्यन्ते, विबुद्धबुद्धिनयनानामपि अज्ञाननिद्रातिमिरोपशमाद् बुद्धानां विपर्यय-

प्रसङ्गात् ॥ तथा विपर्यस्यमानस्यापि न सन्ति विपर्ययाः, विपर्यस्यमानस्य भावस्य अभावात्। को हि नाम असावपरः पदार्थः, यो विपरीताविपरीतविनिर्मुक्तो विपर्यस्यमानो नाम भविष्यति? अर्धविपरीतो विपर्यस्यमान इति चेत्, अर्धविपरीतो हि नाम यस्य किंचिद्विपरीतं किंचिदविपरीतम्। तत्र यदस्य किंचिद्विपरीतं तद्विपर्यासो न विपर्यासयति, विपर्यस्तत्वात्। यदप्यस्य अविपरीतम्, तदपि विपर्यासो न विपर्यासयति, अविपर्यस्तत्वात्। तस्माद्विपर्यस्यमानस्यापि कस्यचिद्विपर्यासा न संभवन्ति। यदा चैवं विपरीताविपरीतविपर्यस्यमाना न संभवन्ति, भवानिदानीं विमृशतु स्वयं प्रज्ञया मध्यस्थः सन् कस्य संभवन्ति विपर्यासा इति। तदेवमाश्रयस्याभावान्न सन्ति विपर्ययाः॥ १७-१८॥ 5

किं चान्यत्—

> अनुत्पन्नाः कथं नाम भविष्यन्ति विपर्ययाः।
> विपर्ययेष्वजातेषु विपर्ययगतः कुतः॥ १९॥ 10 B 468

तत्र

> न स्वतो जायते भावः परतो नैव जायते।
> न स्वतः परतश्चेति विपर्ययगतः कुतः॥ २०॥

कुतो विपरीत इत्यर्थः। ततश्च यदुक्तम्—सन्ति विपर्ययाः विपर्ययगतसद्भावादिति, तन्न युक्तम्॥ १९-२०॥ 15

यस्यापि कथंचिद्विपर्यासचतुष्टयमस्त्येवेत्यभ्युपगम्यते, तथापि तस्य विपरीतत्वमशक्यमास्थातुम्। किं कारणम्? यस्मात्—

> आत्मा च शुचि नित्यं च सुखं च यदि विद्यते।
> आत्मा च शुचि नित्यं च सुखं च न विपर्ययः॥ २१॥

यदि एतानि आत्मशुचिनित्यसुखानि विपर्यासा इति व्यवस्थाप्यन्ते, किमेतानि सन्ति, 20 अथ न सन्ति? यदि विद्यन्ते, न तर्हि विपर्यासाः, विद्यमानत्वादनात्मादिवत्॥ २१॥

अथ न विद्यन्ते, तदा एषामविद्यमानत्वान्न केवलं नास्ति विपर्यासत्वम्, विपर्यासप्रतिबन्ध्यभावादनात्मादीनामपि अविपर्यासादीनां नास्ति सद्भाव इति प्रतिपादयन्नाह—

> नात्मा च शुचि नित्यं च सुखं च यदि विद्यते। B 469
> अनात्माशुच्यनित्यं च नैव दुःखं च विद्यते॥ २२॥ 25

यदि आत्मा न शुचि नित्यं च न विद्यते इति मन्यसे, विपर्यासासंभवात्, एवं सति आत्मादीनामप्यभावाद् यदि एतदनात्मादिकमविपर्यासत्वेन गृहीतम्, तदपि तर्हि त्यज्यताम्, प्रतिषेध्याभावे प्रतिषेधस्याभावात्। यदा चैवमनात्मादिकं न संभवति, तदा तदपि स्वरूपतोऽविद्यमानत्वात् आत्मादिवत् कथं न विपर्यासः स्यात्? तस्मात् जातिजरामरणसंसारचारकागारबन्धनान्मुमुक्षुभिरष्टावप्येते विपर्यासास्त्याज्याः॥ २२॥ 30

अस्य च यथोपवर्णितविपर्यासविचारस्य अविद्यादिप्रहाणहेतुत्वेन महार्थतां प्रतिपादयन्नाह—

एवं निरुध्यतेऽविद्या विपर्ययनिरोधनात्।
अविद्यायां निरुद्धायां संस्काराद्यं निरुध्यते ॥ २३ ॥

यदा अयं योगी यथोदितेन न्यायेन विपर्यासान् नोपलभते, तदा एवं विपर्यासानुपलम्भनेन तद्धेतुका अविद्या निरुध्यते। तन्निरोधाच्च संस्कारादयः अविद्याहेतुका जरामरण-
5 शोकपरिदेवदुःखदौर्मनस्योपायासपर्यन्ता धर्मा निरुध्यन्ते ॥

अविद्या हि सकलस्यैव संक्लेशगणस्य जात्यादिदुःखस्य च हेतुभूता। यथा हि
B 470 कायेन्द्रियहेतुकानि सर्वाणि रूपीन्द्रियाणि कायेन्द्रिये निरुध्यमाने निरुध्यन्ते, एवमविद्याहेतुकानि संस्कारादीनि भवाङ्गानि प्रवर्तमानानि नियतमविद्यायां निरुद्धायां निरुध्यन्ते इति प्रतिपादयन्नाह —

अविद्यायां निरुद्धायां संस्काराद्यं निरुध्यते। इति ॥

10 अत्राह — यदि विपर्यासनिरोधादविद्या निरुध्यते, अस्ति तर्हि अविद्या यस्या एवं विपर्यासनिरोधान्निरोधो भवति। न तर्हि अविद्यमानाया गगनचूतलतायाः प्रहाणोपायान्वेषणमस्ति। तस्माद्विद्यते एव अविद्या, तन्निरोधोपायान्वेषणसद्भावात्। ततश्च सन्ति तद्धेतुका रागादयः क्लेशाः। क्लेशासद्भावाच्च अस्त्येव संसारे[1] भवसंततिः। उच्यते। अत्र हि नाम अतिमहदनर्थपाण्डित्यं परस्य, यो[2] हि नाम सर्वात्मना अत्यन्तदुःखायासक्लेशासमञ्जसे संसारे निरन्तरफुल्लफलप्रदसंक्लेशविषवृक्षे परार्थोदय-
15 संवद्धकक्षैः साधुभिः प्रज्ञोपायमहानिलबलैर्निःशेषं तदुन्मूल्यमानैर्न केवलं न साहाय्येनावतिष्ठन्ते, अपि[3] खलु तदुन्मूलकानामतिमहानिलबलानामिव भावसद्भाववादमहाशैलायमान इवातिविरोधितया अवस्थितो भवान् आहोपुरुषिकया तस्यैव क्लेशविषवृक्षस्य जातिजरामरणशोकायासविसर-दुःखैकफलस्य सुतरां भावाभिनिवेशतोयासवैरारोपणमाद्रियते ॥

अपि च। यदि अविद्यादीनां संक्लेशानां प्रहाणं संभवेत्, स्यात् तत्प्रहाणोपायान्वेषणम्। न
20 च तेषां प्रहाणं संभवति। यदि स्यात, तदा तत्त्वरूपतो विद्यमानानां वा स्यात्, अविद्यमानानां
B 471 वा? किं चातः? तत्र यदि स्वरूपतः सद्भूतानां क्लेशानां प्रहाणमिष्यते, तन्नोपपद्यते। किं कारणम्? यस्मात्—

यदि भूताः स्वभावेन क्लेशाः केचिद्धि कस्यचित्।
कथं नाम प्रहीयेरन् कः स्वभावं प्रहास्यति ॥ २४ ॥

25 स्वभावतो विद्यमानानां भावानां न शक्यः स्वभावो विनिवर्तयितुम्। न हि क्षित्यादीनां कठिनत्वादिस्वभावो निवर्तते। एवं यदि इमे क्लेशाः स्वभावतः सद्भूताः स्युः। केचिदित्यविद्यादयः। कस्यचिदिति पुद्गलस्य। कथं नाम प्रहीयेरन्? नैव ते कस्यचित् कथंचिन्नाम प्रहीयेरन्। कस्मात्पुनः न ते प्रहीयन्ते इत्याह — कः स्वभावं प्रहास्यतीति। स्वभावस्य विनिवर्तयितुमशक्यत्वात्। आकाशानावरणविनिवर्तनासंभववदित्यभिप्रायः ॥ २४ ॥

30 अथ स्वभावेन असद्भूता इति विकल्प्यते, एवमपि प्रहाणासंभव एवेत्याह —

---

१ T om. संसारे. २ T reads: यो हि नाम साधुभिः परार्थोदयसंवद्धकक्षैः प्रज्ञोपायबलैर्निःशेषं महाक्लेशविषवृक्षं सर्वात्मना दुःखमुन्मूल्यमानैः for यो हि...न्मूल्यमानैः. ३ T reads: अपि खलु तदुन्मूलकानामतिविरोधितयावस्थित आहोपुरुषिकया तस्य महाक्लेशविषवृक्षस्यारोहणमाद्रियते for अपि...द्रियते।

**यद्यभूताः स्वभावेन क्लेशाः केचिद्धि कस्यचित् ।**
**कथं नाम प्रहीयेरन् कोऽसद्भावं प्रहास्यति ॥ २५ ॥**

अभूता अपि क्लेशाः स्वभावेन अविद्यमानाः अशक्या एव प्रहातुम् । न हि अग्नेः शैत्यमसंविद्यमानं शक्यमपाकर्तुम् । एवमिमेऽपि क्लेशाः केचिद् यदि कस्यचित् स्वभावतो न विद्यन्ते, कस्तान् प्रहास्यति ? नैव कश्चित् प्रहास्यति । तदेवमुभयपक्षेऽपि प्रहाणासंभवान्नास्ति 5 प्रहाणं क्लेशानाम् । प्रहाणाभावाच्च कुतः क्लेशप्रहाणोपायान्वेषणमिति । अतो यदुक्तम्–विद्यन्त B 472 एव अविद्यादयः क्लेशाः, तत्प्रहाणोपायान्वेषणादिति, तदयुक्तमिति । यथोक्तमार्यसमाधिराजे–

यो रज्येत, यत्र वा रज्येत, येन वा रज्येत । यो दुष्येत, यत्र वा दुष्येत, येन वा दुष्येत । यो मुह्येत यत्र वा मुह्येत, येन वा मुह्येत । स तं धर्मं न समनुपश्यति, तं धर्मं नोपलभते । स तं धर्ममसमनुपश्यन् अनुपलभमानोऽरक्तोऽदुष्टोऽमूढोऽविपर्यस्तचित्तः समाहित 10 इत्युच्यते । तीर्णः पारग इत्युच्यते । क्षेमप्राप्त इत्युच्यते ॥ इति विस्तरः ।

[ समाधिराजसूत्र–९ ]

तथा–[1]

आदर्शपृष्ठे तथ तैलपात्रे
निरीक्षते नारिमुखं स्वलंकृतम् ।
सो तत्र रागं जनयित्व बालो 15
प्रधावितो कामि गवेषमाणो ॥
मुखस्य संक्रान्ति यदा न विद्यते
बिम्बे मुखं नैव कदाचि लभ्यते ।
मूढो यथा सो जनयेत रागं
तथोपमान् जानथ सर्वधर्मान् ॥ इत्यादि । 20

[ समाधिराजसूत्र–९.१०–११ ]

तथा–

रूपेण दर्शिता बोधी बोधये रूप दर्शितम् ।
विषभागेन शब्देन उत्तरो धर्मु देशितः ॥
शब्देन्न उत्तरं रूपं गम्भीरं च स्वभावतः । B 473
समं रूपं च बोधिश्च नानात्वं न स लभ्यते ॥ 25
यथा निर्वाणु गम्भीरं शब्देन संप्रकाशितम् ।
लभ्यते न च निर्वाणं स च शब्दो न लभ्यते ॥
शब्दश्चापि निर्वाणं च उभयं तन्न लभ्यते ।
एवं शून्येषु धर्मेषु निर्वाणं संप्रकाशितम् ॥

---

१ T om. the quotation upto जानथ सर्वधर्मान्.

निर्वाणं निवृत्तिरेव निर्वाणं च न लभ्यते ।
अप्रवृत्तिर्हि धर्माणां यथा पश्चात्तथा पुरा ॥
सर्व[1]धर्माः स्वभावेन निर्वाणसमसादृशाः ।
ज्ञाता नैष्क्रम्यसारेहि ये युक्ता बुद्धबोधये ॥

[समाधिराजसूत्र–२४·१–६]

B 474 5 तथा–

ज्ञानेन जानाम्यहु स्कन्धशून्यतां
ज्ञात्वा च क्लेशेहि न संवसामि ।
व्याहारमात्रेण हि व्याहरामि
परिनिर्वृतो लोकमिमं चरामि ॥

[समाधिराजसूत्र–६·१२]

10 तथा–

परिनिर्वृत लोकि ते शूरा
येहि स्वभावत ज्ञातिमि धर्माः ।
कामगुणैर्हि चरन्ति असङ्गाः
सङ्गु विवर्जिय सत्त्व विनेन्ति ॥

15 इति ॥ २५ ॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
विपर्यासपरीक्षा नाम त्रयोविंशतितमं प्रकरणम् ॥

---

[1] T om. this stanza.

## २४
## आर्यसत्यपरीक्षा चतुर्विंशतितमं प्रकरणम् ।

अत्राह – B 475

> यदि शून्यमिदं सर्वमुदयो नास्ति न व्ययः ।
> चतुर्णामार्यसत्यानामभावस्ते प्रसज्यते ॥ १ ॥

यदि युक्त्या नोपपद्यते इति कृत्वा सर्वमिदं बाह्यमाध्यात्मिकं भावजातं शून्यमिति प्रतिपादितम्, ननु च एवं सति बहवश्च महान्तश्च दोषा भवत आपद्यन्ते । कथं कृत्वा ? यदि 5 सर्वमिदं शून्यं स्यात्, तदा यच्छून्यं तन्नास्ति, यच्च नास्ति, तदविद्यमानत्वाद् वन्ध्यापुत्रवन्नैवोत्पद्यते न चापि निरुध्यते, इति न कस्यचित्पदार्थस्य उदयो व्ययश्च । तदभावाच्च चतुर्णामार्यसत्यानामभावः ते शून्यवादिनः प्रसज्यते । कथं कृत्वा ? इह हि पूर्वहेतुजनिताः प्रतीत्यसमुत्पन्नाः पञ्चोपादान-स्कन्धाः दुःखदुःखतया विपरिणामदुःखतया संस्कारदुःखतया च प्रतिकूलवर्तित्वाच्च पीडात्मकत्वेन दुःखमित्युच्यते । एतच्च दुःखमार्या एव विपर्यासप्रहाणे सति दुःखमिति संजानते, न अनार्याः, 10 B 476 विपर्यासानुगतत्वात्, यथादर्शनं च पदार्थस्वभावव्यवस्थानात् । यथा हि विपर्यस्तेन्द्रियाणां मधुरस्वभावमपि गुडशर्करादिकं तिक्ततया उपलभमानानां ज्वरादिरोगातुराणां तिक्ततैव सत्यं तज्ज्ञानापेक्षया, न माधुर्यम्, तेनात्मना तस्य वस्तुनोऽनुपलभ्यमानत्वात्, एवमिहापि यद्यपि पञ्चोपादानस्कन्धा दुःखस्वभावा भवन्ति, तथापि ये एतान् दुःखात्मकान् पश्यन्ति, तेषामेव दुःखं व्यवस्थाप्यते, न विपर्यासानुगमादन्यथोपलभमानानामिति । अतः आर्याणामेव दुःखात्मता[1] 15 सत्यमिति कृत्वा दुःखमार्यसत्यमित्युच्यते । ननु च अनार्यैर्दुःखा वेदना दुःखमिति परिच्छिद्यते इति, एवं तत्कथं दुःखमार्याणामेव सत्यम् ? सत्यम् । न हि दुःखैव वेदना केवलं दुःखसत्यम्, किं तर्हि पञ्चाप्युपादानस्कन्धाः, इत्यतः आर्याणामेव तत् सत्यमिति कृत्वा आर्यसत्यमिति व्यवस्थाप्यते । यथोक्तम् –

> ऊर्णापक्ष्म यथैव हि करतलसंस्थं न वि(वे ?)द्यते पुंभिः । 20
> अक्षिगतं तु तदेव हि जनयत्यरतिं च पीडां च ॥
>
> करतलसदृशो बालो न वेत्ति संस्कारदुःखतापक्ष्म ।
> अक्षिसदृशस्तु विद्वान् तेनैवोद्वेजते गाढम् ॥ इति ।

तस्मादार्याणामेव तद्दुःखसत्यमिति दुःखमार्यसत्यमिति व्यवस्थाप्यते ॥

कदा च तद्दुःखमार्यसत्यं युज्यते ? यदा संस्काराणामुदयव्ययौ संभवतः । यदा तु 25 शून्यत्वान्न किंचिदुत्पद्यते नापि किंचिन्निरुध्यते, तदा नास्ति दुःखम् ॥

असति च दुःखे कुतः समुदयसत्यम् ? यतो हि हेतोर्दुःखम्, समुदेति समुत्पद्यते स हेतुः तृष्णाकर्मक्लेशलक्षणः समुदय इत्युच्यते । यदा तु फलभूतं दुःखसत्यं नास्ति, तदा फलरहितस्य हेतुकत्वानुपपत्तेः समुदयोऽपि नास्ति ॥

---

[1] T दुःखात्मतया for दुःखात्मता.

B 477 दुःखस्य च विगमः अपुनरुत्पादः निरोध इत्युच्यते। यदा तु दुःखमेव नास्ति, तदा कस्य निरोधः स्यादिति? अतो दुःखनिरोधोऽपि न संभवति। असति हि दुःखे निरोधसत्यस्याप्यभावः। असति च दुःखनिरोधे कुतो दुःखनिरोधगामिनी आर्याष्टाङ्गमार्गानुगा प्रतिपद् भविष्यतीति मार्गसत्यमपि नास्तीति। तदेवं शून्यत्वं भावानां ब्रुवतः चतुर्णामार्यसत्यानामभावः 5 प्रसज्यते॥ १॥

ततश्च को दोष इति? उच्यते—

परिज्ञा च प्रहाणं च भावना साक्षिकर्म च।
चतुर्णामार्यसत्यानामभावान्नोपपद्यते॥ २॥

चतुर्णामार्यसत्यानामभावप्रसङ्गे सति यदेतदनित्यादिभिराकारैर्दुःखसत्यपरिज्ञानं दुःख10 समुदयस्य च प्रहाणं दुःखनिरोधगामिन्याश्च प्रतिपदो भावना दुःखनिरोधस्य च साक्षिकर्म साक्षात्करणम्, तन्नोपपद्यते॥ २॥

यदि दुःखादीनामार्यसत्यानामभावे सति परिज्ञानादिकं नास्ति, तदा को दोष इति? उच्यते-

तदभावान्न विद्यन्ते चत्वार्यार्यफलानि च।
फलाभावे फलस्था नो न सन्ति प्रतिपन्नकाः॥ ३॥
B 478 15 संघो नास्ति न चेत्सन्ति तेऽष्टौ पुरुषपुद्गलाः।
अभावाच्चार्यसत्यानां सद्धर्मोऽपि न विद्यते॥ ४॥
धर्मे चासति संघे च कथं बुद्धो भविष्यति।

यदा चैवं दुःखपरिज्ञानादिकं नास्ति, तदा, अस्मिन्नसति स्रोतआपत्तिसकृदागाम्य-
B 479 नागाम्यर्हत्फलाख्यं फलचतुष्टयं नोपपद्यते। कथं कृत्वा? इह क्लेशानां प्रहाणं संपिण्डितं फलाख्यं
B 480 20 प्रतिलभते। तद्यथा—संयोजनत्रयप्रहाणे सति षोडशे मार्गे अन्वयज्ञानक्षणे यत् क्लेशप्रहाणं तत् स्रोतआपत्तिफलम्। कामावचराणां भावनाप्रहातव्यानां क्लेशानामधिमात्रमध्यमृदूनां प्रकाराणां पुनरधिमात्रमध्यमृदुप्रकारभेदेन प्रत्येकं भिद्यमानानां नव प्रकारा भवन्ति। तत्र कामावचरषष्ठ-
B 481 क्लेशप्रकारपरिक्षये विमुक्तिमार्गे यत् प्रहाणं तत् सकृदागामिफलम्। तेषामेव कामावचराणां नवमप्रकारक्लेशपरिक्षये विमुक्तिमार्गे यत् क्लेशप्रहाणं तदनागामिफलम्। रूपारूप्यावचराणां क्लेशानां 25 भावनाप्रहातव्यानां भूमौ भूमौ नवप्रकारभेदभिन्नानां यावन्नैवसंज्ञानासंज्ञायतनभूमिकनवमक्लेशप्रकारपरिक्षये विमुक्तिमार्गे यत् प्रहाणं तदर्हत्फलम्। इत्येतानि चत्वारि फलानि। तान्येतानि कथं युज्यन्ते? यदि दुःखस्य परिज्ञानं संभवति, समुदयस्य प्रहाणम, निरोधस्य साक्षात्करणम्, आर्यमार्गस्य च भावना भवति। यदा तु दुःखादीनामार्यसत्यानामभावे सति दुःखपरिज्ञानादिकं नास्ति, तदा न सन्ति तानि चत्वारि फलानि। चतुर्णां च फलानामभावे सति ये तेषु 30 व्यवस्थिताः फलस्थाश्चत्वार आर्यपुद्गलाः, ते न सन्ति। अत एव च प्रतिपन्नका अपि चत्वार आर्यपुद्गला न संविद्यन्ते॥

इह हि षोडशात् मार्गेऽन्वयज्ञानक्षणात् पूर्वे ये पञ्चदश क्षान्तिज्ञानक्षणाः, तद्यथा—त्रैधातुकदुःखाभिसमये दुःखसत्यालम्बनाश्चत्वारः क्षान्तिज्ञानक्षणाः। तत्र कतमे त्रैधातुकदुःखाभिसमये चत्वारः क्षान्तिज्ञानक्षणाः? तद्यथा—कामावचरदुःखदर्शनप्रहातव्यसत्कायान्तग्राहमिथ्यादृष्टिदृष्टिपरामर्शशीलव्रतपरामर्शविचिकित्सारागप्रतिघमानाविद्याख्यदशानुशयप्रतिपक्षः अनित्यदुःखशून्यानात्माकारोत्पन्नः कामावचरदुःखसत्यालम्बनः आनन्तर्यमार्गलक्षणः दुःखे धर्मज्ञानक्षान्तिक्षणः एकः। 5 तदालम्बनाकार एव च विमुक्तिमार्गलक्षणः दुःखे धर्मज्ञानक्षणः द्वितीयः। एवं रूपारूप्यावचरदुःखसत्यालम्बनः प्रतिघवर्जितानन्तरोक्ताष्टादशानुशयप्रतिपक्षः दुःखाद्याकारोत्पन्नः आनन्तर्यमार्गलक्षणः दुःखे अन्वयज्ञानक्षान्तिक्षणस्तृतीयः। तदालम्बनाकार एव च विमुक्तिमार्गलक्षणः दुःखेऽन्वयज्ञानक्षणश्चतुर्थः॥

यथा चैते त्रैधातुकावचरदुःखसत्याभिसमये क्षान्तिज्ञानक्षणाश्चत्वारः, एवं कामावचरसमु- 10 दयदर्शनप्रहातव्यमिथ्यादृष्टिदृष्टिपरामर्शविचिकित्सारागप्रतिघमानाविद्याख्यसप्तानुशयप्रतिपक्षः हेतुसमुदयप्रभवप्रत्ययाकारोत्पन्नः कामावचरसमुदयसत्यालम्बनः आनन्तर्यमार्गलक्षणः समुदये धर्मज्ञानक्षान्तिक्षणः एकः। तदालम्बनाकार एव च विमुक्तिमार्गलक्षणः समुदये धर्मज्ञानक्षणो द्वितीयः। एवं रूपारूप्यावचरसमुदयसत्यालम्बनः प्रतिघवर्जितानन्तरोक्तद्वादशानुशयप्रतिपक्षः समुदयसत्याकारोत्पन्नः आनन्तर्यमार्गलक्षणः समुदयेऽन्वयज्ञानक्षान्तिक्षणस्तृतीयः। तदालम्बनाकार एव च 15 विमुक्तिमार्गलक्षणः समुदयेऽन्वयज्ञानक्षणश्चतुर्थः। इत्येते त्रैधातुकावचरदुःखसमुदयसत्याभिसमये चत्वारः क्षणाः॥

यथा चैते चत्वारः क्षणाः त्रैधातुकदुःखसमुदयसत्याभिसमये, एवं कामावचरदुःखनिरोधदर्शनप्रहातव्यसमुदयोक्तसप्तानुशयप्रतिपक्षः निरोधशान्तप्रणीतनिःसरणाकारोत्पन्नः कामावचरदुःखनिरोधसत्यालम्बनः आनन्तर्यमार्गलक्षणः निरोधे धर्मज्ञानक्षान्तिक्षणः एकः। तदालम्बनाकार एव 20 च विमुक्तिमार्गलक्षणः निरोधे धर्मज्ञानक्षणः द्वितीयः। एतैरेव आकारैः रूपारूप्यावचरदुःखनिरोधसत्यालम्बनः प्रतिघवर्जितद्वादशानुशयप्रतिपक्षः आनन्तर्यमार्गलक्षणः निरोधे अन्वयज्ञानक्षान्तिक्षणस्तृतीयः। तदालम्बनाकार एव च विमुक्तिमार्गलक्षणः निरोधे अन्वयज्ञानक्षणश्चतुर्थः। इत्येते त्रैधातुकावचरदुःखनिरोधसत्याभिसमये चत्वारः क्षणाः॥

एवं कामावचरदुःखनिरोधगामिमार्गदर्शनप्रहातव्यनिरोधोक्तानुशयेषु शीलव्रतपरामर्शमष्टमं 25 प्रक्षिप्य अष्टानुशयप्रतिपक्षः मार्गन्यायप्रतिपन्नैर्याणिकाकारोत्पन्नः कामावचरदुःखनिरोधगामिमार्गालम्बनः आनन्तर्यमार्गलक्षणः मार्गे धर्मज्ञानक्षान्तिक्षणः एकः। तदालम्बनाकार एव च विमुक्तिमार्गलक्षणः मार्गे धर्मज्ञानक्षणः द्वितीयः। एतैरेवाकारैः रूपारूप्यावचरदुःखनिरोधगामिमार्गालम्बनः प्रतिघवर्जितचतुर्दशानुशयप्रतिपक्षः आनन्तर्यमार्गलक्षणो मार्गेऽन्वयज्ञानक्षान्तिक्षणः तृतीयः। 30 इत्येते पञ्चदश क्षणाः दर्शनमार्गाभिधानाः॥

एवं व्यवस्थितः आर्यः स्रोतआपत्तिफलसाक्षात्क्रियायै प्रतिपन्नकः इत्युच्यते। षोडशे तु मार्गेऽन्वयज्ञानस्थितः स स्रोतआपन्न इत्युच्यते॥

B 482 B 483 B 484

त एते अष्टाशीतिरनुशयाः सत्यानां दर्शनमात्रेण भावनामनपेक्ष्यैव प्रहीयन्ते इति कृत्वा दर्शनप्रहातव्या इत्युच्यन्ते। यथादृष्टसत्याकारभावनया तु ये पश्चात्प्रहीयन्ते ते भावनाप्रहातव्याः। ते च दशानुशया भवन्ति। कामावचरा रागप्रतिघमानाविद्याः। रूपावचरा एव प्रतिघवर्जितास्त्रयः। आरूप्यावचराश्च त्रयः एते एवेति दश भवन्ति। एते च यथोक्तेन न्यायेन भूमौ भूमौ नवधा भिद्यन्ते, कामधातौ चतुर्षु ध्यानेषु, चतुर्ष्वारूप्येषु। एकैकस्य च क्लेशप्रकारस्य प्रहाणार्थमानन्तर्यविमुक्तिमार्गभेदेन द्वौ द्वौ ज्ञानक्षणौ व्यवस्थाप्येते क्लेशक्षणविपर्ययेण। अधिमात्राधिमात्रो हि क्लेशप्रकारः मृदुमृदुभ्यामानन्तर्यविमुक्तिमार्गाभ्यां प्रहीयते। यावन्मृदुमृदुक्लेशप्रकारोऽधिमात्राधिमात्राभ्यां ज्ञानक्षणाभ्यां प्रहीयते। स्थूलं हि मलमल्पप्रयत्नसाध्यम्, सूक्ष्मं तु महायत्नसाध्यं[1] रजकवस्त्रधावनसाधर्म्येणेति विज्ञेयम्॥

तत्र दर्शनमार्गादूर्ध्वं कामावचरभावनाप्रहातव्यषष्ठक्लेशप्रकारप्रतिपक्षविमुक्तिमार्गाख्यज्ञानक्षणादर्वाग् ज्ञानक्षणावस्थितः आर्यः सकृदागामिफलप्रतिपन्नक इत्युच्यते। सकृदिमं लोकमागत्य परिनिर्वाणात् सकृदागामीत्युच्यते, तत्फलार्थं प्रतिपन्नकः प्रयोगस्थः सकृदागामिफलप्रतिपन्नक इत्युच्यते। षष्ठे तु क्षणे सकृदागामीत्युच्यते॥

षष्ठात् क्षणादूर्ध्वं नवमक्लेशप्रकारप्रहाणविमुक्तिमार्गक्षणादर्वाग्ज्ञानक्षणेषु वर्तमानः आर्यः अनागामिफलप्रतिपन्नक इत्युच्यते। अनागत्य इमं लोकं तत्रैव परिनिर्वाणादनागामीत्युच्यते। तत्फलार्थं प्रतिपन्नकः प्रयोगस्थः अनागामिफलप्रतिपन्नक इत्युच्यते। नवमे तु क्षणे अनागामीत्युच्यते॥

कामावचरनवमविमुक्तिमार्गक्षणादूर्ध्वं नैवसंज्ञानासंज्ञायतनभूमिकनवमक्लेशप्रकारप्रहाणविमुक्तिमार्गक्षणादर्वाग्ज्ञानक्षणेषु वर्तमानः आर्यः अर्हत्फलप्रतिपन्नकः इत्युच्यते। सदेवमानुषासुराल्लोकात् पूजार्हत्वादर्हन्नित्युच्यते। तत्फलार्थं प्रतिपन्नकः प्रयोगस्थः अर्हत्फलप्रतिपन्नकः इत्युच्यते। भवाग्रिकनवमक्लेशप्रकारप्रहाणात्तु नवमविमुक्तिमार्गे व्यवस्थितः अर्हन् भवति॥

त एते चत्वारः प्रतिपन्नकाः पुद्गलाः, चत्वारश्च फलस्थाः इत्येते अष्टौ महापुरुषपुद्गला भवन्ति। परमदक्षिणार्हा उक्ता भगवता। यथोक्तं सूत्रे—

पृष्टः स देवराजेन शक्रेण वशवर्तिना।
यजतां यजमानानां प्राणिनां पुण्यकाङ्क्षिणाम्॥
कुर्वतां श्रद्दधानानां पुण्यमौपधिकं सदा।
सुक्षेत्रं ते प्रवक्ष्यामि यत्र दत्तं महत्फलम्॥
प्रतिपन्नकाश्चत्वारश्चत्वारश्च फलस्थिताः।
एष संघो दक्षिणीयो विद्याचरणसंपदा॥ इति।

यदि चत्वारि आर्यसत्यानि न सन्ति तेषां च परिज्ञानानि, तदा सत्यदर्शनभावनालभ्यानां फलानामभावात् प्रतिपन्नकफलस्थपुद्गलानामभाव एव। अतश्च संघो नास्ति। तत्र

[1] Mss. om. °साध्यं which is supplied from T.

अधिगमधर्मेण प्रत्यक्षधर्मतया सर्वैर्मारैरपि बुद्धे भगवति अभेद्यत्वादवेत्य प्रसादलाभेन संघः, स न स्यात्। न चेत् सन्ति तेऽष्टौ पुरुषपुद्गलाः ॥

आर्यसत्यानां च अभावात् सद्धर्मोऽपि न संभवति। सतामार्याणां धर्मः सद्धर्मः। तत्र निरोधसत्यं फलधर्मः, मार्गसत्यं तु फलावतारधर्मः। एष तावदधिगमधर्मः। तत्संप्रकाशिका देशना आगमधर्मः। सर्व एष आर्यसत्यानामभावे सति नास्तीति— B 488 5

अभावाच्चार्यसत्यानां सद्धर्मोऽपि न विद्यते।
धर्मे चासति संघे च कथं बुद्धो भविष्यति ॥

यदि हि यथोक्तो धर्मः स्यात्, तदा तद्धर्मप्रतिपत्त्या[1] सर्वाकारसर्वधर्माभिसंबोधाद् बुद्धो भवतीति युक्तं स्यात्। यदि च संघः स्यात्, तदा तदुपदेशैरुपचीयमानज्ञानसंभारः तद्दानमान-शरणगमनादिभिश्च उपचीयमानपुण्यसंभारः क्रमाद् बुद्धो भवेत् ॥ 10

अथवा। असति संघे स्रोतआपत्तिफलप्रतिपन्नकादीनामभावः स्यात्। न च प्रतिपन्नका-दित्वमप्राप्य बुद्धत्वमाप्यते। अवश्यं हि पूर्वं भगवता कस्मिंश्चित् फले व्यवस्थातव्यम्। तत्र च फले व्यवस्थितः संघान्तःपात्येव भगवान् भवति। संघे चासति नियतं नास्ति भगवान् बुद्धः। अथ भगवानपि अशैक्षान्तर्भावात् संघान्तर्गत एव। तथा च बुद्धप्रमुखो भिक्षुसंघः इत्यभिधानात् संघान्तर्गत एव भगवान् इति केचिद्वर्णयन्ति। तेषां मतेन स्पष्टमेवैतत्— 15

धर्मे चासति संघे च कथं बुद्धो भविष्यति। इति।

मध्योदेशिकाश्च महावस्तूपदिष्टभूमिव्यवस्थया प्रथमभूमिस्थितं बोधिसत्त्वमुत्पन्नदर्शनमार्गं व्याचक्षाणाः संघान्तःपातिनं व्याचक्षते। तदा संघे चासति बोधिसत्त्वोऽपि नास्तीति कथं बुद्धो भविष्यतीति स्पष्टमेवैतत्। तद्— B 489

**एवं त्रीण्यपि रत्नानि ब्रुवाणः प्रतिबाधसे ॥ ५ ॥** 20

शून्यतामित्येवं वदन् बुद्धधर्मसंघाख्यानि त्रीण्यपि दुर्लभत्वात् कदाचिदेव उत्पत्तितः अल्पपुण्यानां च तदप्राप्तेः महार्घमूल्यत्वाद् रत्नानि प्रतिबाधसे ॥ ५ ॥

किं चान्यत्—

**शून्यतां फलसद्भावमधर्मं धर्ममेव च।**
**सर्वसंव्यवहारांश्च लौकिकान् प्रतिबाधसे ॥ ६ ॥** 25

शून्यतां ब्रुवाण इत्यनेन संबन्धः। यदि सर्वमिदं शून्यम्, यदा सर्वमेव नास्ति, तदा सर्वान्तः-पातित्वात् धर्माधर्मौ सह तद्धेतुकेन इष्टानिष्टफलेन न संभवतः। सर्व एव चामी लौकिका व्यवहाराः—कुरु, पच, खाद, तिष्ठ, गच्छ, आगच्छ इत्येवमादयोऽपि सर्वान्तर्गतत्वात् सर्वधर्माणां च शून्यत्वान्नैव युज्यन्ते इति। अतो नायं यथोपवर्णितो न्यायो ज्यायानिति ॥ ६ ॥ B 490

**अत्र ब्रूमः शून्यतायां न त्वं वेत्सि प्रयोजनम्।**
**शून्यतां शून्यतार्थं च तत एवं विहन्यसे ॥ ७ ॥** 30

---

[1] T धर्मानुधर्मप्रतिपत्त्या for तद्धर्मप्रति°.

स भवान् स्वविकल्पनयैव नास्तित्वं शून्यतार्थ इत्येवं विपरीतमध्यारोप्य "यदि सर्वमिदं शून्यमुदयो नास्ति न व्ययः" इत्यादिनोपालम्भं ब्रुवाणोऽस्मासु महान्तं खेदमापन्नोऽतीव विहन्यते। विविधैर्भूतैः परिकल्पैर्हन्यते इत्यर्थः। न त्वयमस्माभिरत्र शास्त्रे शून्यतार्थ उपवर्णितो यस्त्वया परिगृहीतः, शून्यतार्थं चाजानानः शून्यतामपि न जानासि। न चापि शून्यतायां 5 यत्प्रयोजनं तद्विजानासि। ततश्च यथावस्थितवस्तुस्वरूपापरिज्ञानेन एतत् त्वया बहु चायुक्तमस्मद्व्याख्यानासंबद्धमेवोपवर्णितम् ॥

अथ किं पुनः शून्यतायां प्रयोजनम्? उक्तमेव तदात्मपरीक्षायाम्—

कर्मक्लेशक्षयान्मोक्षः कर्मक्लेशा विकल्पतः।
ते प्रपञ्चात्प्रपञ्चस्तु शून्यतायां निरुध्यते ॥ इति।

[म० शा०-१८.५]

B 491 10 अतो निरवशेषप्रपञ्चोपशमार्थं शून्यतोपदिश्यते, तस्मात्सर्वप्रपञ्चोपशमः शून्यतायां प्रयोजनम्। भवांस्तु नास्तित्वं शून्यतार्थं परिकल्पयन् प्रपञ्चजालमेव संवर्धयमानो न शून्यतायां प्रयोजनं वेत्ति ॥

अथ का पुनः शून्यता? सापि तत्रैवोक्ता।

अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम् ॥
15 निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम् ॥ इति।

[म० शा०-१८.९]

अतः प्रपञ्चनिवृत्तिस्वभावायां शून्यतायां कुतो नास्तित्वमिति शून्यतामपि न जानाति भवान्। यं चार्थमुपादाय शून्यताशब्दः प्रवर्तते, तमपीहैव प्रतिपादयिष्यामः—

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे।
सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा ॥ इति ॥

[म० शा०-२४.१८]

20 यः प्रत्ययैर्जायति स ह्यजातो
न तस्य उत्पादु स्वभावतोऽस्ति।
यः प्रत्ययाधीनु स शून्यु उक्तो
यः शून्यतां जानति सोऽप्रमत्तः ॥

इति भगवतो गाथावचनात्। एवं प्रतीत्यसमुत्पादशब्दस्य योऽर्थः, स एव शून्यता- 25 शब्दस्यार्थः, न पुनरभावशब्दस्य योऽर्थः स शून्यताशब्दस्यार्थः। अभावशब्दार्थं च शून्यतार्थ- मित्यध्यारोप्य भवानस्मानुपालभते। तस्माच्छून्यताशब्दार्थमपि न जानाति। अजानानश्च त्वमेवमुपालम्भं कुर्वन् नियतं विहन्यसे ॥ ७ ॥

B 492 कश्चास्माकं यथोक्तमुपालम्भं करोति? यो भगवत्प्रवचनोपदिष्टाविपरीतसत्यद्वयविभागं न जानाति, केवलं ग्रन्थमात्राध्ययनपर एवेति। अत आचार्यः करुणया परस्य मिथ्याप्रवचनार्थाव- 30 बोधनिरासार्थं भगवत्प्रवचनोपदिष्टाविपरीतसत्यद्वयव्यवस्थामेव तावदधिकृत्याह—

**द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।**
**लोकसंवृतिसत्यं च सत्यं च परमार्थतः॥ ८॥**

इह हि भगवतां बुद्धानां सत्यद्वयमाश्रित्य धर्मदेशना प्रवर्तते। कतमत्सत्यद्वयम्? लोकसंवृतिसत्यं च परमार्थसत्यं च। तत्र

स्कन्धात्मा लोक आख्यातस्तत्र लोको हि निश्रितः। 5

इति वचनात्पञ्च स्कन्धानुपादाय प्रज्ञप्यमानः पुद्गलो लोक इत्युच्यते। समन्ताद्वरणं संवृतिः। अज्ञानं हि समन्तात्सर्वपदार्थतत्त्वावच्छादनात्संवृतिरित्युच्यते। परस्परसंभवनं वा संवृतिरन्योन्यसमाश्रयेणेत्यर्थः। अथवा संवृतिः संकेतो लोकव्यवहार इत्यर्थः। स चाभिधानाभिधेयज्ञानज्ञेयादिलक्षणः। लोके संवृतिर्लोकसंवृतिः। किं पुनरलोकसंवृतिरप्यस्ति यत एवं विशिष्यते लोकसंवृतिरिति? यथाव्यवस्थितपदार्थानुवाद एषः, नात्रैषा चिन्तावतरति। अथवा। 10 तिमिरकामलाद्युपहतेन्द्रियविपरीतदर्शनावस्थानास्तेऽलोकाः, तेषां या संवृतिरसावलोकसंवृतिः। अतो विशिष्यते लोकसंवृतिरिति। एतच्च मध्यमकावतारे विस्तरेणोक्तं ततो वेदितव्यम्। लोकसंवृत्या सत्यं लोकसंवृतिसत्यम्। सर्व एवायमभिधानाभिधेयज्ञानज्ञेयादिव्यवहारोऽशेषो लोकसंवृतिसत्यमित्युच्यते। न हि परमार्थत एते व्यवहाराः संभवन्ति। तत्र हि—

B 493

निवृत्तमभिधातव्यं निवृत्ते चित्तगोचरे। 15
अनुत्पन्नानिरुद्धा हि निर्वाणमिव धर्मता॥

[म० शा०-१८.७]

इति कृत्वा कुतस्तत्र परमार्थे वाचां प्रवृत्तिः कुतो वा ज्ञानस्य? स हि परमार्थोऽपरप्रत्ययः शान्तः प्रत्यात्मवेद्य आर्याणां सर्वप्रपञ्चातीतः। स नोपदिश्यते न चापि ज्ञायते। उक्तं हि पूर्वम्—

अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।
निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम्॥ इति। 20

[म० शा०-१८.९]

परमश्चासावर्थश्चेति परमार्थः। तदेव सत्यं परमार्थसत्यम्। अनयोश्च सत्ययोर्विभागो विस्तरेण मध्यमकावतारादवसेयः। तदेतत्सत्यद्वयमाश्रित्य बुद्धानां भगवतां धर्मदेशना प्रवर्तते। एवं व्यवस्थिते देशनाक्रमे—

B 494

**येऽनयोर्न विजानन्ति विभागं सत्ययोर्द्वयोः।**
**ते तत्त्वं न विजानन्ति गम्भीरं बुद्धशासने॥ ९॥** 25

अत्राह—यदि तर्हि परमार्थो निष्प्रपञ्चस्वभावः स एवास्तु, तत्किमनया अपरया स्कन्धधात्वायतनार्यसत्यप्रतीत्यसमुत्पादादिदेशनया प्रयोजनमपरमार्थया? अतत्त्वं हि परित्याज्यम्। यच्च परित्याज्यं किं तेनोपदिष्टेन? उच्यते। सत्यमेतदेवम्। किं तु लौकिकं व्यवहारमनभ्युपगम्य अभिधानाभिधेयज्ञानज्ञेयादिलक्षणम्, अशक्य एव परमार्थो देशयितुम्, अदेशितश्च न शक्योऽधिगन्तुम्, अनधिगम्य च परमार्थं न शक्यं निर्वाणमधिगन्तुमिति प्रतिपादयन्नाह— 30

व्यवहारमनाश्रित्य परमार्थो न देश्यते ।
परमार्थमनागम्य निर्वाणं नाधिगम्यते ॥ १० ॥

तस्मान्निर्वाणाधिगमोपायत्वादवश्यमेव यथावस्थिता संवृतिरादावेवाभ्युपेया भाजनमिव सलिलार्थिनेति ॥ १० ॥

5 तदेवं यः संवृतिपरमार्थलक्षणसत्यद्वयस्य व्यवस्थामपाकृत्य शून्यतां वर्णयति, तं तथाविधं पुद्गलम्—

B 495 विनाशयति दुर्दृष्टा शून्यता मन्दमेधसम् ।
सर्पो यथा दुर्गृहीतो विद्या वा दुष्प्रसाधिता ॥ ११ ॥

संवृतिसत्यं हि अज्ञानमात्रसमुत्थापितं निःस्वभावं बुद्ध्वा तस्य परमार्थलक्षणां शून्यतां 10 प्रतिपद्यमानो योगी नान्तद्वये पतति । किं तदासीद्यदिदानीं नास्तीत्येवं पूर्वं भावस्वभावानुपलम्भात् पश्चादपि नास्तितां न प्रतिपद्यते । प्रतिबिम्बाकारायाश्च लोकसंवृतेरबाधनात् कर्मकर्मफलधर्माधर्मादिकमपि न बाधते । न चापि परमार्थं भावस्वभावत्वेन समारोपयति । निःस्वभावानामेव पदार्थानां कर्मफलादिदर्शनात् सस्वभावानां चादर्शनात् ॥

यस्तु एवं सत्यद्वयविभागमपश्यन् शून्यतां संस्काराणां पश्यति, स शून्यतां पश्यन् मुमुक्षु-15 र्नास्तितां वा संस्काराणां परिकल्पयेद्, यदि वा शून्यतां कांचिद्भावतः सतीम्, तस्याश्चाश्रयार्थं भावस्वभावमपि परिकल्पयेत् । उभयथा चास्य दुर्दृष्टा शून्यता नियतं विनाशयेत् । कथं कृत्वा ? यदि तावत्सर्वमिदं शून्यं सर्वं नास्तीति परिकल्पयेत्, तदास्य मिथ्यादृष्टिरापद्यते । यथोक्तम्—

B 496 विनाशयति दुर्दृष्टो धर्मोऽयमविपश्चितम् ।
नास्तितादृष्टिसमले यस्मादस्मिन्निमज्जति ॥

20 अथ सर्वापवादं कर्तुं नेच्छति, तदा नियतमस्य शून्यतायाः प्रतिक्षेप आपद्यते — कथं हि नाम अमी भावाः सकलसुरासुरनरलोकैरुपलभ्यमाना अपि शून्या भविष्यन्ति ? तस्मान्न निःस्वभावार्थः शून्यतार्थः, इत्येवं प्रतिक्षिप्य सद्धर्मव्यसनसंवर्तनीयेन पापकेन कर्मणा नियतमपायान्वयात् । यथोक्तमार्यरत्नावल्याम्—

अपरोऽप्यस्य दुर्ज्ञानान्मूर्खः पण्डितमानिकः ।
25 प्रतिक्षेपविनष्टात्मा यात्यवीचिमधोमुखः ॥ इति ।

एवं तावदभावेन गृह्यमाणा शून्यता ग्रहीतारं विनाशयति । अथायं भावेन शून्यतां परिकल्पयेत्, तदाश्रयाणां च संस्काराणामस्तित्वम्, एवमपि निर्वाणगामिनि मार्गे विप्रतिपन्नत्वाच्छून्यतोपदेशविह्वलो जायेत । तदेवं भावरूपेणापि शून्यता गृह्यमाणा ग्रहीतारं विनाशयति ॥

B 497 ननु च यदुपकारकं तदन्यथा [क्रियमाणमकालोप्तमिव बीजं न फलाय कल्पते, 30 कालोप्तं च महते फललाभाय जायते, एवमेव मणिमन्त्रौषधादिभि]गृह्यमाणः [सर्पः] महान्तं धनस्कन्धमावहति शिरोमणिग्रहणात्, तेन च व्यालग्राहकाणां जीविकाकल्पनात् । यथोद्देशातिर-

१ Portion in [ ] is wanting in Mss. and its substance is supplied from T.
२ T om. शिरोमणि ... कल्पनात्.

स्कारेण तु गृह्यमाणो ग्रहीतारमेव विनाशयति । यथा च यथोपदेशं प्रसाधिता विद्या साधकमनुगृह्णाति, उपदेशपरिभ्रष्टा तु साध्यमाना साधकमेव विनाशयति, एवमिहापि यथोपदेशं शून्यता महती विद्या साध्यमाना गृह्यमाणा भावाभावादिग्राहतिरस्कारेण मध्यमया प्रतिपदा ग्रहीतारं परमेण जातिजरामरणादिदुःखहुताशनशमनैकरसेन निरुपधिशेषनिर्वाणजलधरधारावर्षमुखेन योजयति । यथोपदेशविशेषविगमेन तु गृह्यमाणा नियतं यथोदितेन न्यायेन ग्रहीतारमेव विनाशयति ॥ 5

यतश्चैवं शून्यता दुर्गृहीता ग्रहीतारं विनाशयति, मन्दप्रज्ञैश्च अशक्या सम्यग्ग्रहीतुम्— B 498

**अतश्च प्रत्युदावृत्तं चित्तं देशयितुं मुनेः ।**
**धर्मं मत्वास्य धर्मस्य मन्दैर्दुरवगाहताम् ॥ १२ ॥**

यस्मादयं शून्यतालक्षणो धर्मो मन्दमेधसमल्पप्रज्ञं सत्त्वं विपर्यासग्रहणाद्विनाशयति, अत एव अस्य धर्मस्य मन्दैर्दुरवगाहतां मत्वा अनुत्तरां सम्यक्संबोधिमभिसंबुध्य सर्वसत्त्वधातुं 10 चावलोक्य धर्मस्य चातिगाम्भीर्यम्, सद्धर्मं देशयितुं चित्तं प्रतिनिवृत्तं मुनेर्बुद्धस्य भगवतो महोपायज्ञानविशेषशालिनः । यथोक्तं सूत्रे—

अथ भगवतोऽचिराभिसंबुद्धस्यैतदभवत्— अधिगतो मया धर्मो गम्भीरो गम्भीरावभासोऽतर्कोऽतर्कावचरः सूक्ष्मः पण्डितविज्ञवेदनीयः । सचेत्तमहं परेषामारोचयेयम्, परे च मे न विभावयेयुः, स मम विघातः स्यात्, क्लमथः स्यात्, चेतसोऽनुदयः स्यात्[1] यन्न्वहमेकाक्यरण्ये 15 B 499 प्रविविक्ते दृष्टधर्मसुखविहारमनुप्राप्तो विहरेयम् । इति विस्तरः ॥ १२ ॥

तदेवं सत्यद्वयाविपरीतव्यवस्थामविज्ञाय—

**शून्यतायामधिलयं यं पुनः कुरुते भवान् ।**
**दोषप्रसङ्गो नास्माकं स शून्ये नोपपद्यते ॥ १३ ॥**

योऽयं भवता महान् दोषप्रसङ्गोऽस्मासु प्रक्षिप्तः— 20

यदि शून्यमिदं सर्वमुदयो नास्ति न व्ययः ।

इत्यादिना, स यस्मात् सत्यद्वयव्यवस्थानभिज्ञेन सता शून्यतां शून्यतार्थं शून्यताप्रयोजनं च यथावदबुद्ध्वा उपक्षिप्तः, सोऽस्माकं शून्ये शून्यतावादे नोपपद्यते । यतश्च नोपपद्यते, अतो यं भवान् दोषप्रसङ्गं शून्यतायामुद्भावयन् शून्यतायामधिलयमधिक्षेपं निराकरणं प्रतिक्षेपं करोति, सोऽधिलयोऽस्माकं नोपपद्यते । अभावार्थं हि शून्यतार्थमभ्यारोप्य प्रसङ्ग उद्भावितो 25 भवता । न च वयमभावार्थं शून्यतार्थं व्याचक्ष्महे, किं तर्हि प्रतीत्यसमुत्पादार्थम् । इत्यतो न युक्तमेतत् शून्यतादर्शनदूषणम् ॥ १३ ॥

न च केवलं यथोक्तदोषप्रसङ्गोऽस्मत्पक्षे नावतरति, अपि खलु सर्वमेव सत्यादिव्यवस्थानं सुतरामुपपद्यते इति प्रतिपादयन्नाह— B 500

---

[1] All versions agree in mentioning Buddha's hesitation for preaching to the world his new doctrine almost in identical terms. Compare : Mahāvagga, I. 5. ; Lalita. XXV ; Mahāvastu III. etc.

**सर्वं च युज्यते तस्य शून्यता यस्य युज्यते ।**
**सर्वं न युज्यते तस्य शून्यं यस्य न युज्यते ॥ १४ ॥**

यस्य हि सर्वभावस्वभावशून्यतेयं युज्यते, तस्य सर्वमेतद् यथोपवर्णितं युज्यते । कथं कृत्वा ? यस्मात् प्रतीत्यसमुत्पादं हि वयं शून्यतेति व्याचक्ष्महे—

5 यः प्रत्ययैर्जायति स ह्यजातो
न तस्य उत्पादु स्वभावतोऽस्ति ।
यः प्रत्ययाधीनु स शून्य उक्तो
यः शून्यतां जानति सोऽप्रमत्तः ॥

इति गाथावचनात्।[1] "शून्याः सर्वधर्मा निःस्वभावयोगेन" इति प्रज्ञापारमिताभिधानात् ॥

10 तस्माद्यस्येयं शून्यता युज्यते रोचते क्षमते,[2] तस्य प्रतीत्यसमुत्पादो युज्यते । यस्य प्रतीत्यसमुत्पादो युज्यते, तस्य चत्वार्यार्यसत्यानि युज्यन्ते । कथं कृत्वा ? यस्मात् प्रतीत्यसमुत्पन्नं हि दुःखं भवति नाप्रतीत्यसमुत्पन्नम् । तच्च निःस्वभावत्वाच्छून्यम् । सति च दुःखे दुःखसमुदयो दुःखनिरोधो दुःखनिरोधगामिनी च प्रतिपद् युज्यते । ततश्च दुःखपरिज्ञानं समुदयप्रहाणं निरोधसाक्षात्करणं मार्गभावना च युज्यते । सति च दुःखादिसत्यपरिज्ञानादिके फलानि 15 युज्यन्ते । सत्सु च फलेषु फलस्था युज्यन्ते । सत्सु च फलस्थेषु प्रतिपन्नका युज्यन्ते । सत्सु च प्रतिपन्नकफलस्थेषु संघो युज्यते । आर्यसत्यानां च सद्भावे सति सद्धर्मोऽपि युज्यते । सति च सद्धर्मे संघे च बुद्धोऽपि युज्यते । ततश्च त्रीण्यपि रत्नानि युज्यन्ते । लौकिकलोकोत्तराश्च पदार्थाः सर्वे विशेषाधिगमा युज्यन्ते । धर्माधर्मं तत्फलं सुगतिदुर्गतिः लौकिकाश्च सर्वसंव्यवहारा युज्यन्ते । तदेवम्—

20 सर्वं च युज्यते तस्य शून्यता यस्य युज्यते ।

यस्य सर्वभावस्वभावशून्यता युज्यते, तस्य सर्वमेतद् यथोदितं युज्यते, संपद्यते इत्यर्थः । यस्य तु शून्यता यथोदिता न युज्यते, तस्य प्रतीत्यसमुत्पादाभावात् सर्वं न युज्यते । यथा च न युज्यते, तथा विस्तरेण प्रतिपादयिष्यति ॥ १४ ॥

तदेवमास्माकीने सुपरिशुद्धतरे सर्वव्यवस्थासु अविरुद्धे व्यवस्थिते, अतिस्थूले अत्यासन्ने 25 तद्विरुद्धे च स्वकीये पक्षे दोषवति अतिमोघो यथावदवस्थितौ गुणदोषावपश्यन्—

B 501 / B 502

**स त्वं दोषानात्मनीनानस्मासु परिपातयन् ।**
**अश्वमेवाभिरूढः सन्नश्वमेवासि विस्मृतः ॥ १५ ॥**[3]

---

१ See under XIII. 2, where this stanza is quoted as from अनवतप्तह्रदापसंक्रमणसूत्र ; Mdo xii ; Nanjio, No. 437 under अनवतप्तनागराजपरिपृच्छासूत्र. २ T om. रोचते क्षमते. ३ Compare लौकिकन्यायाञ्जलि, III, अश्वारूढाः कथं चाश्वान् विस्मरेयुः सचेतसः । or शुक्लविदर्शना as cited by Poussin :

घोटामेवाभिरूढः सन् घोटामेवासि विस्मृतः ॥
स्वभावाद्यदि भावानां सद्भावमनुपश्यसि ।
अहेतुप्रत्ययान् भावांस्त्वमेवं सति पश्यसि ॥

यथा हि कश्चिद् यमेवाश्वमारूढः, तमेव विस्मृतः सन्, तदपहारदोषेण परानुपालभते, एवमेव भवान् प्रतीत्यसमुत्पादलक्षणशून्यतादर्शनाश्वमारूढ एव अत्यन्तविक्षेपात्तमनुपलम्भमानोऽस्मान् परिवदति ॥ १५ ॥

के पुनस्ते परस्य दोषाः, याननुपलभमानः शून्यतावादिनमेव उपालभते इति, तान् प्रतिपादयन्नाह –

**स्वभावाद्यदि भावानां सद्भावमनुपश्यसि ।**
**अहेतुप्रत्ययान् भावांस्त्वमेवं सति पश्यसि ॥ १६ ॥**

यदि त्वं स्वभावेन विद्यमानान् भावान् पश्यसि, तदा स्वभावस्य हेतुप्रत्ययनिरपेक्षत्वात् अहेतुप्रत्ययान् अविद्यमानहेतुप्रत्ययान् पदार्थान् बाह्याध्यात्मिकभेदभिन्नान् निर्हेतुकान् त्वमेवं सति पश्यसि ॥ १६ ॥　10

सति च अहेतुकत्वाभ्युपगमे–

**कार्यं च कारणं चैव कर्तारं करणं क्रियाम् ।**　B 503
**उत्पादं च निरोधं च फलं च प्रतिबाधसे ॥ १७ ॥**

कथं कृत्वा ? यदीह घटः स्वभावतोऽस्तीति परिकल्पयसि, तदा अस्य स्वभावतो विद्यमानस्य किं मृदादिभिर्हेतुप्रत्ययैः प्रयोजनमिति तेषामभावः स्यात् । निर्हेतुकं च कार्यं घटाख्यं नोपपद्यते । असति चास्मिंश्चक्रादिकस्य करणस्य, कर्तुः कुम्भकारस्य घटकरणक्रियायाश्चाभावादुत्पादनिरोधयोरभावः । असतोश्चोत्पादनिरोधयोः कुतः फलम् ? इति सस्वभावाभ्युपगमे सति सर्वमेतत् कार्यादिकं प्रतिबाधसे । तदेवं भवतः सस्वभावाभ्युपगमे सति सर्वमेव न युज्यते ॥ १७ ॥　15

अस्माकं तु भावस्वभावशून्यतावादिनां सर्वमेतदुपपद्यते । किं कारणम् ? यस्माद्वयम्–

**यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे ।**　20
**सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा ॥ १८ ॥**

योऽयं प्रतीत्यसमुत्पादो हेतुप्रत्ययानपेक्ष्य अङ्कुरविज्ञानादीनां प्रादुर्भावः, स स्वभावेनानुत्पादः । यश्च स्वभावेनानुत्पादो भावानां सा शून्यता । यथा भगवतोक्तम्–

यः प्रत्ययैर्जायति स ह्यजातो　B 504
न तस्य उत्पादु स्वभावतोऽस्ति ।　25
यः प्रत्ययाधीनु स शून्य उक्तो
यः शून्यतां जानति सोऽप्रमत्तः ॥ इति ।

तथा आर्यलङ्कावतारे – "स्वभावानुत्पत्तिं संधाय महामते सर्वधर्माः शून्या इति मया देशिताः" ॥ इति विस्तरेणोक्तम् ॥

द्व्यर्धशतिकायाम् – "शून्याः सर्वधर्मा निःस्वभावयोगेन" ॥ इति ॥　30

यां चेयं स्वभावशून्यता सा प्रज्ञप्तिरुपादाय, सैव शून्यता उपादाय प्रज्ञप्तिरिति व्यवस्थाप्यते । चक्रादीन्युपादाय रथाङ्गानि रथः प्रज्ञप्यते । तस्य या स्वाङ्गान्युपादाय प्रज्ञप्तिः, सा

१ T om. भावानां. २ Compare page 76 of Nanjio's edition; अनुत्पत्तिं संधाय महामते निःस्वभावाः सर्वभावाः. ३. T om. स्वभाव.

स्वभावेनानुत्पत्तिः, या च स्वभावेनानुत्पत्तिः, सा शून्यता । सैव स्वभावानुत्पत्तिलक्षणा शून्यता मध्यमा प्रतिपदिति व्यवस्थाप्यते । यस्य हि स्वभावेनानुत्पत्तिः, तस्य अस्तित्वाभावः, स्वभावेन चानुत्पन्नस्य विगमाभावान्नास्तित्वाभाव इति । अतो भावाभावान्तद्वयरहितत्वात् सर्वस्वभावानुत्पत्तिलक्षणा शून्यता मध्यमा प्रतिपत्, मध्यमो मार्ग इत्युच्यते । तदेवं प्रतीत्यसमुत्पादस्यैवैता विशेष-
5 संज्ञाः—शून्यता, उपादाय प्रज्ञप्तिः, मध्यमा प्रतिपद् इति ॥ १८ ॥

B 505 विचार्यमाणश्च सर्वथा —

**अप्रतीत्य समुत्पन्नो धर्मः कश्चिन्न विद्यते ।**
**यस्मात्तस्मादशून्यो हि धर्मः कश्चिन्न विद्यते ॥ १९ ॥**

यो हि अप्रतीत्यसमुत्पन्नो धर्मः, स न संविद्यते । यथोक्तं शतके —

10 अप्रतीत्यास्तिता नास्ति कदाचित्कस्यचित्क्वचित् ।
न कदाचित्क्वचित्कश्चिद्विद्यते तेन शाश्वतः ॥
आकाशादीनि कल्प्यन्ते नित्यानीति पृथग्जनैः ।
लौकिकेनापि तेष्वर्थान्न पश्यन्ति विचक्षणाः ॥ इति ।

[चतुःशतक—९·२—३]

उक्तं च भगवता —

15 प्रतीत्य धर्मानधिगच्छते विदू
न चान्तदृष्टीय करोति निश्रयम् ।
सहेतु सप्रत्यय धर्म जानति
अहेतु अप्रत्यय नास्ति धर्मता ॥

एवम्—

20 अप्रतीत्य समुत्पन्नो धर्मः कश्चिन्न विद्यते ।

अप्रतीसमुत्पन्नश्च शून्यः । तस्मादशून्यो धर्मो नास्ति । यत एतदेवम्, अतोऽस्माकं सर्वधर्माश्च शून्याः, न च परोक्तदोषप्रसङ्गः ॥ १९ ॥

भवतस्तु सस्वभाववादिनः—

**यद्यशून्यमिदं सर्वमुदयो नास्ति न व्ययः ।**

25 तदा नियतमुदयव्ययोरभावे सति—

B 506 **चतुर्णामार्यसत्यानामभावस्ते प्रसज्यते ॥ २० ॥**

किं कारणम् ? यस्मात्—

**अप्रतीत्य समुत्पन्नं कुतो दुःखं भविष्यति ।**
**अनित्यमुक्तं दुःखं हि तत्स्वाभाव्ये न विद्यते ॥ २१ ॥**

30 यद्धि सस्वभावम्, न तत्प्रतीत्योत्पद्यते । यच्च अप्रतीत्य समुत्पन्नम्, न तदनित्यं भवति । न हि गगनकुसुममविद्यमानमनित्यम् । अनित्यं च दुःखमुक्तं भगवता — यदनित्यं तद्दुःखमिति । तथा च शतकशास्त्रे —

अनित्यस्य ध्रुवा पीडा पीडा यस्य न तत्सुखम्।
तस्मादनित्यं यत्सर्वं दुःखं तदिति जायते॥ इति।

[चतुःशतक-२·२५]

यच्च अनित्यं स्वाभाव्ये सस्वभावत्वेऽभ्युपगम्यमाने भावानाम्, तन्न विद्यत इति॥ २१॥

एवं तावत् सस्वभावत्वे सति भावानां दुःखं न युज्यते। न च केवलं दुःखमेव न युज्यते, सति सस्वभावाभ्युपगमे समुदयोऽपि न युज्यते इति प्रतिपादयन्नाह— 5

**स्वभावतो विद्यमानं किं पुनः समुदेष्यते।**
**तस्मात्समुदयो नास्ति शून्यतां प्रतिबाधतः॥ २२॥**

इह समुदेत्यस्माद्दुःखमिति दुःखस्य हेतु[तः]समुदय इत्युच्यते। तदस्य दुःखस्य शून्यतां प्रतिबाधमानस्य सस्वभावं दुःखमभ्युपगच्छतः तस्य पुनरुत्पादवैयर्थ्यात् तद्धेतुकल्पना-वैयर्थ्यमेव, इत्येवं शून्यतां प्रतिबाधमानस्य समुदयोऽपि भवतो न युज्यते॥ २२॥ B 507 10

स्वाभाविकमेव दुःखमभ्युपगच्छतो दुःखनिरोधोऽपि न युज्यते इति प्रतिपादयन्नाह—

**न निरोधः स्वभावेन सतो दुःखस्य विद्यते।**
**स्वभावपर्यवस्थानान्निरोधं प्रतिबाधसे॥ २३॥**

यदि हि स्वभावतो दुःखं स्यात्, तदा स्वभावस्यानपायित्वात् कुतोऽस्य निरोधत्वमिति? एवं स्वभावपर्यवस्थानात् स्वभावं गृहीत्वा प्रत्यवतिष्ठमानो दुःखनिरोधमपि प्रतिबाधसे॥ २३॥ 15

इदानीमार्यमार्गोऽपि सस्वभाववादिनो यथा नोपपद्यते तथा प्रतिपादयन्नाह—

**स्वाभाव्ये सति मार्गस्य भावना नोपपद्यते।**
**अथासौ भाव्यते मार्गः स्वाभाव्यं ते न विद्यते॥ २४॥**

यदि हि सस्वभावा भावा भवेयुः, तदा मार्गोऽपि सस्वभाव एवेति कृत्वा अभावित एवासावस्ति। तस्य किं पुनर्भावनयेति? एवम्— B 508 20

स्वाभाव्ये सति मार्गस्य भावना नोपपद्यते।

अथ अस्य मार्गस्य भावना अभ्युपगम्यते भवता, एवं तर्हि स्वभावता आर्यमार्गस्य न स्यात्, कार्यत्वादित्यभिप्रायः॥ २४॥

अपि च—दुःखस्य निरोधप्राप्त्यर्थं समुदयस्य च प्रहाणार्थं भावना मार्गस्येष्यते। पूर्वोक्तेन तु न्यायेन सस्वभाववादिनो भवतः— 25

**यदा दुःखं समुदयो निरोधश्च न विद्यते।**
**मार्गो दुःखनिरोधत्वात् कतमः प्रापयिष्यति॥ २५॥**

नास्त्येव असौ दुःखनिरोधः, यन्निरोधान्मार्गो भावितः सन् प्रापयिष्यति। तस्मादार्य-मार्गोऽप्येवं नोपपद्यत इति। एवं सस्वभाववादिनः चतुर्णामार्यसत्यानामभावः प्राप्नोति॥ २५॥

इदानीं दुःखादिपरिज्ञानादिकमपि यथा परस्य न संभवति, तथा प्रतिपादयन्नाह— 30

स्वभावेनापरिज्ञानं यदि तस्य पुनः कथम् ।
परिज्ञानं ननु किल स्वभावः समवस्थितः ॥ २६ ॥

B 509 यदि पूर्वं दुःखमपरिज्ञातस्वभावं तत् पश्चात् परिज्ञायत इति कल्प्यते, तदयुक्तम् । किं कारणम् ? यस्मान्ननु किल स्वभावः समवस्थितः । यो हि स्वभावः, स किल लोके समवस्थितः, 5 नैवान्यथात्वमापद्यते, वह्नेरौष्ण्यवत् । यदा च स्वभावस्यान्यथात्वं नास्ति, तदा पूर्वमपरिज्ञात-स्वभावस्य दुःखस्य पश्चादपि परिज्ञानं नोपपद्यत इति । अतो दुःखपरिज्ञानमपि न संभवति ॥ २६ ॥

यदा चैतद्दुःखपरिज्ञानमपि न संभवति, तदा –

प्रहाणसाक्षात्करणे भावना चैवमेव ते ।
10 परिज्ञावन्न युज्यन्ते चत्वार्यपि फलानि च ॥ २७ ॥

यदेतत् समुदयस्य प्रहाणं निरोधस्य च साक्षात्करणम्, ते एते द्वे प्रहाणसाक्षात्करणे । या च मार्गस्य भावना, एषापि । एवमेव ते दुःखपरिज्ञानासंभवान्न युज्यन्ते । समुदयस्य स्वभावेनाप्रहीणस्य स्वभावस्यानपायित्वात् पश्चादपि प्रहाणं नोपपद्यते । एवं भावनासाक्षात्करणेऽपि योज्यम् । न च केवलं परिज्ञानादिकमेव न संभवति सस्वभाववादे, अपि च –

15 परिज्ञावन्न युज्यन्ते चत्वार्यपि फलानि च ।

यथा स्वभावेनापरिज्ञातस्य दुःखस्य परिज्ञानं न युक्तम्, एवं स्वभावेनाविद्यमानस्य पूर्वं स्रोतआपत्तिफलस्य पश्चादस्तित्वं न संभवति । यथा स्रोतआपत्तिफलस्य, एवं सकृदागाम्यनागाम्यर्हत्फलानामभावो वेदितव्यः ॥ २७ ॥

न च केवलमेतानि फलानि परिज्ञावन्न युज्यन्ते, किं तर्हि अधिगमोऽप्येषां न युज्यत 20 इति प्रतिपादयन्नाह –

B 510 स्वभावेनानधिगतं यत्फलं तत्पुनः कथम् ।
शक्यं समधिगन्तुं स्यात्स्वभावं परिगृह्णतः ॥ २८ ॥

स्वभावस्याविजहनप्रकृतिकत्वाद्भावस्वभाववादमभ्युपगच्छतः पूर्वमनधिगतस्वभावानां पश्चादप्यधिगमो नोपपद्यते ॥ २८ ॥

25 ततश्च –

फलाभावे फलस्था नो न सन्ति प्रतिपन्नकाः ।
संघो नास्ति न चेत्सन्ति तेऽष्टौ पुरुषपुद्गलाः ॥ २९ ॥
अभावाच्चार्यसत्यानां सद्धर्मोऽपि न विद्यते ।
धर्मे चासति संघे च कथं बुद्धो भविष्यति ॥ ३० ॥

30 अनयोश्च श्लोकयोः पूर्ववदेवार्थो वेदितव्यः ॥ २९–३० ॥

अपि च – सस्वभावाभ्युपगमे सति –

---

१ T स्वभावस्याव्यावर्तनात् for स्वभाव...प्रकृतिकत्वात्. २ T स्वभाववादाभ्युपगमे for सस्वभावाभ्युपगमे,

अप्रतीत्यापि बोधिं च तव बुद्धः प्रसज्यते ।
अप्रतीत्यापि बुद्धं च तव बोधिः प्रसज्यते ॥ ३१ ॥

यदि हि स्वभावतो बुद्धो नाम कश्चिद् भावः स्यात्, स बोधिं सर्वज्ञज्ञानमप्रतीत्यापि अनपेक्ष्यापि स्यात् । B 511

अकृत्रिमः स्वभावो हि निरपेक्षः परत्र च । 5

इति वचनात् । तथा विनापि बुद्धेन बोधिः स्यात्, अनपेक्ष्यापि बुद्धं निराश्रया बोधिः स्यात् ॥ ३१ ॥

किं चान्यत्—

यश्चाबुद्धः स्वभावेन स बोधाय घटन्नपि ।
न बोधिसत्त्वचर्यायां बोधिं तेऽधिगमिष्यति ॥ ३२ ॥ 10

इह हि बुद्धत्वात्पूर्वमबुद्धस्वभावस्य सतः पुद्गलस्य सत्यामपि बोधिसत्त्वचर्यायां बोध्यर्थं घटमानस्यापि नैव बोधिः स्यात्, अबुद्धस्वभावस्य व्यावर्तयितुमशक्यत्वात् ॥ ३२ ॥

किं चान्यत्—

न च धर्ममधर्मं वा कश्चिज्जातु करिष्यति ।
किमशून्यस्य कर्तव्यं स्वभावः क्रियते न हि ॥ ३३ ॥ 15

सति हि स्वभाववादाभ्युपगमे धर्माधर्मयोः करणं नोपपद्यते । किं हि अशून्यस्य कर्तव्यम् ? न हि स्वभावस्याशून्यस्य कारणमुपपद्यते विद्यमानत्वात् ॥ ३३ ॥

किं चान्यत्—

विना धर्ममधर्मं च फलं हि तव विद्यते । B 512
धर्माधर्मनिमित्तं च फलं तव न विद्यते ॥ ३४ ॥ 20

यदेतद्धर्माधर्मनिमित्तकमिष्टानिष्टफलम्, यदि तत् स्वभावतोऽस्ति, तद् विनापि धर्माधर्माभ्यां स्यात् । यदा च विना धर्माधर्मं फलं तवास्ति, तदा धर्माधर्मजं फलं तव न संभवति । धर्माधर्मोपार्जनवैयर्थ्यं स्यात्,

धर्माधर्मनिमित्तं च फलं तव न विद्यते । इति ।

अथ धर्माधर्मनिमित्तकं फलं भवतीति परिकल्प्यते, न तर्हि तत्फलमशून्यमिति 25 प्रतिपादयन्नाह—

धर्माधर्मनिमित्तं वा यदि ते विद्यते फलम् ।
धर्माधर्मसमुत्पन्नमशून्यं ते कथं फलम् ॥ ३५ ॥

शून्यमेवैतत्, प्रतीत्यसमुत्पन्नत्वात्, प्रतिबिम्बवत्, इत्यभिप्रायः ॥ ३५ ॥

अपि च । सर्व एव ह्येते 'गच्छ, कुरु, पच, पठ, तिष्ठ' इत्येवमादयो लौकिका 30 व्यवहाराः प्रतीत्यसमुत्पन्नाः । तान् यदि सस्वभावानिच्छति भवान्, तदा भवता प्रतीत्यसमुत्पादो बाधितो भवति । तद्बाधनाच्च सर्व एव लौकिका व्यवहारा बाधिता भवन्तीति प्रतिपादयन्नाह—

B 513 सर्वसंव्यवहारांश्च लौकिकान् प्रतिबाधसे ।
यत्प्रतीत्यसमुत्पादशून्यतां प्रतिबाधसे ॥ ३६ ॥

यच्छब्दः क्रियाविशेषणम् । यद्बाधसे इत्यनेन संबध्यते ॥ ३६ ॥

किं चान्यत्—

5 न कर्तव्यं भवेत्किंचिदनारब्धा भवेत्क्रिया ।
कारकः स्यादकुर्वाणः शून्यतां प्रतिबाधतः ॥ ३७ ॥

यदि हि स्वरूपशून्याः पदार्था न भवेयुः, सस्वभावा एव भवेयुः, तदा स्वभावस्य विद्यमानत्वान्न केनचित् कस्यचित् किंचित् कर्तव्यं स्यात् । न हि नभसोऽनावरणत्वं केनचित् क्रियते । अक्रियमाणा च क्रिया स्यात् । क्रियां चाकुर्वाणस्य कारकत्वं स्यात् । न चैतदेवमिति । 10 तस्मान्नाशून्याः पदार्थाः ॥ ३७ ॥

किं चान्यत्—

अजातमनिरुद्धं च कूटस्थं च भविष्यति ।
विचित्राभिरवस्थाभिः स्वभावे रहितं जगत् ॥ ३८ ॥

[ विचित्राभिरवस्थाभिः स्वभावरचितं स्वभावेनैव रचितमप्रतीत्यसमुत्पन्नं जगत् स्वभाव-15 शून्यवादिनाम् । ][1] स्वभावेनैव यदि भावाः [ सस्वभावाः ] स्युः, तदा स्वभावस्याकृत्रिमत्वादव्या-B 514 वर्तनत्वाच्च सर्वमिदं जगदजातमनिरुद्धं च स्यात् । अजातानिरुद्धत्वाज्जगत् कूटस्थं स्यात् । हेतु-प्रत्ययानपेक्षं विचित्राभिरवस्थाभी रहितमप्रतीत्यसमुत्पन्नं जगदशून्यवादिनां स्यात् । यथोक्तं पितापुत्रसमागमे[2]—

स्याद्यदि किंचिदशून्यं न वदेज्जिनु तस्य व्याकरणम् ।
20 तथाहि स्थितं तत् स्वके स्वके भावे ।
कूटस्थमविकारं न तस्य वृद्धिर्न परिहाणिः ॥ इति ॥

तथा आर्यहस्तिकक्ष्यसूत्रे—

यदि कोचि धर्माण भवेत्स्वभावः
तत्रैव गच्छेय जिनः सश्रावकः ।
25 कूटस्थधर्माण सिया न निर्वृती
न निष्प्रपञ्चो भवि जातु पण्डितः ॥ इति ॥ ३८ ॥

B 515 न च केवलं सस्वभाववादाभ्युपगमे लौकिका एव व्यवहारा नोपपद्यन्ते, अपि च लोकोत्तरा एव [ अपि ? ] नोपपद्यन्ते इति प्रतिपादयन्नाह—

---

१ The portion in brackets is found in Mss., but is omitted by Poussin. The controversy here seems to be between स्वभावशून्यवादिन् and अशून्यवादिन्. २ The quotation seems to be made up of two lines of Aryā metre with a prose portion तथाहि स्थितं तत् स्वके स्वके भावे in between the lines.

**असंप्राप्तस्य च प्राप्तिर्दुःखपर्यन्तकर्म च।**
**सर्वक्लेशप्रहाणं च यद्यशून्यं न विद्यते ॥ ३९ ॥**

यदि हि अशून्यं सस्वभावं सर्वमेतत् स्यात्, तदा यदसंप्राप्तं तदसंप्राप्तमेव, इति असंप्राप्तस्य च फलस्य प्राप्तिर्न स्यात्। तदा दुःखपर्यन्तकारणं च पूर्वं नाभूदिति सांप्रतमपि न स्यात्। सर्वेषां च क्लेशानां पूर्वं प्रहाणं नाभूदिति पश्चादपि प्रहाणं न स्यात् ॥ ३९ ॥ 5

तदेवं यस्मात् सस्वभाववादाभ्युपगमे सति सर्वमेतन्न युज्यते, अतः–

**यः प्रतीत्यसमुत्पादं पश्यतीदं स पश्यति।**
**दुःखं समुदयं चैव निरोधं मार्गमेव च ॥ ४० ॥**

यो हि सर्वधर्मप्रतीत्यसमुत्पादलक्षणां स्वभावशून्यतां सम्यक् पश्यति, स चत्वारि आर्यसत्यानि पश्यति यथाभूतानि तत्त्वतः। 10

यथोक्तमार्यमञ्जुश्रीपरिपृच्छायाम्– B 516

येन मञ्जुश्रीरनुत्पादः सर्वधर्माणां दृष्टः, तेन दुःखं परिज्ञातम्। येन नास्तिता सर्वधर्माणां दृष्टा, तस्य समुदयः प्रहीणः। येन अत्यन्तपरिनिर्वृताः सर्वधर्मा दृष्टाः, तेन निरोधः साक्षात्कृतः। येन मञ्जुश्रीरभावः सर्वधर्माणां दृष्टः, तेन मार्गो भावितः ॥ इति विस्तरः ॥

उक्तं च आर्यध्यायितमुष्टिसूत्रे– 15

अथ खलु भगवान् मञ्जुश्रियं कुमारभूतमेतदवोचत्– चतुर्णां मञ्जुश्रीरार्यसत्यानां यथाभूतादर्शनाच्चतुर्भिर्विपर्यासैर्विपर्यस्तचित्ताः सत्त्वा एवमिममभूतं संसारं नातिक्रामन्ति। एवमुक्ते मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत्–देशयतु भगवान् कस्योपलम्भतः सत्त्वाः संसारं नातिक्रामन्ति? भगवानाह–आत्मात्मीयोपलम्भतो मञ्जुश्रीः सत्त्वाः संसारं नातिक्रामन्ति। तत् कस्य हेतोः? यो हि मञ्जुश्रीरात्मानं परं च समनुपश्यति, तस्य कर्माभिसंस्कारा भवन्ति। 20 बालो मञ्जुश्रीरश्रुतवान् पृथग्जनोऽत्यन्तपरिनिर्वृतान् सर्वधर्मानप्रजानानः आत्मानं परं च उपलभते, उपलभ्य अभिनिविशते, अभिनिविष्टः सन् रज्यते दुष्यते मुह्यते। स रक्तो दुष्टो मूढः सन् त्रिविधं कर्म अभिसंस्करोति कायेन वाचा मनसा। सः असत्समारोपेण विकल्पयति–अहं रक्तः, अहं दुष्टः, अहं मूढः इति। तस्य तथागतशासने प्रव्रजितस्य एवं भवति–अहं शीलवान्, अहं ब्रह्मचारी, संसारं समतिक्रामिष्यामि, अहं निर्वाणमनुप्राप्स्यामि, अहं दुःखेभ्यो मोक्ष्यामि। स कल्पयति–इमे 25 धर्माः कुशलाः, इमे धर्मा अकुशला इति, इमे धर्माः प्रहातव्याः, इमे धर्माः साक्षात्कर्तव्याः, दुःखं परिज्ञातव्यम्, समुदयः प्रहातव्यः, निरोधः साक्षात्कर्तव्यः, मार्गो भावयितव्यः। स कल्पयति– अनित्याः सर्वसंस्काराः, आदीप्ताः सर्वसंस्काराः। यन्न्वहं सर्वसंस्कारेभ्यः पलायेयम्। तस्यैवमवेक्षमाणस्य उत्पद्यते निर्विंत्सहगतो मनसिकारः अनिमित्तपुरोगतः। तस्यैवं भवति–एषा सा दुःखपरिज्ञा, येयमेषां धर्माणां परिज्ञा। तस्यैवं भवति–यन्न्वहं समुदयं प्रजहेयम्। स सर्व- 30 धर्मेभ्य अर्तीयते जेह्रीयते वितरति विजुगुप्सते उत्त्रस्यति संत्रस्यति संत्रासमापद्यते। तस्यैवं B 517 भवति–इयमेषां धर्माणां साक्षात्क्रिया, इदं समुदयप्रहाणम्, यदिदमेभ्यो धर्मेभ्योऽर्तीयना। तस्यैवं भवति–निरोधः साक्षात्कर्तव्यः। समुदयं कल्पयित्वा निरोधं संजानाति। तस्यैवं

भवति—एषा सा निरोधसाक्षात्क्रिया। तस्यैवं भवति—यन्नूनमहं मार्गं भावयेयम्। स एको रहोगतस्तान् धर्मान् मनसि कुर्वन् शमथं प्रतिलभते। तस्य तेन निर्वित्सहगतेन मनसिकारेण शमथ उत्पद्यते। तस्य सर्वधर्मेषु चित्तं न प्रलीयते प्रतिवहति प्रत्युदावर्तते। तेभ्यश्चार्तीयते जेह्रीयते, अनभिनन्दनाचित्तं समुत्पद्यते। तस्यैवं भवति—मुक्तोऽस्मि सर्वदुःखेभ्यः, न मम भूयः 5 उत्तरिं किंचित्करणीयम्, अर्हन्नस्मीत्यात्मानं संजानाति। स मरणकालसमये उत्पत्तिमात्मनो देवेषु[1] पश्यति। तस्य काङ्क्षा विचिकित्सा च भवति बुद्धबोधौ। स विचिकित्सामापतितः कालगतो महानिरयेषु प्रपतति। तत्कस्य हेतोः? यथापीदमनुत्पन्नान् सर्वधर्मान् विकल्पयित्वा तथागते विचिकित्सां विमतिमुत्पादयति॥

अथ खलु मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत्—कथं पुनर्भगवन् चत्वारि आर्य- 10 सत्यानि द्रष्टव्यानि? भगवानाह—येन मञ्जुश्रीरनुत्पन्नाः सर्वधर्मा दृष्टाः, तेन दुःखं परिज्ञातम्। येन असमुत्थिताः सर्वधर्मा दृष्टाः, तस्य समुदयः प्रहीणः। येन अत्यन्तपरिनिर्वृताः सर्वधर्मा दृष्टाः, तेन निरोधः साक्षात्कृतः। येन अत्यन्तशून्याः सर्वधर्मा दृष्टाः, तेन मार्गो भावितः। येन मञ्जुश्रीरेवं चत्वारि आर्यसत्यानि दृष्टानि, स न कल्पयति—इमे धर्माः कुशलाः, इमे धर्मा अकुशलाः, इमे धर्माः प्रहातव्याः, इमे धर्माः साक्षात्कर्तव्याः, दुःखं परिज्ञातव्यम्, समुदयः 15 प्रहातव्यः, निरोधः साक्षात्कर्तव्यः, मार्गो भावयितव्यः इति। तत् कस्य हेतोः? तथाहि स तं धर्मं न समनुपश्यति नोपलभते यं परिकल्पयेत्। बालपृथग्जनास्त्वेतान् धर्मान् कल्पयन्तो रज्यन्ति च द्विष्यन्ति च मुह्यन्ति च। स न कंचिद्धर्ममाव्यूहति निर्व्यूहति[2]। तस्यैवमनाव्यूहतोऽनिर्व्यूहतस्त्रैधातुके चित्तं न सज्जति। अजातं सर्वत्रैधातुकं समनुपश्यति मायोपमं स्वप्नोपमं B 518 प्रतिश्रुत्कोपमम्॥ एवंस्वभावान् सर्वधर्मान् पश्यन् अनुनयप्रतिघापगतो भवति सर्वसत्त्वेषु। तत् 20 कस्य हेतोः? तथाहि स तान् धर्मान् नोपलभते यत्रानुनीयेत वा प्रतिहन्येत वा। स आकाशसमेन चित्तेन बुद्धमपि न समनुपश्यति, धर्ममपि न समनुपश्यति, संघमपि न समनुपश्यति। सर्वधर्मान् शून्यानिति समनुपश्यन् न क्वचिद्धर्मे विचिकित्सामुत्पादयति। अविचिकित्सन् निरुपादानो भवति। निरुपादानोऽनुपादाय परिनिर्वातीति विस्तरः॥ ४०॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ

आर्यसत्यपरीक्षा नाम चतुर्विंशतितमं प्रकरणम्॥

---

[1] T om. देवेषु. [2] आव्यूहः = समारोपः; निर्व्यूहः = अपवादः. We also have आयूह and निर्यूह in the same sense.

## निर्वाणपरीक्षा पञ्चविंशतितमं प्रकरणम् ।

अत्राह — B 519

**यदि शून्यमिदं सर्वमुदयो नास्ति न व्ययः ।**
**प्रहाणाद्वा निरोधाद्वा कस्य निर्वाणमिष्यते ।। १ ।।**

इह हि भगवता उषितब्रह्मचर्याणां तथागतशासनप्रतिपन्नानां धर्मानुधर्मप्रतिपत्तियुक्तानां पुद्गलानां द्विविधं निर्वाणमुपवर्णितं सोपधिशेषं निरुपधिशेषं च । तत्र निरवशेषस्य 5 अविद्यारागादिकस्य क्लेशगणस्य प्रहाणात् सोपधिशेषं निर्वाणमिष्यते । तत्र उपधीयतेऽस्मिन्नात्मस्नेहः इति उपधिः । उपधिशब्देन आत्मप्रज्ञप्तिनिमित्ताः पञ्चोपादानस्कन्धा उच्यन्ते । शिष्यत इति शेषः, उपधिरेव शेषः उपधिशेषः, सह उपधिशेषेण वर्तते इति सोपधिशेषम् । किं तत्? निर्वाणम् । तच्च स्कन्धमात्रकमेव केवलं सत्कायदृष्ट्यादिक्लेशतस्कररहितमवशिष्यते निहताशेषचौरगणग्राममात्रावस्थानसाधर्म्येण । तत् सोपधिशेषं निर्वाणम् । यत्र तु निर्वाणे 10 B 520 स्कन्धपञ्चकमपि नास्ति, तन्निरुपधिशेषं निर्वाणम् । निर्गतः उपधिशेषोऽस्मिन्निति कृत्वा । निहताशेषचौरगणस्य ग्राममात्रस्यापि विनाशसाधर्म्येण । तदेव च अधिकृत्य उच्यते —

[1]अभेदि कायो निरोधि सञ्ञा
वेदना पि ति दहंसु सब्बा ।
वूपसमिंसु संखारा 15
विञ्ञाणमत्थमगमा ति ।।

[ उदान – ८·९ ]

तथा —

असंलीनेन कायेन वेदनामध्यवासयत् ।
प्रद्योतस्येव निर्वाणं विमोक्षस्तस्य चेतसः ।। इति ।

[ थेरगाथा – ९०६ ]

तदेवं निरुपधिशेषं निर्वाणं स्कन्धानां निरोधाल्लभ्यते । एतच्च द्विविधं निर्वाणं कथं युज्यते 20 यदि क्लेशानां स्कन्धानां च निरोधो भवति? यदा तु सर्वमिदं शून्यम्, नैव किंचिदुत्पद्यते नापि किंचिन्निरुध्यते, तदा कुतः क्लेशाः, कुतो वा स्कन्धाः, येषां निरोधे निर्वाणं स्यादिति? तस्माद्विद्यत एव भावानां स्वभाव इति ।। १ ।।

अत्रोच्यते । ननु एवमपि सस्वभावाभ्युपगमे — B 521

**यद्यशून्यमिदं सर्वमुदयो नास्ति न व्ययः ।** 25
**प्रहाणाद्वा निरोधाद्वा कस्य निर्वाणमिष्यते ।। २ ।।**

---

१ The Sanskrit text of this stanza is corrupt. I have given it in Pali as it is found in Udāna, viii. 9.

स्वभावेन हि व्यवस्थितानां क्लेशानां स्कन्धानां च स्वभावस्यानपायित्वात् कुतो निवृत्तिः, यतस्तन्निवृत्त्या निर्वाणं स्यादिति? तस्मात् स्वभाववादिनां नैव निर्वाणमुपपद्यते। न च शून्यतावादिनः स्कन्धनिवृत्तिलक्षणं क्लेशनिवृत्तिलक्षणं वा निर्वाणमिच्छन्ति यतस्तेषामयं दोषः स्यादिति। अतः अनुपालम्भ एवायं शून्यवादिनाम्॥ २॥

5 यदि खलु शून्यतावादिनः क्लेशानां स्कन्धानां वा निवृत्तिलक्षणं निर्वाणं नेच्छन्ति, किंलक्षणं तर्हि इच्छन्ति? उच्यते—

अप्रहीणमसंप्राप्तमनुच्छिन्नमशाश्वतम्।
अनिरुद्धमनुत्पन्नमेतन्निर्वाणमुच्यते॥ ३॥

यद्धि नैव प्रहीयते रागादिवत्, नापि प्राप्यते श्रामण्यफलवत्, नाप्युच्छिद्यते स्कन्धादिवत्, 10 यच्चापि न नित्यमशून्यवत्, तत् स्वभावतोऽनिरुद्धमनुत्पन्नं च सर्वप्रपञ्चोपशमलक्षणं निर्वाणमुक्तम्। तत् कुतस्तस्मिन्नित्थंविधे निष्प्रपञ्चे क्लेशकल्पना येषां क्लेशानां प्रहाणान्निर्वाणं भवेत्? कुतो वा B 522 स्कन्धकल्पना तत्र, येषां स्कन्धानां निरोधात् तद्भवेत्? यावद्धि एताः कल्पनाः प्रवर्तन्ते, तावन्नास्ति निर्वाणाधिगमः, सर्वप्रपञ्चपरिक्षयादेव तदधिगमात्॥

अथ स्यात्—यद्यपि निर्वाणे न सन्ति क्लेशाः, न चापि स्कन्धाः, तथापि निर्वाणादर्वाग् 15 विद्यन्ते। ततस्तेषां परिक्षयान्निर्वाणं भविष्यतीति। उच्यते। त्यज्यतामयं ग्राहः, यस्मान्निर्वाणादर्वाक् स्वभावतो विद्यमानानां न पुनरभावः शक्यते कर्तुम्। तस्मान्निर्वाणाभिलाषिणा त्याज्यैषा कल्पना। वक्ष्यति हि—

निवाणस्य च या कोटिः कोटिः संसरणस्य च।
न तयोरन्तरं किंचित्सुसूक्ष्ममपि विद्यते॥ इति।

(म० शा०—२५.२०)

20 तदेवं निर्वाणे न कस्यचित् प्रहाणं नापि कस्यचिन्निरोध इति विज्ञेयम्। ततश्च निरवशेषकल्पनाक्षयरूपमेव निर्वाणम्। उक्तं च भगवता—

निर्वृत्ति[1] धर्माण न अस्ति धर्मा
ये नेह अस्ती न ते जातु अस्ति।
अस्तीति नास्तीति च कल्पनावता-
52 मेवं चरन्तान न दुःख शाम्यति॥ इति।

[समाधिराजसूत्र—९.२६]

अस्या गाथाया अयमर्थः—निर्वृतौ निरुपधिशेषे निर्वाणधातौ धर्माणां क्लेशकर्मजन्मलक्षणानां स्कन्धानां वा सर्वथा अस्तंगमादस्तित्वं नास्ति, एवं च सर्ववादिनामभिमतम्। ये B 523 तर्हि धर्मा इह निर्वृतौ न सन्ति, प्रदीपोदयादन्धकारोपलब्धरज्जुसर्पभयादिवत्, न ते जातु अस्ति, न ते धर्माः क्लेशकर्मजन्मादिलक्षणाः कस्मिंश्चित् काले संसारावस्थायामपि तत्त्वतो

[1] The reading in समाधिराजसूत्र is निर्वृत्ति. Some Mss. read निवृत्ति. I have adopted the text as it is given by चन्द्रकीर्ति.

विद्यन्ते। न हि रज्जुः अन्धकारावस्थायां स्वरूपतः सर्पोऽस्ति, सद्भूतसर्पवत् अन्धकारेऽपि आलोकेऽपि कायचक्षुर्ग्राह्यग्रहणात्। कथं तर्हि संसारः इति चेत्, उच्यते। आत्मात्मीयासद्ग्रहग्रस्तानां बालपृथग्जनानामसत्स्वरूपा अपि भावाः सत्यतः प्रतिभासन्ते तैमिरिकाणामिव असत्केशमशकादय इवेति। आह–

अस्तीति नास्तीति च कल्पनावता- 5
मेवं चरन्तान न दुःख शाम्यति। इति।

अस्तीति भावसद्भावकल्पनावतां जैमिनीयकाणादकापिलादीनां वैभाषिकपर्यन्तानाम्। नास्तीति च कल्पनावतां नास्तिकानामपायगतिनिष्ठानाम्। तदन्येषां च अतीतानागतसंस्थानां विज्ञप्तिविप्रयुक्तसंस्काराणां नास्तिवादिनां तदन्यदस्तिवादिनाम्, परिकल्पितस्वभावस्य नास्तिवादिनाम्, परतन्त्रपरिनिष्पन्नस्वभावयोरस्तिवादिनाम्, एवमस्तिनास्तिवादिनामेवं चरतां न दुःखं संसारः 10 शाम्यतीति। तथा–

यथ शङ्कितेन विषसंज्ञ अभ्युपेति B 524
नो चापि कोष्ठ गन्तु आविष्ट पपद्यते।
एवमेव बालुऽपगतो........
........जायि म्रियते सदा अभूतो॥ इति। 15

तदेवं न कस्यचिन्निर्वाणे प्रहाणं नापि कस्यचिन्निरोध इति विज्ञेयम्। ततश्च सर्वकल्पनाक्षयरूपमेव निर्वाणम्। यथोक्तमार्यरत्नावल्याम्[1]–

न चाभावोऽपि निर्वाणं कुत एवास्य भावना।
भावाभावपरामर्शक्षयो निर्वाणमुच्यते॥

इति॥ ३॥ 20

ये तु सर्वकल्पनोपशमरूपं निर्वाणमप्रतिपद्यमानाः भावाभावतदुभयानुभयरूपं निर्वाणं परिकल्पयन्ति, तान् प्रति उच्यते–

**भावस्तावन्न निर्वाणं जरामरणलक्षणम्।**
**प्रसज्येतास्ति भावो हि न जरामरणं विना॥ ४॥**

तत्रैके भावतो निर्वाणमभिनिविष्टा एवमाचक्षते–इह क्लेशकर्मजन्मसंतानप्रवृत्तिनियतरोधभूतो जलप्रवाहरोधभूतसेतुस्थानीयो निरोधात्मकः पदार्थः, तन्निर्वाणम्। न च अविद्यमानस्वभावो धर्मः एवं कार्यकारी दृश्यते। ननु च योऽस्या नन्दीरागसहगतायास्तृष्णायाः क्षयो विरागो निरोधो निर्वाणमित्युक्तम्, न च क्षयमात्रं भावो भवितुमर्हति। तथा– 25 B 525

प्रद्योतस्येव निर्वाणं विमोक्षस्तस्य चेतसः।

1. This work is attributed to नागार्जुन in नामसंगीतिटीका where this very stanza is quoted.

इत्युक्तम् । न च प्रद्योतस्य निवृत्तिर्भाव इत्युपपद्यते । उच्यते । नैतदेवं विज्ञेयं तृष्णायाः क्षयः तृष्णाक्षयः इति । किं तर्हि तृष्णायाः क्षयोऽस्मिन्निति निर्वाणाख्ये धर्मे सति भवति, स तृष्णाक्षय इति वक्तव्यम्[1] । प्रदीपश्च दृष्टान्तमात्रम् । तत्रापि यस्मिन् सति चेतसो विमोक्षो भवतीति वेदितव्यमिति ॥

5 एवं भावे निर्वाण व्यवस्थापिते आचार्यो निरूपयति—भावस्तावन्न निर्वाणम् । किं कारणम् ? यस्माज्जरामरणलक्षणं प्रसज्येत, भावस्य जरामरणलक्षणाव्यभिचारित्वात् । ततश्च निर्वाणमेव तन्न स्यात्, जरामरणलक्षणत्वाद्विज्ञानवत्, इत्यभिप्रायः ॥

तामेव च जरामरणलक्षणव्यभिचारितां स्पष्टयन्नाह— अस्ति भावो हि न जरामरणं विनेति । यो हि जरामरणरहितः, स भाव एव न संभवति, खपुष्पवत्, जरामरणरहितत्वात् ॥ ४ ॥

10 किं चान्यत्—

B 526

**भावश्च यदि निर्वाणं निर्वाणं संस्कृतं भवेत् ।**
**नासंस्कृतो हि विद्यते भावः क्वचन कश्चन ॥ ५ ॥**

यदि निर्वाणं भावः स्यात्, तदा तन्निर्वाणं संस्कृतं भवेत्, विज्ञानादिवत् भावत्वात् । यस्तु असंस्कृतः, नासौ भावः, तद्यथा खरविषाणवदिति व्यतिरेकमुपदर्शयन्नाह –

15 नासंस्कृतो हि विद्यते भावः क्वचन कश्चन ।

क्वचनेत्यधिकरणे देशे काले सिद्धान्ते वा । कश्चनेत्याधेये । आध्यात्मिको बाह्यात्मिको वेत्यर्थः ॥ ५ ॥

किं चान्यत्—

**भावश्च यदि निर्वाणमनुपादाय तत्कथम् ।**
20 **निर्वाणं नानुपादाय कश्चिद् भावो हि विद्यते ॥ ६ ॥**

यदि भवन्मतेन निर्वाणं भावः स्यात्, तदुपादाय भवेत्, स्वकारणसामग्रीमाश्रित्य भवेदित्यर्थः । न चैवमुपादाय निर्वाणमिष्यते, किं तर्हि अनुपादाय । तद्यदि भावो निर्वाणमनुपादाय, तत् कथं निर्वाणं स्यात् ? नैव अनुपादाय स्यात्, भावत्वात्, विज्ञानादिवत् । व्यतिरेककारणमाह—नानुपादाय कश्चिद्भावो हि विद्यते इति ॥ ६ ॥

B 527 25 अत्राह—यदि भावो हि न निर्वाणम्, यथोदितदोषप्रसङ्गात्, किं तर्हि अभाव एव निर्वाणम्, क्लेशजन्मनिवृत्तिमात्रत्वादिति ? उच्यते । एतदप्ययुक्तम्, यस्मात्—

**यदि भावो न निर्वाणमभावः किं भविष्यति ।**
**निर्वाणं यत्र भावो न नाभावस्तत्र विद्यते ॥ ७ ॥**

यदि भावो निर्वाणं नेष्यते, यदि निर्वाणं भाव इति नेष्यते, तदा किमभावो भविष्यति 30 निर्वाणम् ? अभावोऽपि न भविष्यतीत्यर्थः । क्लेशजन्मनोरभावो निर्वाणमिति चेत्, एवं तर्हि

[1] T वेदितव्यम् for वक्तव्यम्.

क्लेशजन्मनोरनित्यता निर्वाणमिति स्यात्। अनित्यतैव हि क्लेशजन्मनोरभावो नान्यत्, इत्यतः अनित्यतैव निर्वाणं स्यात्। न चैतदिष्टम्, अयत्नेनैव मोक्षप्रसङ्गादित्युक्तमेवैतत्॥ ७॥

किं चान्यत्—

**यद्यभावश्च निर्वाणमनुपादाय तत्कथम्।**
**निर्वाणं न ह्यभावोऽस्ति योऽनुपादाय विद्यते॥ ८॥** 5

तत्र अभावः अनित्यता वा भावमुपादाय प्रज्ञप्यते, खरविषाणादीनामनित्यतानुपलम्भात्। लक्षणमाश्रित्य लक्ष्यं प्रज्ञप्यते, लक्ष्यमाश्रित्य च लक्षणम्। अतः परस्परापेक्षिक्यां लक्ष्यलक्षण-प्रवृत्तौ कुतो लक्ष्यं भावमपेक्ष्य अनित्यता भविष्यति? तस्मादभावोऽप्युपादाय प्रज्ञप्यते। ततो यदि अभावश्च निर्वाणम्, तत् कथमनुपादाय निर्वाणं भवेत्? उपादायैव तद्भवेत्, अभावत्वा-द्विनाशवत्। एतदेव स्पष्टयन्नाह— न ह्यभावोऽस्ति योऽनुपादाय विद्यते इति॥ B 528 10

यदि तर्हि अभावः अनुपादाय नास्ति, किमिदानीमुपादाय वन्ध्यापुत्रादयोऽभावा भविष्यन्ति? केनैतदुक्तं वन्ध्यापुत्रादयोऽभावा इति? उक्तं हि पूर्वम्—

भावस्य चेदप्रसिद्धिरभावो नैव सिध्यति।
भावस्य ह्यन्यथाभावमभावं ब्रुवते जनाः॥ इति।

[म॰ शा॰ – १५.५]

तस्मान्न वन्ध्यापुत्रादीनामभावत्वम्। यच्चाप्युच्यते— 15

आकाशं शशशृङ्गं च वन्ध्यायाः पुत्र एव च।
असन्तश्चाभिलप्यन्ते[1] तथा भावेषु कल्पना॥ इति,

[लङ्कावतारसूत्र – २.१६६, १०.४५३]

तत्रापि भावकल्पनाप्रतिषेधमात्रम्, न अभावकल्पना, भावत्वासिद्धेरेवेति विज्ञेयम्। वन्ध्यापुत्र इति शब्दमात्रमेवैतत्, न अस्य अर्थः उपलभ्यते, यस्यार्थस्य भावत्वमभावत्वं वा स्यादिति। कुतः अनुपलभ्यमानस्वभावस्य भावाभावकल्पना योक्ष्यते? तस्मात् न वन्ध्यापुत्रोऽभाव इति विज्ञेयम्। ततश्च स्थितमेव न ह्यभावोऽस्ति योऽनुपादाय विद्यते इति॥ ८॥ 20

अत्राह—यदि भावो निर्वाणं न भवति, अभावोऽपि, किं तर्हि निर्वाणमिति? उच्यते। इह हि भगवद्भिस्तथागतैः—

**य आजवंजवीभाव उपादाय प्रतीत्य वा।**
**सोऽप्रतीत्यानुपादाय निर्वाणमुपदिश्यते॥ ९॥** B 529 25

तत्र आजवंजवीभावः आगमनगमनभावजन्ममरणपरंपरेत्यर्थः। स चायमाजवंजवीभावः कदाचिद्धेतुप्रत्ययसामग्रीमाश्रित्य अस्तीति प्रज्ञप्यते दीर्घह्रस्ववत्। कदाचिदुत्पद्यत इति प्रज्ञप्यते प्रदीपप्रभावद् बीजाङ्कुरवत्। सर्वथा यद्ययमुपादाय प्रज्ञप्यते, यदि वा प्रतीत्य जायत इति व्यवस्थाप्यते, सर्वथास्य जन्ममरणपरंपराप्रबन्धस्य अप्रतीत्य वा अनुपादाय वा अप्रवृत्तिस्तन्निर्वाण-

---

१ असन्तो ह्यभिलप्यन्ते at 2.166, but as above at 10.453.

मिति व्यवस्थाप्यते। न च अप्रवृत्तिमात्रं भावोऽभावो वेति परिकल्पितु पार्यत इति। एवं न भावो नाभावो निर्वाणम् ॥

अथवा। येषां संस्काराः संसरन्तीति पक्षः, तेषां प्रतीत्य प्रतीत्य य उत्पादश्च विनाशश्च, सोऽप्रतीत्याप्रवर्तमानो निर्वाणमिति कथ्यते। येषां तु पुद्गलः संसरति, तेषां तस्य नित्यानित्यत्वेना-

B 530 5 वाच्यस्य तत्तदुपादानमाश्रित्य य आजवंजवीभावः स उपादाय प्रवर्तते, स एवोपादायोपादाय प्रवर्तयमानः सन्निदानीमनुपादायाप्रवर्तयमानो निर्वाणमिति व्यपदिश्यते। न च संस्काराणां पुद्गलस्य वा अप्रवृत्तिमात्रकं भावोऽभावो वेति शक्यं परिकल्पयितुम्। इत्यतोऽपि न भावो नाभावो निर्वाणमिति युज्यते ॥ ९ ॥

किं चान्यत्–

10 **प्रहाणं चाब्रवीच्छास्ता भवस्य विभवस्य च।**
**तस्मान्न भावो नाभावो निर्वाणमिति युज्यते ॥ १० ॥**

तत्र सूत्र उक्तम्–ये केचिद्भिक्षवो भवेन भवस्य निःसरणं पर्येषन्ते विभवेन वा, अपरिज्ञानं [ तं ? ] तत्तेषामिति। उभयं ह्येतत् परित्याज्यं भवे तृष्णा विभवे तृष्णा च। न चैतन्निर्वाणं प्रहातव्यमुक्तं भगवता, किं तर्हि अप्रहातव्यम्। तद्यदि निर्वाणं भावरूपं

15 स्यादभावरूपं वा, तदपि प्रहातव्यं भवेत्। न च प्रहातव्यम्।

तस्मान्न भावो नाभावो निर्वाणमिति युज्यते ॥

येषामपि क्लेशजन्मनोस्तत्राभावादभावरूपं निर्वाणं स्वयं च भावरूपत्वाद्भावरूपमित्युभय-रूपम्, तेषामुभयरूपमिति निर्वाणं नोपपद्यते, इति प्रतिपादयन्नाह–

B 531 **भवेदभावो भावश्च निर्वाणमुभयं यदि।**
20 **भवेदभावो भावश्च मोक्षस्तच्च न युज्यते ॥ ११ ॥**

यदि भावाभावोभयरूपं निर्वाणं स्यात्, तदा भावश्च अभावश्च मोक्ष इति स्यात्। ततश्च यः संस्काराणामात्मलाभः तस्य च विगमः, स एव मोक्षः स्यात्। न च संस्कारा एव मोक्ष इति युज्यते। अत एवाह–तच्च न युज्यते इति ॥ ११ ॥

किं चान्यत्–

25 **भवेदभावो भावश्च निर्वाणमुभयं यदि।**
**नानुपादाय निर्वाणमुपादायोभयं हि तत् ॥ १२ ॥**

यदि भावाभावरूपं निर्वाणं स्यात्, तदा हेतुप्रत्ययसामग्रीमुपादाय आश्रित्य भवेत्, न अनुपादाय। किं कारणम् ? यस्मादुपादायोभयं हि तत्। भावमुपादाय अभावः, अभावं चोपादाय भावः, इति कृत्वा उभयमेतद् भावं च अभावं च उपादायैव भवति, न अनुपादाय।

30 एवं निर्वाणं भवेद् भावाभावरूपम्। न चैतदेवम्, इति न युक्तमेतत् ॥ १२ ॥

---

१ The Pali text corresponding to it is उदान, iii. 10.

किं चान्यत्—

**भवेदभावो भावश्च निर्वाणमुभयं कथम्।**
**असंस्कृतं च निर्वाणं भावाभावौ च संस्कृतौ ॥ १३ ॥**

भावो हि स्वहेतुप्रत्ययसामग्रीसंभूतत्वात् संस्कृतः। अभावोऽपि [ भावं ] प्रतीत्य संभूतत्वात्, जातिप्रत्ययजरामरणवचनाच्च संस्कृतः। तद्यदि भावाभावस्वभावं निर्वाणं स्यात्, तदा न असंस्कृतम्, [ किं तु ] संस्कृतमेव। यस्मान्न च संस्कृतमिष्यते, तस्मान्न भावाभावस्वरूपं निर्वाणं युज्यते ॥ १३ ॥ B 532 5

अथापि स्यात्—नैव हि निर्वाणं भावाभावस्वरूपम्, किं तर्हि निर्वाणे भावाभावाविति। एवमपि न युक्तम्। कुतः? यस्मात्—

**भवेदभावो भावश्च निर्वाणे उभयं कथम्।** 10
**[ तयोरेकत्र नास्तित्वमालोकतमसोर्यथा ][1] ॥ १४ ॥**

भावाभावयोरपि परस्परविरुद्धयोरेकत्र निर्वाणे नास्ति संभव इति, अतः,

भवेदभावो भावश्च निर्वाणे उभयं कथम्।

नैव भवेदित्यभिप्रायः ॥ १४ ॥

इदानीं यथा नैव भावो नैवाभावो निर्वाणं युज्यते, तथा प्रतिपादयन्नाह— 15

**नैवाभावो नैव भावो निर्वाणमिति याञ्जना।**
**अभावे चैव भावे च सा सिद्धे सति सिध्यति ॥ १५ ॥**

यदि हि भावो नाम कश्चित् स्यात्, तदा तत्प्रतिषेधेन नैव भावो निर्वाणमित्येषा कल्पना, यदि कश्चिदभावः स्यात्, तदा तत्प्रतिषेधेन नैवाभावो निर्वाणं स्यात्। यदा च भावाभावावेव न स्तः, तदा तत्प्रतिषेधोऽपि नास्तीति। तस्मान्नैव भावो नैवाभावो निर्वाणमिति या कल्पना, साऽपि नोपपद्यत एव। इति न युक्तमेतत् ॥ १५ ॥ B 533 20

किं चान्यत्—

**नैवाभावो नैव भावो निर्वाणं यदि विद्यते।**
**नैवाभावो नैव भाव इति केन तदज्यते ॥ १६ ॥**

यदि एतन्निर्वाणं नैवाभावरूपं नैव भावरूपमस्तीति कल्प्यते, केन तदानीं तदित्थंविधं नोभयरूपं निर्वाणमस्तीति अज्यते गृह्यते प्रकाशते वा? किं तत्र निर्वाणे कश्चिदेवंविधः प्रतिपत्तास्ति, अथ नास्ति? यदि अस्ति, एवं सति निर्वाणेऽपि तवात्मा स्यात्। न चेष्टम्, निरुपादानस्यात्मनोऽस्तित्वाभावात्। अथ नास्ति, केनैतदित्थंविधं निर्वाणमस्तीति परिच्छिद्यते? संसारावस्थितः परिच्छिनत्तीति चेत्, यदि संसारावस्थितः परिच्छिनत्ति, स किं विज्ञानेन परिच्छिनत्ति, उत ज्ञानेन? यदि विज्ञानेनेति परिकल्प्यते, तन्न युज्यते। किं कारणम्? 25 30

---

१. This line of the Kārikā is missing in Mss. as also in the Tibetan translation, but is given in the translation of the text of Kārikās found in Mdo, XVII and is also cited in the *Madhyamakāvatāra* by Candrakīrti. Poussin reads न तयोरेकत्रास्तित्वम्.

यस्मान्निमित्तालम्बनं विज्ञानम्[१], न च निर्वाणे किंचिन्निमित्तमस्ति, तस्मान्न तत्तावद्विज्ञानेनालम्ब्यते। ज्ञानेनापि न ज्ञायते। किं कारणम्? यस्माद् ज्ञानेन हि शून्यतालम्बनेन भवितव्यम्, तच्च अनुत्पादरूपमेवेति, कथं तेनाविद्यमानस्वरूपेण नैवाभावो नैव भावो निर्वाणमिति गृह्यते, सर्वप्रपञ्चातीतरूपत्वाद् ज्ञानस्येति। तस्मान्न केनचिन्निर्वाणं नैवाभावो नैव भाव इत्यज्यते। अनज्यमानमप्रकाश्यमानमगृह्यमाणं तदेवमस्तीति न युज्यते॥ १६॥

B 534

5

सर्वथा यथा च निर्वाणे एताश्चतस्रः कल्पना न संभवन्ति, एवं निर्वाणाधिगन्तर्यपि तथागते एताः कल्पना नैव संभवन्तीति प्रतिपादयन्नाह—

**परं निरोधाद्भगवान् भवतीत्येव नोह्यते।**
**न भवत्युभयं चेति नोभयं चेति नोह्यते॥ १७॥**

10

उक्तं हि पूर्वम्—

घनग्राहगृहीतस्तु येनास्तीति तथागतः।
नास्तीति वा कल्पयन् स निर्वृतस्य विकल्पयेत्॥

[म० शा० — २२.१३]

एवं तावत् परं निरोधाद्भवति तथागतो न भवति चेति नोह्यते। एतद्द्वयस्याभावादुभयमित्यपि नोह्यते। उभयस्याभावादेव नोभयमिति नोह्यते न गृह्यते॥ १७॥

15

न च केवलं परं निरोधाच्चतुर्भिः प्रकारैर्भगवान्नोह्यते, अपि च—

**तिष्ठमानोऽपि भगवान् भवतीत्येव नोह्यते।**
**न भवत्युभयं चेति नोभयं चेति नोह्यते॥ १८॥**

B 535

यथा नाज्यं न चोह्यं तथा तथागतपरीक्षायां प्रतिपादितम्॥ १८॥

अत एव—

**न संसारस्य निर्वाणात्किंचिदस्ति विशेषणम्।**
**न निर्वाणस्य संसारात्किंचिदस्ति विशेषणम्॥ १९॥**

20

यस्मात्तिष्ठन्नपि भगवान् भवतीत्येवमादिना नोह्यते, परिनिर्वृतोऽपि नोह्यते भवतीत्येवमादिना, अत एव संसारनिर्वाणयोः परस्परतो नास्ति कश्चिद्विशेषः, विचार्यमाणयोस्तुल्यरूपत्वात्। यच्चापीदमुक्तं भगवता—अनवराग्रो हि भिक्षवो जातिजरामरणसंसार इति, तदपि अत एवोपपन्नम्, संसारनिर्वाणयोर्विशेषस्याभावात्॥ १९॥

---

१ Although the contents of this kārikā are identical with that given in xxii. 13, the wording of the original as well as of the Tibetan Translation differs. There the Sk. version runs :—

येन ग्राहो गृहीतस्तु घनोऽस्तीति तथागतः।
नास्तीति स विकल्पयन् निर्वृतस्यापि कल्पयेत्॥

तथाहि –

निर्वाणस्य च या कोटिः कोटिः संसरणस्य च ।
न तयोरन्तरं किंचित्सुसूक्ष्ममपि विद्यते ॥ २० ॥

न च केवलं संसारस्य निर्वाणेनाविशिष्टत्वात् पूर्वापरकोटिकल्पना न संभवति, या अप्येताः– 5

परं निरोधादन्ताद्याः शाश्वताद्याश्च दृष्टयः ।
निर्वाणमपरान्तं च पूर्वान्तं च समाश्रिताः ॥ २१ ॥ B 536

ता अपि अत एव नोपपद्यन्ते, संसारनिर्वाणयोरुभयोरपि प्रकृतिशान्तत्वेनैकरसत्वात् ॥

तत्र परं निरोधादित्यनेनोपलक्षणेन चतस्रो दृष्टयः परिगृह्यन्ते । तद्यथा - भवति तथागतः परं मरणात्, न भवति तथागतः परं मरणात, भवति च न भवति च तथागतः परं मरणात्, 10 नैव भवति न न भवति तथागतः परं मरणादिति । एताश्चतस्रो दृष्टयो निर्वाणपरामर्शेन प्रवृत्ताः ॥

अन्ताद्या अपि दृष्टयः । तद्यथा – अन्तवान् लोकः, अनन्तवांश्च, अन्तवांश्चानन्तवांश्च, नैवान्तवान् नानन्तवान् लोकः इति । एताश्चतस्रो दृष्टयोऽपरान्तं समाश्रित्य प्रवृत्ताः । तत्र आत्मनो लोकस्य वा अनागतमुत्पादमपश्यन् अन्तवान् लोक इत्येवं कल्पयन् अपरान्तमालम्ब्य प्रवर्तते । एवमनागतमुत्पादं पश्यन् अनन्तवान् लोक इति प्रवर्तते । पश्यंश्च अपश्यंश्च उभयथा 15 प्रतिपद्यते । द्वयप्रतिषेधेन नैवान्तवान् नानन्तवानिति प्रतिपद्यते । शाश्वतो लोकः, अशाश्वतो लोकः, शाश्वतश्चाशाश्वतश्च, नैवशाश्वतो नैवाशाश्वतो लोकः, इत्येताश्चतस्रो दृष्टयः पूर्वान्तं समाश्रित्य प्रवर्तन्ते । तत्र आत्मनो लोकस्य वा अतीतमुत्पादं पश्यन् शाश्वतो लोक इति प्रतिपद्यते, अपश्यन्नशाश्वत इति प्रतिपद्यते, पश्यंश्च अपश्यंश्च शाश्वतश्चाशाश्वतश्चेति प्रतिपद्यते, नैव पश्यन्नैवा-पश्यन् नैवशाश्वतो नाशाश्वतश्चेति प्रतिपद्यते पूर्वान्तमाश्रित्य । ताश्चैता दृष्टयः कथं युज्यन्ते ? 20 B 537 यदि कस्यचित्पदार्थस्य कश्चित् स्वभावो भवेत्, तस्य भावाभावकल्पनात् स्युरेता दृष्टयः । यदा तु संसारनिर्वाणयोरविशेषः प्रतिपादितः, तदा –

शून्येषु सर्वधर्मेषु किमनन्तं किमन्तवत् ।
किमनन्तमन्तवच्च नानन्तं नान्तवच्च किम् ॥ २२ ॥
किं तदेव किमन्यत्किं शाश्वतं किमशाश्वतम् । 25
अशाश्वतं शाश्वतं च किं वा नोभयमप्यतः ॥ २३ ॥

चतुर्दशाप्येतानि[1] अव्याकृतवस्तूनि असति भावस्वरूपे नैव युज्यन्ते । यस्तु भावस्वरूप-मध्यारोप्य तद्विगमाविगमतः एता दृष्टीरुत्पाद्य अभिनिविशते, तस्यायमभिनिवेशो निर्वाणपुरगामिनं पन्थानं निरुणद्धि, सांसारिकेषु च दुःखेषु नियोजयतीति विज्ञेयम् ॥ २३ ॥

अत्राह – यदि एवं भवता निर्वाणमपि प्रतिषिद्धम्, ननु च य एष भगवता अनन्त- 30 चरितसत्त्वराश्यनुवर्तकेन विदिताविपरीतसकलजगदाशयस्वभावेन[2] महाकरुणापरतन्त्रेण प्रियैकपुत्र-[3] कप्रेमानुगताशेषत्रिभुवनजनेन चरितप्रतिपक्षानुरूपो धर्मो देशितो लोकस्य निर्वाणाधिगमार्थम्,

---

१ Candrakirti does not explain the last two avyākṛtas, viz, किं तदेव किमन्यत्किम्.
२ T om. आशय. ३ T om. प्रियैक...जनेन.

B 538 स एवं सति व्यर्थ एव जायते। उच्यते—यदि कश्चिद्धर्मो नाम स्वभावरूपतः स्यात्, केचिच्च सत्त्वास्तस्य धर्मस्य श्रोतारः स्युः, कश्चिद्वा देशिता बुद्धो भगवान्नाम भावस्वभावः स्यात्, स्यादेतदेवम्। यदा तु—

सर्वोपलम्भोपशमः प्रपञ्चोपशमः शिवः।
5 न क्वचित्कस्यचित्कश्चिद्धर्मो बुद्धेन देशितः॥ २४॥

तदा कुतोऽस्माकं यथोक्तदोषप्रसङ्गः? इह हि सर्वेषां प्रपञ्चानां निमित्तानां य उपशमोऽप्रवृत्तिस्तन्निर्वाणम्। स एव चोपशमः प्रकृत्यैवोपशान्तत्वाच्छिवः। वाचामप्रवृत्तेर्वा प्रपञ्चोपशमश्चित्तस्याप्रवृत्तेः शिवः। क्लेशानामप्रवृत्त्या वा जन्मनोऽप्रवृत्त्या शिवः। क्लेशप्रहाणेन वा प्रपञ्चोपशमो निरवशेषवासनाप्रहाणे शिवः। ज्ञेयानुपलब्ध्या वा प्रपञ्चोपशमो ज्ञानानुपलब्ध्या शिवः। यदा 10 चैवं बुद्धा भगवन्तः सर्वप्रपञ्चोपशान्तरूपे निर्वाणे शिवेऽस्थानयोगेन नभसीव हंसराजाः स्थिताः स्वपुण्यज्ञानसंभारपक्षपातवाते वातगगने वा गगनस्याकिंचनत्वात्, तदा सर्वनिमित्तानुपलम्भान्न B 539 क्वचिद्देवेषु वा मनुष्येषु वा न कस्यचिद्देवस्य वा मनुष्यस्य वा न कश्चिद्धर्मः सांक्लेशिको वा वैयवदानिको वा देशित इति विज्ञेयम्। यथोक्तमार्यतथागतगुह्यसूत्रे—"यां च रात्रिं शान्तमते तथागतोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः, यां च रात्रिमनुपादाय परिनिर्वास्यति, अत्रान्तरे तथागते-15 नैकमप्यक्षरं नोदाहृतं न व्याहृतं नापि प्रव्याहरति नापि प्रव्याहरिष्यति। अथ च यथाधिमुक्ताः सर्वसत्त्वा नानाधात्वाशयास्तां तां विविधां तथागतवाचं निश्चरन्तीं संजानन्ति। तेषामेवं पृथक् पृथग्भवति—अयं भगवानस्मभ्यमिमं धर्मं देशयति, वयं च तथागतस्य धर्मदेशनां शृणुमः। तत्र तथागतो न कल्पयति न विकल्पयति। सर्वकल्पविकल्पजालवासनाप्रपञ्चविगतो हि शान्तमते तथागतः"। इति विस्तरः॥

20 तथा—

अवाचऽनक्षराः सर्वशून्याः शान्तादिनिर्मलाः।
य एवं जानति धर्मान् कुमारो बुद्ध सोच्यते॥

यदि तर्ह्येवं न क्वचित्कस्यचित्कश्चिद्धर्मो बुद्धेन देशितः, तत्कथमिमे एते विचित्राः प्रवचनव्यवहाराः प्रज्ञायन्ते? उच्यते। अविद्यानिद्रानुगतानां देहिनां स्वप्नायमानानामिव 25 स्वविकल्पाभ्युदय एषः—अयं भगवान् सकलत्रिभुवनसुरासुरनरनाथः इमं धर्ममस्मभ्यं देशयतीति। यथोक्तं भगवता—

B 540 तथागतो हि प्रतिबिम्बभूतः
कुशलस्य धर्मस्य अनास्रवस्य।
नैवात्र तथता न तथागतोऽस्ति
बिम्बं च संदृश्यति सर्वलोके॥ इति।

एतच्च तथागतवाग्गुह्यपरिवर्ते विस्तरेण व्याख्यातम्। ततश्च निर्वाणार्थं धर्मदेशनाया अभावात् कुतो धर्मदेशनायाः सद्भावेन निर्वाणस्यास्तित्वं भविष्यति? तस्मान्निर्वाणमपि नास्तीति सिद्धम्। उक्तं च भगवता—

अनिर्वाणं हि निर्वाणं लोकनाथेन देशितम्।
आकाशेन कृतो ग्रन्थिराकाशेनैव मोचितः॥ इति। 5

तथा—न तेषां भगवन् संसारसमतिक्रमो ये निर्वाणं भावतः पर्येषन्ते। तत्कस्य हेतोः? निर्वाणमिति भगवन् यः प्रशमः सर्वनिमित्तानामुपरतिः सर्वेञ्जितसमिञ्जितानाम्। तदिमे भगवन् मोहपुरुषा ये स्वाख्याते धर्मविनये प्रव्रज्य तीर्थिकदृष्टौ निपतिता निर्वाणं भावतः पर्येषन्ते B 541 तद्यथा तिलेभ्यस्तैलं क्षीरात्सर्पिः। अत्यन्तपरिनिर्वृतेषु भगवन् सर्वधर्मेषु ये निर्वाणं मार्गन्ति तानहमाभिमानिकान् तीर्थिकानिति[1] वदामि। न भगवन् योगाचारः सम्यक् प्रतिपन्नः 10 कस्यचिद्धर्मस्योत्पादं वा निरोधं वा करोति, नापि कस्यचिद्धर्मस्य प्राप्तिमिच्छति नाभिसमयमिति विस्तरः॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
निर्वाणपरीक्षा नाम पञ्चविंशतितमं प्रकरणम्॥

---

१ T om. आभिमानिकान्.

## द्वादशाङ्गपरीक्षा षड्विंशतितमं प्रकरणम् ।

B 542 अत्राह — यदुक्तम् —

य: प्रतीत्यसमुत्पाद: शून्यतां तां प्रचक्ष्महे ।
सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा ॥ इति,

[म० शा० – २४·१८]

क: पुनरसौ प्रतीत्यसमुत्पाद:, य: शून्यतेत्युच्यते ?

5 अथवा । यदेतदुक्तम् —

य: प्रतीत्यसमुत्पादं पश्यतीदं स पश्यति ।
दु:खं समुदयं चैव निरोधं मार्गमेव च ॥ इति,

[म० शा० – २४·४०]

तत्कतमोऽसौ प्रतीत्यसमुत्पाद: इति ? अतस्तदङ्गप्रभेदविवक्षयेदमुच्यते —

**पुनर्भवाय संस्कारानविद्यानिवृतस्त्रिधा ।**
10 **अभिसंस्कुरुते यांस्तैर्गतिं गच्छति कर्मभि: ॥ १ ॥**

तत्र अविद्या अज्ञानं तमो यथाभूतार्थप्रच्छादकं स्तिमितता[1] । अविद्यया निवृत: छादित: B 543 पुद्गल: पुनर्भवाय पुनर्भवार्थं पुनर्भवोत्पत्त्यर्थमभिसंस्करोति उत्पादयति यान् कुशलादिचेतनाविशेषांस्ते[2] पुनर्भवाभिसंस्कारात् संस्कारा: । ते च त्रिविधा: — कुशला अकुशला आनेज्याश्च, यदि वा — कायिका वाचिका मानसाश्चेति । तांस्त्रिविधान् कर्मलक्षणान् संस्कारानविद्यानिवृत: पुद्गल: 15 करोति । तैश्च संस्कारैरभिसंस्कृतै: कर्मभि: कर्मसंज्ञितै: तद्धेतुकां गतिं गच्छति ॥ १ ॥

ततोऽस्य —

**विज्ञानं संनिविशते संस्कारप्रत्ययं गतौ ।**

कृतोपचितसंस्कारस्यास्य पुद्गलस्य संस्कारानुरूपायां गतौ देवादिकायां संस्कारहेतुकं विज्ञानं संनिविशते प्रविशति उपपद्यते संसारानर्थबीजभूतम्[3] । तत उत्तरकालम् —

20 **संनिविष्टेऽथ विज्ञाने नामरूपं निषिच्यते ॥ २ ॥**

B 544 तत्र कर्मक्लेशाविद्धं तस्मिंस्तस्मिन्नुपपत्त्यायतने नामयतीति नाम, संज्ञावशेन वा अर्थेषु नामयतीति नाम ।

चत्वारोऽरूपिण: स्कन्धा नामेति व्यपदिश्यते ।

रूप्यत इति रूपम् । बाध्यत इत्यर्थ: । इदं च रूपं पूर्वकं च नाम, उभयमेतदभिसंक्षिप्य 25 नामरूपमिति व्यवस्थाप्यते । तत्र बिम्बप्रतिबिम्बन्यायेन स्वाध्यायदीपमुद्राप्रतिमुद्रादिन्यायेन वा[4] मारणान्तिकेषु स्कन्धेषु निरुध्यमानेषु एकस्मिन्नेव क्षणे तुलादण्डनामोन्नामन्यायेनैव औपपत्त्यांशिका:

---

१ T om. स्तिमितता, but has तया अविद्यया निवृत्त:. २ Mss. कुशलाकुशलानेञ्ज्यादिचेतनाविशेषास्ते for कुशलादिचेतनाविशेषांस्ते. ३ Mss. संस्कारा० for संसारा०. ४ T om. स्वाध्याय ... वा.

स्कन्धा यथाकर्माक्षेपत उपजायन्ते । ऐवं च बिम्बिप्रतिबिम्बमुद्राप्रतिमुद्रान्यायेन प्रतीत्यसमुत्पादः सिध्यति । तुलादण्डनामोन्नामन्यायेन तु यद्विज्ञानं संनिविशते इत्युक्तम्, तद् बाललोकबोधानुरोधेन, समानकाल एव भवप्रतिसंधिरिति । B 545

तथा समानेन समानकालं
लोकस्य दुःखं च सुखोदयं च । 5
हर्तुं च कर्तुं च सदास्तु शक्ति-
स्तमः प्रकाशं च यथैव भानोः ॥ इति ।

[ मध्यमकावतार – ६·१८ ]

न तु पुनः प्रतीत्यसमुत्पादस्वरूपविचक्षणानामेवं वक्तुं युज्यते साहचर्यादित्वमेकक्षणे तुलादण्डनामोन्नामदृष्टान्तेनेति ।

जन्मोन्मुखं न सदिदं यदि जायमानं 10
नाशोन्मुखं सदपि नाम निरुध्यमानम् ।
इष्टं तदा कथमिदं तुल्यया समानं
कर्त्रा विना जनिरियं न च युक्तरूपा ॥

[ मध्यमकावतार –६·१९ ]

इत्यादिवचनात् । यथा बिम्बप्रतिबिम्बमुद्राप्रतिमुद्रादिन्यायेन क्षणिकत्वं नेष्यते भवद्भिः, तथा अन्यस्यापि भावस्य उत्पादसमनन्तरध्वंसिनः क्षणिकत्वं न युक्तम् । यतः जातिजरास्थित्यनि- 15 त्यताख्यानि चत्वारि संस्कृतलक्षणानि उत्पद्यमानस्य भावस्य बाह्यस्य आध्यात्मिकस्य वा एकस्मिन्नेव क्षणे भवन्तीत्यभिधर्मपाठः । तत्र जातिजरयोः परस्परविरोधात् स्थित्यनित्यतयोश्च एकस्मिन्नेव भावे न युगपत्संभव इष्यते सद्भिः । B 546

क्षणिके सर्वथाभावात्कुतः काचित्पुराणता ।
स्थैर्यादक्षणिके चापि कुतः काचित्पुराणता ॥ 20

यथान्तोऽस्ति क्षणस्यैवमादिमध्यं च कल्प्यताम् ।
अन्तकत्वात्क्षणस्यैवं न लोकस्य क्षणस्थितिः ॥

आदिमध्यावसानानि चिन्त्यानि क्षणवत्पुनः ।
आदिमध्यावसानत्वं न स्वतः परतोऽपि वा ॥

इति मध्यमकसिद्धान्तपाठात् क्षणिकपदार्थासिद्धेरसिद्धिरवसेया । न च जातिमरणयोः 25 परस्परभिन्नलक्षणयोः एकस्मिन् क्षणे संभवो भवेत्, संशयनिश्चयज्ञानयोरालोकान्धकारयोर्ज्ञाना-ज्ञानयोर्बीजाङ्कुरयोर्मरणभवोपपत्तिभवयोर्भिन्नलक्षणयोरित्यादिवत् । परस्परनिरपेक्षयोरेव स्वहेतुप्रत्यय-सिद्धयोः सहभावो युज्यते सव्येतरगोविषाणयोर्युवतिस्तनयोर्नरकर्णयोरित्यादिवत्, न तु पुनः कदाचिदपि परस्परविरुद्धयोर्विनाशोत्पादयोः । यथोक्तं रागरक्तपरीक्षायाम्— 30 B 547

१. T om. from एवं च down to बिम्बप्रतिबिम्बादिन्यायेन on page ... below

सहैव पुनरुद्भूतिर्न युक्ता रागरक्तयोः ।
भवेतां रागरक्तौ हि निरपेक्षौ परस्परम् ॥
नैकत्वे सहभावोऽस्ति न तेनैव हि तत्सह ।
पृथक्त्वे सहभावोऽथ कुत एव भविष्यति ॥
5 एवं रक्तेन रागस्य सिद्धिर्न सह नासह ।
रागवत्सर्वधर्माणां सिद्धिर्न सह नासह ॥

[म० शा० – ६.३,४,१०]

इति प्रतिषेधात् कुतः समानकालता भावानां मरणभवोपपत्तिभवयोरिति ? अतः सहभावो विनेयजनबोधानुरोधप्रवृत्त एवेति लक्ष्यते। तेन नैकस्मिन्नेव क्षणे नामोन्नामौ तुलायाः संभवतः नामोन्नामयोः कालभेदात्। बलवत्पुरुषाच्छटामात्रेण पञ्चषष्टिः क्षणा अतिक्रामन्तीति पाठात्, 10 उत्पलपत्रशतसहस्रवेधवत् सूच्यग्रेणेति। तथापि अत्र उत्पलपत्रशतसहस्रवेधः सूच्यग्रेण क्रमशो वेधोऽवसेयः क्षणानामतिसूक्ष्मत्वात्। एकक्षणेन श्लोकाक्षरपदोदाहरणवत् ॥

B 548 किं च–

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम् ।
अनेकार्थमनानार्थमनागममनिर्गमम् ॥
15 यः प्रतीत्यसमुत्पादं प्रपञ्चोपशमं शिवम् ।

[म० शा० –१·१–२]

इति पाठादुत्पादनिरोधयोरसंभव एव प्रतिपादितः शास्त्रे मध्यमके। आगमसूत्रेषु–

अविनाशमनुत्पन्नं धर्मधातुसमं जगत् ।
सत्त्वधातुं च देशेति एषा लोकानुवर्तना ॥
त्रीषु अध्वसु सत्त्वानां प्रकृतिं नोपलम्भति ।
20 सत्त्वधातुं च देशेति एषा लोकानुवर्तना ॥ इत्यादि।

तथा–

B 549 फेनपिण्डोपमं रूपं वेदना बुद्बुदोपमा ।
मरीचिसदृशी संज्ञा संस्काराः कदलीनिभाः ।
मायोपमं च विज्ञानमुक्तमादित्यबन्धुना ॥
25 एवं धर्मान् वीक्षमाणो भिक्षुरारब्धवीर्यवान् ।
दिवा वा यदि वा रात्रौ संप्रजानन् प्रतिस्मृतः ।
प्रतिविध्येत्पदं शान्तं संस्कारोपशमं शिवम् ॥ इति।

एताश्च गाथाः सर्वनिकायशास्त्रसूत्रेषु पठ्यन्ते। अतः फेनपिण्डादीनां हेतुप्रत्ययसामग्रीं प्राप्य प्रतीत्य समुत्पन्नानां सारवस्तुविगतानां कुतः क्षणिकाक्षणिकचिन्तेति ? महायानसूत्रेषु च–

30 सुपिनोपमा भवगती सकला
न हि कश्चि जायति न चो म्रियते ।

न च कर्म नश्यति कदाचि कृतं
फलु देति कृष्णशुभ संसरतो ॥
न च शाश्वतं न च उच्छेद पुनो B 550
न च कर्मसंचयु न चापि स्थितिः ।
न च सोऽपि कृत्व पुनरास्पृशती 5
न च अन्यु कृत्व पुन वेदयते ॥
[समाधिराजसूत्र–२९.१३–१६]

यथा कुमारी सुपिनान्तरस्मिं
स्वपुत्र जातं च मृतं च पश्यति ।
जातेऽतितुष्टा मृति दौर्मनस्यिता
तथोपमान् जानथ सर्वधर्मान् ॥ 10
[समाधिराजसूत्र–९.१७]

यथैव ग्रामान्तरि लेखदर्शनात्
क्रियाः प्रवर्तन्ति पृथक् शुभाशुभाः ।
न लेखसंक्रान्ति गिराय विद्यते
तथोपमान् जानथ सर्वधर्मान् ॥
[समाधिराज–९.७]

मुद्रात्प्रतिमुद्र दृश्यते 15
मुद्रसंक्रान्ति न चोपलभ्यते ।
न च तत्र न चैव सान्यतो
एवं संस्कारऽनुच्छेदशाश्वताः ॥
बीजस्य सतो यथाङ्कुरो B 551
न च यो बीजु स चैव अङ्कुरो । 20
न च अन्यु ततो न चैव तत्
एवमनुच्छेद अशाश्वत धर्मता ॥
यथ मुञ्ज प्रतीत्य बल्बजं
रज्जु व्यायामबलेन वर्तिता ।
घटियन्त्र सचक्र वर्तते 25
तेषु एकैकसु नास्ति वर्तना ॥
तथ सर्वभवाङ्गवर्तिनी
अन्यमन्योपचयेन निश्रिता ।
एकैकेषु तेषु वर्तनी
पूर्वमपरान्ततु नोपलभ्यते ॥ 30
[ललितविस्तर–१३.१००–१०३,१०४]

अत एवोक्तमाचार्यनागार्जुनपादैः—

स्वाध्यायदीपमुद्रादर्पणघोषार्ककान्तबीजाम्लैः ।
स्कन्धप्रतिसंधिरसंक्रमश्च विद्वद्भिरुपधार्यौ ॥ इति ।

B 552 शतकशास्त्रे च आर्यदेवपादैर्महाबोधिचर्यास्थिरप्रस्थानस्थितैः—

5 अलातचक्रनिर्माणस्वप्नमायाम्बुचन्द्रकैः ।
धूमिकान्तःप्रतिश्रुत्कामरीच्यभ्रैः समो भवः ॥ इति ॥

[चतुःशतक – १३·२५]

तदेवं बिम्बप्रतिबिम्बादिन्यायेन मातुः कुक्षौ विज्ञाने संमूर्छिते विज्ञानप्रत्ययं नामरूपं निषिच्यते, क्षरति प्रादुर्भवतीत्यर्थः । यदि इह गतौ विज्ञानं न संमूर्छितं स्यात्, तदा नामरूपप्रादुर्भावो न स्यात् ।

10 सचेदानन्द विज्ञानं मातुः कुक्षिं नावक्रामेत, न तत्[1]कललं कललत्वाय संवर्तेत । इति वचनात् ॥ २ ॥

तदेवम् —

**निषिक्ते नामरूपे तु षडायतनसंभवः ।**

B 553 दुःखोत्पत्त्या आयद्वारभावेन दर्शनश्रवणघ्राणरसस्पर्शमनआख्यं षडायतनं नामरूपहेतुकमुप-
15 जायते । स[2] चक्षुषा रूपाणि दृष्ट्वा सौमनस्यस्थानीयान्यभिनिविशते, अभिनिविष्टः सन् रागजं द्वेषजं मोहजं कर्म करोतीत्यादिना दुःखोत्पत्तावायद्वारत्वं षण्णामायतनानाम् । तदेवं संभूते षडायतने उत्तरकालम् —

**षडायतनमागम्य संस्पर्शः संप्रवर्तते ॥३॥**

कः पुनरयं संस्पर्शः, कथं वा संप्रवर्तते इति प्रतिपादयन्नाह —

20 **चक्षुः प्रतीत्य रूपं च समन्वाहारमेव च ।**
**नामरूपं प्रतीत्यैवं विज्ञानं संप्रवर्तते ॥ ४ ॥**
**संनिपातस्त्रयाणां यो रूपविज्ञानचक्षुषाम् ।**
**स्पर्शः सः**

B 554 चक्षुरिन्द्रियं प्रतीत्य रूपाणि च समन्वाहारं च प्रतीत्य मनस्कारं विषयादिविलक्षणं
25 समनन्तरप्रत्ययं विज्ञानबीजभूतं चक्षुर्विज्ञानमुत्पद्यते । तत्र चक्षुश्च रूपायतनं च रूपम् । समन्वाहारश्चतुःस्कन्धलक्षणं नाम । तदेतत्त्रयं प्रतीत्योत्पद्यमानं चक्षुर्विज्ञानं नामरूपं प्रतीत्योत्पद्यते । तदेवमेषामिन्द्रियविषयविज्ञानानां त्रयाणां यः संनिपातः सहोत्पादः अन्योन्योपकारेण तुल्यं या प्रवृत्तिः, स स्पृष्टिलक्षणः स्पर्शः । तत उत्तरकालम् —

**तस्मात्स्पर्शाच्च वेदना संप्रवर्तते ॥ ५ ॥**

30 इष्टानिष्टोभयविपरीतविषयानुभूतिर्विषयानुभवो वेदनं वित्तिर्वेदनेत्युच्यते । दुःखा सुखा अदुःखासुखा च त्रिविधा । यथा चैषां रूपविज्ञानचक्षुषां त्रयाणां संनिपातलक्षणं स्पर्शमागम्य

---

[1] T resumes the translation from here. [2] T om. from स चक्षुषा down to °मायतनानाम्.

वेदना उक्ता, एवं शेषेन्द्रियविषयविज्ञानत्रयसंनिपातलक्षणस्पर्शहेतुका वेदना व्याख्येया ॥ ५ ॥

तत उत्तरकालम्–

**वेदनाप्रत्यया तृष्णा**

संप्रवर्तते इति वर्तते। वेदना प्रत्ययो यस्यास्तृष्णायाः सा वेदनाप्रत्यया। किंविषया पुनः सा तृष्णा? वेदनाविषयैव। किं कारणम्? यस्मादसौ तृष्णालुः B 555 5

**वेदनार्थं हि तृष्यते।**

वेदनानिमित्तमेव अभिलाषं करोतीत्यर्थः। कथं कृत्वा? यदि तावत् सुखा वेदना अस्योपजायते, स तस्याः पुनः पुनः संयोगार्थं परितृष्यते। अथ दुःखा, तदा तस्या विसंयोगार्थं परितृष्यते। अथ अदुःखासुखा, तस्या अपि नित्यमपरिभ्रंशार्थं[1] परितृष्यते। स एवम्–

**तृष्यमाण उपादानमुपादत्ते चतुर्विधम् ॥ ६ ॥** 10

स एवं वेदनास्वभिनिविष्टः सक्तः तृष्णाप्रत्ययं कामदृष्टिशीलव्रतात्मवादोपादानाख्यं चतुर्विधं कर्माक्षेपकारणं परिगृह्णाति। तदेवमस्य तृष्णाप्रत्ययमुपादानं भवति ॥ ६ ॥

तत उत्तरकालम्–

**उपादाने सति भव उपादातुः प्रवर्तते।** B 556
**स्याद्धि यद्यनुपादानो मुच्येत न भवेद्भवः ॥ ७ ॥** 15
**पञ्च स्कन्धाः स च भवः**

चतुर्विधस्य यथोक्तस्य उपादानस्य उपादाता ग्रहीता उत्पादयिता। तस्य उपादातुः उपादानप्रत्ययो भवः उपजायते। किं कारणम्? यस्मात्, यो हि अनुत्पादितवेदनातृष्णः प्रतिसंख्यानबलेन तृष्णामस्वीकुर्वन्, चतुर्विधमुपादानं प्रविहाय उपादाता अमलाद्वयज्ञानसंमुखीभावात् स्याद्धि यद्यनुपादानो मुच्येत सः। तदानीं तस्य न भवेद्भवः ॥ 20

कः पुनरयं भवः? पञ्च स्कन्धाः स च भवः। यः उपादानात् प्रवर्तते, स पञ्चस्कन्धस्वभावो वेदितव्यः। त्रिविधमपि कायिकं वाचिकं मानसिकं च कर्म भवत्यस्मादनागतं स्कन्धपञ्चकं भवः इति व्यपदिश्यते। तत्र कायिकं वाचिकं कर्म रूपस्कन्धस्वभावं कर्मविज्ञप्तित्वात्[2]। B 557 मानसं तु चतुःस्कन्धस्वभावमिति। एवं स भवः पञ्च स्कन्धा इति विज्ञेयम्। तस्मात्–

**भवाज्जातिः प्रवर्तते।** 25

अनागतस्कन्धोत्पादो जातिः। सा च भवात् प्रवर्तते। तत उत्तरकालम्–

**जरामरणदुःखादि शोकाः सपरिदेवनाः ॥ ८ ॥**
**दौर्मनस्यमुपायासा जातेरेतत्प्रवर्तते।**

जातिहेतुका एते जरामरणादयः प्रवर्तन्ते। एषां च यथासूत्रमेव व्याख्यानं वेदितव्यम्। तत्र स्कन्धपरिपाको जरा। जीर्णस्य स्कन्धभेदो मरणम्। म्रियमाणस्य विगच्छतः संमूढस्य 30 साभिषङ्गो हृदयसंतापः शोकः। शोकसमुत्थितो वाक्प्रलापः परिदेवः। पञ्चेन्द्रियासातनिपातो

1 T om. नित्यं. 2 T om. कर्मविज्ञप्तित्वात्.

दुःखम् । मनोनिष्ठनिपातो• दौर्मनस्यम् । दुःखदौर्मनस्यबहुत्वसंभूता उपायासाः इति । तदेवं यथोपवर्णितेन न्यायेन

**केवलस्यैवमेतस्य दुःखस्कन्धस्य संभवः ॥ ९ ॥**

B 558 केवलस्येति आत्मात्मीयस्वभावविगतस्य बालपृथग्जनपरिकल्पितमात्रस्य । दुःखात्मकस्य 5 सुखाव्यामिश्रस्यैवेत्यर्थः । एवमिति हेतुप्रत्ययमात्रबलेनैवेत्यर्थः । दुःखस्कन्धस्येति दुःखसमुदायस्य दुःखसमूहस्य दुःखराशेरित्यर्थः ॥ ९ ॥

यतश्चैवं यथोपवर्णितादविद्यादिकादेव भवाङ्गानां प्रवृत्तिः, अतः—

**संसारमूलान्संस्कारानविद्वान् संस्करोत्यतः ।**
**अविद्वान् कारकस्तस्मान्न विद्वांस्तत्त्वदर्शनात् ॥ १० ॥**

10 तत्र संसारस्य विज्ञानादिप्रवृत्तिलक्षणस्य मूलं प्रधानं कारणं संस्काराः । ततश्च संसारमूलान् संस्कारानविद्वान् संस्करोति ॥

अविद्यानुगतो यः पुद्गलो भिक्षवः पुण्यानपि संस्कारानभिसंस्करोति, अपुण्यानपि संस्कारानभिसंस्करोति, आनेञ्ज्यानपि संस्कारानभिसंस्करोति ॥

इति भगवद्वचनात् । यतश्चैवमविद्वान् कारकः, तस्मादविद्वानेव पुद्गलः कारको भवति संस्काराणाम्, 15 न विद्वांस्तत्त्वदर्शी प्रहीणाविद्यः । किं कारणम् ? तत्त्वदर्शनात् तत्त्वदर्शने हि सर्वपदार्थानामेवानुपलम्भात् नास्ति किंचिद् यदालम्ब्य कर्म कुर्यादिति ॥ १० ॥

यतश्चैवमविद्यायामेव सत्यां संस्काराः प्रवर्तन्ते, असत्यां न प्रवर्तन्ते, अतः—

**अविद्यायां निरुद्धायां संस्काराणामसंभवः ।**

B 559 हेतुवैयर्थ्यात् । तस्याः पुनरविद्यायाः कुतो निरोधः इत्याह—

20 **अविद्याया निरोधस्तु ज्ञानेनास्यैव भावनात् ॥ ११ ॥**

अस्यैव प्रतीत्यसमुत्पादस्य यथावदविपरीतभावनातः अविद्या प्रहीयते । यो हि प्रतीत्यसमुत्पादं सम्यक् पश्यति, स सूक्ष्मस्यापि भावस्य न स्वरूपमुपलभते । प्रतिबिम्बस्वप्नालातचक्रमुद्रादिवत्तु स्वभावशून्यतां सर्वेषां भावानामवतरति । स एव स्वभावशून्यतां सर्वेषां भावानामवतीर्णो न किंचिद्वस्तु उपलभते बाह्यमाध्यात्मिकं वा । सोऽनुपलभमानो न क्वचिद्धर्मे मुह्यति, अमूढश्च 25 कर्म न करोतीति । एवं प्रतीत्यसमुत्पादभावनया तत्त्वमवतरति । तत्त्वदर्शिनो योगिनो नियतमेव अविद्या प्रहीयते । प्रहीणाविद्यस्य संस्कारा निरुध्यन्ते ॥ ११ ॥

यथा चैवमविद्यानिरोधात् संस्कारा निरुध्यन्ते, एवम्—

**तस्य तस्य निरोधेन तत्तन्नाभिप्रवर्तते ।**
**दुःखस्कन्धः केवलोऽयमेवं सम्यङ् निरुध्यते ॥ १२ ॥**

---

१ T om. from एवमिति up to दुःखराशेरित्यर्थः. २ T om. यः ३ T पुरुषपुद्गलः for पुद्गलो. ४ T om. ° स्वप्नालातचक्रमुद्रा.° ५ T om. बाह्यमाध्यात्मिकं वा.

पूर्वस्य पूर्वस्य अङ्गस्य निरोधेन उत्तरस्योत्तरस्य अङ्गस्य निरोधो भवतीति विज्ञेयम्। B 560
अनया चानुपूर्व्या अयं योगी आत्मात्मीयाद्यदर्शनायासनिरस्तः कारकवेदकविरहितं भाव-
स्वभावशून्यं दुःखराशिं पुनरनुत्पत्त्या सम्यङ्निरोधयति। यथोक्तमार्यशालिस्तम्बसूत्रे—

एवमाध्यात्मिकोऽपि प्रतीत्यसमुत्पादो द्वाभ्यामेव कारणाभ्यामुत्पद्यते। कतमाभ्यां द्वाभ्याम्?
हेतूपनिबन्धतः प्रत्ययोपनिबन्धतश्च। तत्राध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः कतमः? 5
यदिदमविद्याप्रत्ययाः संस्काराः, संस्कारप्रत्ययं विज्ञानम्, विज्ञानप्रत्ययं नामरूपम्, नामरूपप्रत्ययं
षडायतनम्, षडायतनप्रत्ययः स्पर्शः, स्पर्शप्रत्यया वेदना, वेदनाप्रत्यया तृष्णा, तृष्णाप्रत्ययमुपादानम्,
उपादानप्रत्ययो भवः, भवप्रत्यया जातिः, जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मनस्यो-
पायासाः संभवन्ति। एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति। अविद्या
चेन्नाभविष्यन्नैव संस्काराः प्रज्ञास्यन्ते। एवं यावज्जातिश्चेन्नाभविष्यज्जरामरणं न प्रज्ञास्यते। अथवा, 10
सत्यामविद्यायां संस्काराणामभिनिर्वृत्तिर्भवति। एवं यावज्जात्यां सत्यां जरामरणस्याभिनिर्वृत्तिर्भवति।
अत्राविद्याया नैवं भवति अहं संस्कारानभिनिर्वर्तयामीति। संस्काराणामपि नैवं भवति
वयमविद्ययाभिनिर्वर्तिता इति। एवं यावज्जातेरपि नैवं भवति अहं जरामरणमभिनिर्वर्तयामीति।
जरामरणस्यापि नैवं भवत्यहं जात्याभिनिर्वर्तितमिति। अथ च सत्यामविद्यायां संस्काराणामभिनिर्वृत्ति- B 561
र्भवति प्रादुर्भावः। एवं यावज्जात्यां सत्यां जरामरणस्याभिनिर्वृत्तिर्भवति प्रादुर्भावः। एवमाध्या- 15
त्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धो द्रष्टव्यः॥

कथमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्य इति? षण्णां धातूनां
समवायात्। कतमेषां षण्णां धातूनां समवायात्? यदिदं पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातूनां सम-
वायादाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः। तत्राध्यात्मिकस्य प्रतीत्यसमुत्पादस्य
पृथिवीधातुः कतमः? यः कायस्य संश्लेषात्कठिनभावमभिनिर्वर्तयति, अयमुच्यते पृथिवीधातुः। यः 20
कायस्यानुपरिग्रहकृत्यं करोति, अयमुच्यतेऽब्धातुः। यः कायस्याशितभक्षितं परिपाचयति, अयमुच्यते
तेजोधातुः। यः कायस्य आश्वासप्रश्वासकृत्यं करोति, अयमुच्यते वायुधातुः। यः कायस्यान्तः
शौषीर्यमभिनिर्वर्तयति, अयमुच्यते आकाशधातुः। यो नामरूपमभिनिर्वर्तयति नडकलापयोगेन
पञ्चविज्ञानकायसंयुक्तं सास्रवं च मनोविज्ञानम्, अयमुच्यते भिक्षवो विज्ञानधातुः। तत्र असतामेषां B 562
प्रत्ययानां कायस्योत्पत्तिर्न भवति। यदा त्वाध्यात्मिकः पृथिवीधातुरविकलो भवति, एवमप्तेजोवाय्वा- 25
काशविज्ञानधातवश्चाविकला भवन्ति, ततः सर्वेषां समवायात्कायस्योत्पत्तिर्भवति। तत्र पृथिवीधातोर्नैवं
भवति—अहं कायस्य कठिनभावमभिनिर्वर्तयामीति। अब्धातोर्नैवं भवति-अहं कायस्यानुपरिग्रहकृत्यं
करोमीति। तेजोधातोर्नैवं भवति-अहं कायस्याशितपीतखादितं परिपाचयामीति। वायुधातोर्नैवं भवति-
अहं कायस्याश्वासप्रश्वासकृत्यं करोमीति। आकाशधातोर्नैवं भवति-अहं कायस्यान्तःशौषीर्यमभि-
निर्वर्तयामीति। विज्ञानधातोर्नैवं भवति—अहं कायस्य नामरूपमभिनिर्वर्तयामीति। कायस्यापि नैवं 30
भवति-अहमेभिः प्रत्ययैर्जनित इति। अथ च पुनः सतामेषां प्रत्ययानां समवायात्कायस्योत्पत्ति-
र्भवति। तत्र पृथिवीधातुर्नात्मा न सत्त्वो न जीवो न जन्तुर्न मनुजो न मानवो न स्त्री न
पुमान् न नपुंसकं न चाहं न मम न चान्यस्य कस्यचित्। एवमब्धातुस्तेजोधातुर्वायुधातु-

राकाशधातुर्विज्ञानधातुर्नाम। न सत्त्वो न जीवो न जन्तुर्न मनुजो न मानवो न स्त्री न पुमान् न नपुंसकं न चाहं न मम न चान्यस्य कस्यचित् ॥

तत्र अविद्या कतमा? या एषामेवं षण्णां धातूनामैक्यसंज्ञा पिण्डसंज्ञा नित्यसंज्ञा B 563 ध्रुवसंज्ञा शाश्वतसंज्ञा सुखसंज्ञा आत्मसंज्ञा सत्त्वसंज्ञा जीवपुद्गलमनुजमानवसंज्ञा अहंकारसंज्ञा 5 ममकारसंज्ञा एवमादि विविधमज्ञानम्। इयमुच्यतेऽविद्येति। एवमविद्यायां सत्यां विषयेषु रागद्वेषमोहाः प्रवर्तन्ते। तत्र ये रागद्वेषमोहा विषयेषु, अमी संस्कारा इत्युच्यन्ते। वस्तुप्रतिविज्ञप्तिर्विज्ञानम्। विज्ञानसहभुवश्चत्वारः स्कन्धा अरूपिणः उपादानाख्याः, तन्नामरूपं चत्वारि महाभूतानि, तानि चोपादाय रूपम्। तच्च नाम तच्च रूपम्। ऐकध्यमभिसंक्षिप्य तन्नामरूपम्। नामरूपसंनिश्रितानीन्द्रियाणि षडायतनम्। त्रयाणां धर्माणां संनिपातः स्पर्शः। स्पर्शानुभवो 10 वेदना। वेदनाध्यवसानं तृष्णा। तृष्णावैपुल्यमुपादानम्। उपादाननिर्जातं पुनर्भवजनकं कर्म भवः। भवहेतुकः स्कन्धप्रादुर्भावो जातिः। जातस्य स्कन्धस्य परिपाको जरा। जीर्णस्य स्कन्धस्य विनाशो मरणम्। म्रियमाणस्य संमूढस्य साभिष्वङ्गस्यान्तर्दाहः शोकः। शोकोत्थमालपनं परिदेवः। पञ्चविज्ञानकायसंयुक्तमसातमनुभवनं दुःखम्। मनसा संयुक्तं मानसं दुःखं दार्मनस्यम्। ये चाप्यन्ये एवमादय उपक्लेशास्ते उपायासा इति ॥

B 564 15 तत्र मोहान्धकारार्थेनाविद्या। अभिसंस्कारार्थेन संस्काराः। विज्ञापनार्थेन विज्ञानम्। अन्योन्योपस्तम्भनार्थेन नामरूपम्। आयद्वारार्थेन षडायतनम्। स्पर्शनार्थेन स्पर्शः। अनुभवनार्थेन वेदना। परितर्षणार्थेन तृष्णा। उपादानार्थेनोपादानम्। पुनर्भवार्थेन भवः। जन्मार्थेन जातिः। परिपाकार्थेन जरा। विनाशार्थेन मरणम्। शोचनार्थेन शोकः। परिदेवनार्थेन परिदेवः। कायपरिपीडनार्थेन दुःखम्। चित्तसंपीडनार्थेन दौर्मनस्यम्। उपक्लेशार्थेनोपायासाः ॥

20 अथवा तत्त्वेऽप्रतिपत्तिर्मिथ्याप्रतिपत्तिरज्ञानमविद्या। एवमविद्यायां सत्यां त्रिविधाः संस्कारा अभिनिर्वर्तन्ते पुण्योपगा अपुण्योपगा आनेञ्ज्योपगाः। तत्र पुण्योपगानां संस्काराणां पुण्योपगमेव विज्ञानं भवति। अपुण्योपगानां संस्काराणामपुण्योपगमेव विज्ञानं भवति। आनेञ्ज्योपगानां संस्काराणामानेञ्ज्योपगमेव विज्ञानं भवति। इदमुच्यते विज्ञानम्। विज्ञानप्रत्ययं नामरूपमिति वेदनादयोऽरूपिणश्चत्वारः स्कन्धास्तत्र तत्र भवे नामयन्तीति नाम। सहरूपस्कन्धेन च नाम रूपं चेति B 565 25 नामरूपमुच्यते। नामरूपविवृद्ध्या षड्भिरायतनद्वारैः कृत्यक्रियाः प्रवर्तन्ते प्रज्ञायन्ते, तन्नामरूपप्रत्ययं षडायतनमित्युच्यते। षड्भ्यश्चायतनेभ्यः षट् स्पर्शकायाः प्रवर्तन्ते, अयं षडायतनप्रत्ययः स्पर्श इत्युच्यते। यज्जातीयः स्पर्शो भवति तज्जातीया वेदना प्रवर्तते। इयमुच्यते भिक्षवः स्पर्शप्रत्यया वेदनेति। यस्तां वेदनां विशेषेणास्वादयति अभिनन्दति अध्यवस्यति अध्यवसाय तिष्ठति, सा वेदनाप्रत्यया तृष्णेत्युच्यते। आस्वादनाभिनन्दनाध्यवसानस्थानादात्मप्रियरूपसातरूपैर्वियोगो मा 30 भून्नित्यमपरित्यागो भवेदिति यैवं प्रार्थना इदमुच्यते भिक्षवस्तृष्णाप्रत्ययमुपादानम्। यत्र वस्तुनि सतृष्णस्तस्य वस्तुनोऽर्जनाय विठपनायोपादानमुपादत्ते, तत्र तत्र प्रार्थयते, एवं प्रार्थयमानः पुनर्भवजनकं कर्म समुत्थापयति कायेन वाचा मनसा च, स उपादानप्रत्ययो भव इत्युच्यते।

तत्कर्मनिर्जातानां स्कन्धानामभिनिर्वृत्तिर्या सा भवप्रत्यया जातिरित्युच्यते । जात्याभिनिर्वृत्तानां स्कन्धानामुपचयनपरिपाकाद्विनाशो भवति । तदिदं जातिप्रत्ययं जरामरणमित्युच्यते ॥ B 569

एवमयं द्वादशाङ्गः प्रतीत्यसमुत्पादोऽन्योन्यहेतुकोऽन्योन्यप्रत्ययो नैवानित्यो नैव नित्यो न संस्कृतो नासंस्कृतो नाहेतुको नाप्रत्ययो न वेदयिता नावेदयिता न प्रतीत्यसमुत्पन्नो नाप्रतीत्यसमुत्पन्नो न क्षयधर्मो नाक्षयधर्मो न विनाशधर्मो नाविनाशधर्मो न निरोधधर्मो नानिरोधधर्मोऽनादिकालप्रवृत्तोऽनुच्छिन्नोऽनुप्रवर्तते नदीस्रोतवत् ॥ 5

यद्यप्ययं द्वादशाङ्गः प्रतीत्यसमुत्पादोऽनुच्छिन्नोऽनुप्रवर्तते नदीस्रोतवत्, अथ चेमान्यस्य द्वादशाङ्गस्य प्रतीत्यसमुत्पादस्य चत्वार्यङ्गानि संघातक्रियायै हेतुत्वेन प्रवर्तन्ते । कतमानि चत्वारि ? यदुत अविद्या तृष्णा कर्म विज्ञानं च । तत्र विज्ञानं बीजस्वभावत्वेन हेतुः । कर्म क्षेत्रस्वभावत्वेन हेतुः । अविद्या तृष्णा च क्लेशस्वभावत्वेन हेतुः । कर्मक्लेशा विज्ञानबीजं जनयन्ति । तत्र कर्म विज्ञानबीजस्य क्षेत्रकार्यं करोति । तृष्णा विज्ञानबीजं स्नेहयति । अविद्या विज्ञानबीजमवकिरति । असतां तेषां प्रत्ययानां विज्ञानबीजस्याभिनिर्वृत्तिर्न भवति । तत्र कर्मणो नैवं भवति—अहं विज्ञानबीजस्य क्षेत्रकार्यं करोमीति । तृष्णाया अपि नैवं भवति—अहं विज्ञानस्य स्नेहकार्यं करोमिति । अविद्याया अपि नैवं भवति—अहं विज्ञानबीजमवकिरामीति । विज्ञानबीजस्यापि नैवं भवति—अहमेभिः प्रत्ययैर्जनितमिति ॥ 10 15

अथ च विज्ञानबीजं कर्मक्षेत्रप्रतिष्ठितं तृष्णास्नेहाभिष्यन्दितमविद्यया स्ववकीर्णं विभज्यमानं विरोहति । तत्रतत्रोपपत्त्यायतनप्रतिसंधौ मातुः कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति । स च नामरूपाङ्कुरो न स्वयंकृतो न परकृतो नोभयकृतो नेश्वरकृतो न कालपरिणामितो न प्रकृतिसंभूतो न चैककारणाधीनो नाप्यहेतुसमुत्पन्नः । अथ च मातापितृसंयोगाद्, ऋतुसमवायाद्, अन्येषां प्रत्ययानां समवायाद् आस्वादानुविद्धं विज्ञानबीजं मातुः कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति अस्वामिकेषु धर्मेष्वपरिग्रहेष्वममेष्वाकाशसमेषु मायालक्षणस्वभावेषु हेतुप्रत्ययानामवैकल्यात् ॥ B 567 20

तद्यथा पञ्चभिः कारणैश्चक्षुर्विज्ञानमुत्पद्यते । कतमैः पञ्चभिः ? यदुत चक्षुः प्रतीत्य रूपं चालोकं चाकाशं च तज्जमनसिकारं च प्रतीत्योत्पद्यते चक्षुर्विज्ञानम् । तत्र चक्षुर्विज्ञानस्य चक्षुराश्रयकृत्यं करोति । रूपमालम्बनकृत्यं करोति । आलोकोऽवभासकृत्यं करोति । आकाशमनावरणकृत्यं करोति । तज्जमनसिकारः समन्वाहरणकृत्यं करोति । असतामेषां प्रत्ययानां चक्षुर्विज्ञानं नोत्पद्यते । यदा तु चक्षुराध्यात्मिकमायतनमविकलं भवति, एवं रूपालोकाकाशतज्जमनसिकाराश्चाविकला भवन्ति, ततः सर्वेषां समवायाच्चक्षुर्विज्ञानमुत्पद्यते । तत्र चक्षुषो नैवं भवति-अहं चक्षुर्विज्ञानस्याश्रयकृत्यं करोमीति । आलोकस्यापि नैवं भवति—अहं चक्षुर्विज्ञानस्यावभासकृत्यं करोमीति । आकाशस्यापि नैवं भवति—अहं चक्षुर्विज्ञानस्यानावरणकृत्यं करोमिति । तज्जमनसिकारस्यापि नैवं भवति—अहं चक्षुर्विज्ञानस्य समन्वाहरणकृत्यं करोमीति । चक्षुर्विज्ञानस्यापि नैवं भवति-अहमेभिः प्रत्ययैर्जनितमिति । अथ च सतामेषां प्रत्ययानां समवायाच्चक्षुर्विज्ञानस्योत्पत्तिर्भवति । एवं शेषाणामिन्द्रियाणां यथायोगं करणीयम् ॥ 25 30 B 568

तत्र न कश्चिद्धर्मोऽस्माल्लोकात्परलोकं संक्रामति । अस्ति च कर्मफलप्रतिविज्ञप्तिर्हेतुप्रत्ययानामवैकल्यात् । तद्यथा भिक्षवः सुपरिशुद्धे आदर्शमण्डले मुखप्रतिबिम्बकं दृश्यते, न च तत्रादर्शमण्डले मुखं संक्रामति, अस्ति च मुखप्रतिबिम्बविज्ञप्तिर्हेतुप्रत्ययानामवैकल्यात्, एवमस्माल्लोकान्न कश्चिच्च्युतो नाप्यन्यत्रोपपन्नः, अस्ति च कर्मफलप्रतिविज्ञप्तिर्हेतुप्रत्ययानामवैकल्यात् । तद्यथा
5 भिक्षवश्चन्द्रमण्डलं चत्वारिंशद्योजनशतमूर्ध्वं व्रजति, अथ च पुनः परीत्तेऽप्युदकभाजने चन्द्रस्य प्रतिबिम्बं दृश्यते, न च तस्मात्स्थानादूर्ध्वं नभसश्च्युतं परीत्ते उदकस्य भाजने संक्रान्तं भवति, अस्ति च चन्द्रमण्डलप्रतिविज्ञप्तिर्हेतुप्रत्ययानामवैकल्यात् । एवमस्माल्लोकान्न कश्चिच्च्युतो नान्यत्रोपपन्नः, अस्ति च कर्मफलप्रतिविज्ञप्तिर्हेतुप्रत्ययानामवैकल्यात् ॥

तद्यथा—अग्निरुपादानप्रत्यये सति ज्वलति, उपादानवैकल्यान्न ज्वलति, एवमेव भिक्षवः कर्म-
10 क्लेशजनितं विज्ञानबीजं तत्रतत्रोपपत्त्यायतनप्रतिसंधौ मातुः कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति, अस्वामिकेषु धर्मेष्वपरिग्रहेषु मायालक्षणस्वभावेषु अममेषु कृत्रिमेषु हेतुप्रत्ययानामवैकल्यात् ॥

B 569 तत्राध्यात्मिकः प्रतीत्यसमुत्पादः पञ्चभिः कारणैर्द्रष्टव्यः । कतमैः पञ्चभिः? न शाश्वततो नोच्छेदतो न संक्रान्तितः परीत्तहेतुविपुलफलाभिनिर्वृत्तितस्तत्सदृशानुप्रबन्धतश्चेति । कथं न शाश्वततः? यस्मादन्ये मारणान्तिकाः स्कन्धाः, अन्ये औपपत्त्यंशिकाः स्कन्धाः । न तु य एव मारणान्तिकाः स्कन्धास्त एवौपपत्त्यंशिकाः । अपि तु मारणान्तिकाः स्कन्धा निरुध्यन्ते, तस्मिन्नेव च समये औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति । अतो न शाश्वततः । कथं नोच्छेदतः? न च
15 पूर्वनिरुद्धेषु मारणान्तिकेषु स्कन्धेषु औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति नाप्यनिरुद्धेषु । अपि तु मारणान्तिकाः स्कन्धा निरुध्यन्ते, तस्मिन्नेव च समये औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति तुलादण्डोन्नामावनामवत् चन्द्रबिम्बप्रतिबिम्बवत् । अतो नोच्छेदतः । कथं न संक्रान्तितः? विसदृशाः सत्त्वनिकायाः सभागायां जात्यां जातिमभिनिर्वर्तयन्ति । अतो न संक्रान्तितः । कथं परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः? परीत्तं कर्म क्रियते, विपुलः फलविपाकोऽनुभूयते । अतः
20 परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः । कथं तत्सदृशानुप्रबन्धतः? यथावेदनीयं कर्म क्रियते,
B 570 तथावेदनीयो विपाकोऽनुभूयते । अतस्तत्सदृशानुप्रबन्धतश्च । इति विस्तरः ॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
द्वादशाङ्गपरीक्षा नाम षड्विंशतितमं प्रकरणम् ॥

## दृष्टिपरीक्षा सप्तविंशतितमं प्रकरणम् ।

यश्चैवं प्रतीत्यसमुत्पादं यथाभूतं सम्यक् पश्यति, स न पूर्वान्तं प्रतिसरति, नापरान्तं प्रतिसरति, —इत्यादि सूत्रे पठ्यते, तत्र कतमः पूर्वान्तः, कतमोऽपरान्तः, कथं न प्रतिसरतीति ? तद्व्युत्पत्त्यर्थमिदमारभ्यते । तत्र वर्तमानमात्मभावमपेक्ष्य अतीता आत्मभावाः पूर्वान्त इत्युच्यते । पूर्वो हि जन्मपरंपरांशः पूर्वान्तः । तं न प्रतिसरति, दृष्टिप्रकारैर्नालम्बते । प्रतीत्यसमुत्पादस्य यथावदवस्थिततत्त्वदर्शनात् नान्यथावस्थितं वस्तु अन्यथा अभिनिविशते । तत्र अष्टौ दृष्टयः पूर्वान्तमालम्ब्य अन्यथा प्रवृत्ताः । तद्यथा— B 571 5

**अभूमतीतमध्वानं नाभूमिति च दृष्टयः ।**
**यास्ताः शाश्वतलोकाद्याः पूर्वान्तं समुपाश्रिताः ॥ १ ॥**

तत्र इतिशब्दः आद्यर्थः । अथवा दृष्टिद्वयोपादानमुपलक्षणार्थम् । चतस्रस्त्वेता दृष्टयः । तद्यथा — किं न्वहमभूवमतीतमध्वानम्, नाभूवमतीतमध्वानम्, अभूवं च नाभूवं च, नैवाभूवं न नाभूवम्, इति । एताश्चतस्रो दृष्टयः पूर्वान्तं समाश्रिताः । अपरा अपि चतस्र इत्याह — B 572 10

यास्ताः शाश्वतलोकाद्याः

पूर्वं प्रसङ्गेन उपवर्णिताः, ता अपि

पूर्वान्तं समुपाश्रिताः ॥

तत्र यद्यपि पूर्वान्ताद् दृष्टिचतुष्टयादुत्तरं दृष्टिचतुष्टयं नातिभिद्यते, तथापि तावन्मात्रविशेषमाश्रित्य पृथगुपादीयते । तच्च उत्तरत्र व्याख्यास्यामः । तत्र शाश्वतो लोकः इत्येतत्, अभूवमतीतमध्वानम्, इत्येतस्मान्नातिभिद्यते । अथवा अयं विशेषः—यच्छाश्वतो लोकः इत्येषा दृष्टिः सामान्येन पूर्वान्तमाश्रिता । अभूवमतीतमध्वानम्, इत्येषा तु आत्मन एव पूर्वान्तपरामर्शेन प्रवृत्ता, न सामान्येनेति । एवमन्यास्वपि दृष्टिषु विशेषो वक्तव्यः । इत्येवं तावत् अष्टावेता दृष्टयः पूर्वान्तं समुपाश्रिताः ॥ १ ॥ 15

उक्तः पूर्वान्तस्तदालम्बिकाभिर्दृष्टिभिः सार्धम् । इदानीमपरान्त उच्यते । तत्र वर्तमानमात्मभावमपेक्ष्य भाविनः आत्मभावाः अपरान्त इत्युच्यते । अपरो हि जन्मपरंपरांशोऽपरान्तः, तं न प्रतिसरति, दृष्टिप्रकारैर्नालम्बते । प्रतीत्यसमुत्पादस्य यथावदवस्थिततत्त्वदर्शनात्, नान्यथावस्थितं वस्तु अन्यथाभिनिविशते । तत्र अष्टौ दृष्टयः अपरान्तमालम्ब्य अन्यथा प्रवृत्ताः । तद्यथा — 25 B 573

**दृष्टयो न भविष्यामि किमन्योऽनागतेऽध्वनि ।**
**भविष्यामीति चान्ताद्या अपरान्तं समाश्रिताः ॥ २ ॥**

इहापि दृष्टिद्वयोपादानमुपलक्षणार्थम् । चतस्रस्त्वेता दृष्टयः । तद्यथा — किं नु भविष्याम्यनागतमध्वानम्, न भविष्यामि, भविष्यामि च न भविष्यामि च, नैव 30

१ The Mss. have a lacuna for this line: It is reconstructed on the strength of T. It is likely that the kārikā may begin whith दृष्टयः in which case we may have दृष्टयोऽभूवं नाभूवं किं न्वतीतेऽध्वनीति च.

भविष्यामि न च न भविष्याम्यनागतमध्वानम्, इत्येताश्चतस्रो दृष्टयः अपरान्तं समाश्रिताः। किमेता एव चतस्रो दृष्टयः अपरान्तं समाश्रिताः? नेत्याह। किं तर्हि अपरा अपि चतस्रो विद्यन्ते अन्ताद्या अपरान्तं समाश्रिताः। तत्र अन्ताद्याश्चतस्रो दृष्टयः सामान्येन अपरान्तमाश्रित्य प्रवृत्ताः, किं तु भविष्याम्यनागतमध्वानमित्येतास्तु आत्मन एवापरान्तमाश्रित्य प्रवृत्ताः, इत्येवं 5 दृष्टिचतुष्टयस्य विशेष इति बोद्धव्यम्॥ २॥

तत्र आद्यस्य तावत् पूर्वान्तालम्बिकस्य दृष्टिचतुष्टयस्य यथा न संभवः, तथा प्रतिपादयन्नाह —

**अभूमतीतमध्वानमित्येतन्नोपपद्यते।**
**यो हि जन्मसु पूर्वेषु स एव न भवत्ययम्॥ ३॥**

B 574 10 तत्र य एव अतीतेषु जन्मसु बभूव, यदि स एवायमधुना स्यात्, तदा युक्तमस्य ग्रहीतुम्—अभूवमहमतीतमध्वानमिति। न चैतदेवं संभवति नित्यत्वप्रसङ्गात्, नित्यस्य च संसरणानुपपत्तेः, एकगतिस्थस्यापि नानागतिसंगृहीतत्वप्रसङ्गात्। इह हि पूर्वं यदि नरकादिगतिको भूत्वा इदानीं कर्मवैचित्र्यात् मनुष्येषु उपपन्नः एवं कल्पयेत्—अहमेवासौ नारक आसम् इति, तदस्य न युक्तम्। कथं हि नाम मनुष्यः सन् नारकादिकः स्यात्?

15 यत्तर्हि इदं पठ्यते सूत्रे—अहमेव स तेन कालेन तेन समयेन मान्धाता नाम राजा चक्रवर्ती अभूवम् इति, तत् कथं वेदितव्यमिति? अन्यत्वप्रतिषेधपरं तद्वचनं नैकत्वप्रतिपादकमिति विज्ञेयम्। अत एव हि नान्यः स तेन कालेन तेन समयेनेति पठ्यते। यदि पुनः स एवायमिति पूर्वकस्य चाधुनातनस्य च एकत्वं स्यात्, को दोषः स्यात्? उक्तस्तावदत्र दोषः—नित्यत्वं स्यादिति॥ ३॥

20 तथापि भूय उच्यते—

**स एवात्मेति तु भवेदुपादानं विशिष्यते।**

यदि स एव पूर्वक आत्मायमिदानीं स्यात्, तदा उपादानस्य पञ्चस्कन्धलक्षणस्य विशेषो न स्यात् उपादातुरविशेषात्पूर्वावस्थायामिव। न चैवमुपादानाविशेषोऽस्यात्मनः, किं तर्हि विशिष्यत एव उपादानमुपादातुः कर्मभेदात् कारकभेदाच्च। ततश्च उपादानविशेषात् स 25 एवायमात्मेति न युज्यते॥

अथ मन्यसे—विशिष्यतामुपादानम्, आत्मा तु एक एवेति। अतः आत्मनोऽविशिष्टत्वादभूमतीतमध्वानमित्येतद् भविष्यत्येव। उच्यते—

B 575 **उपादानविनिर्मुक्त आत्मा ते कतमः पुनः॥ ४॥**

यदि हि अन्यदुपादानम्, अन्यश्चात्मा स्यात्, तदा उपादानविशेषेऽपि आत्मनोऽविशेषात् 30 स्यादेतदेवम्। न चैतद् भेदेन दर्शयितुं शक्यम्—अयमसावात्मा, इदमस्योपादानमिति,

¹ T इदमात्मनः for इदमस्य.

उपादानविशिष्टस्वभावत्वादात्मनोऽहेतुकत्वप्रसङ्गात्, पृथग्ग्रहणप्रसङ्गाच्च । यदा चैवमुपादान-विनिर्मुक्त आत्मा दर्शयितुं न शक्यते, तदा उपादानविशेषेऽपि आत्माविशेष इति न शक्यते कल्पयितुम् ॥ ४ ॥

अथापि कश्चित् परिकल्पयेत्—सत्यम्, उपादानविनिर्मुक्त इति एवं न संभवति, किमुपादानमेव आत्मत्वेन परिकल्प्यते इति ? एतदपि न युक्तमिति प्रतिपादयन्नाह— 5

**उपादानविनिर्मुक्तो नास्त्यात्मेति कृते सति ।**
**स्यादुपादानमेवात्मा नास्ति चात्मेति वः[2] पुनः ॥ ५ ॥**

यथा[3] तावदुपादानमेवात्मा न संभवति तथा प्रतिपादयन्नाह—

**न चोपादानमेवात्मा व्येति तत्समुदेति च ।** B 576
**कथं हि नामोपादानमुपादाता भविष्यति ॥ ६ ॥** 10

तत्र यदेतत् पञ्चोपादानस्कन्धाख्यमुपादानम्, तत् प्रतिक्षणमुत्पद्यते च विनश्यति च । न चैवमात्मा प्रतिक्षणमुत्पद्यते च विनश्यति च । आत्मा स्कन्धेभ्यस्तत्त्वान्यत्वादिना च नित्यानित्यत्वेनाप्यशक्य एव वक्तुम्, अनेकदोषप्रसङ्गात् । नित्यत्वे हि आत्मनः शाश्वतवादः स्यात्, अनित्यत्वे च उच्छेदवादप्रसङ्गः । ततश्च तदुभयं शाश्वतोच्छेदाख्यं महानर्थकरमिति नोपगन्तव्यम् । अतः उपादानमेवात्मेति तावन्न युज्यते ॥ 15

अपि च—

कथं हि नामोपादानमुपादाता भविष्यति ।

इह उपादीयते इत्युपादानं कर्म । तस्य च अवश्यमुपादात्रा उपार्जकेन भवितव्यम् । तस्य चोपादानस्य यदि आत्मत्वमिष्यते, तत्र उपादानमेव उपादाता इत्यपि विद्यते । ततश्च कर्तृकर्मणोरैक्ये सति छेत्तृच्छेत्तव्यघटकुम्भकाराग्नीन्धनादीनामपि ऐक्यं स्यात् । न चैतद् दृष्टं युक्तं वा इति प्रतिपादयन्नाह— 20

कथं हि नामोपादानमुपादाता भविष्यति । इति ।

अपि तु अत्यन्तासंभव एवास्य पक्षस्येत्यभिप्रायः ॥ ६ ॥

अत्राह—सत्यमुपादानमात्रमात्मा न युज्यते, किं तर्हि उपादानव्यतिरिक्त एव आत्मा भविष्यति । एतदपि न युक्तम् । किं कारणम् ? यस्मात्— B 577 25

**अन्यः पुनरुपादानादात्मा नैवोपपद्यते ।**
**गृह्येत ह्यनुपादानो यद्यन्यो न च गृह्यते ॥ ७ ॥**

यदि उपादानादात्मा व्यतिरिक्तः स्यात्, गृह्येत स उपादानव्यतिरिक्तः, घटादिव पटः । न चैवं गृह्यते । तस्मादुपादानव्यतिरिक्तोऽपि नास्ति । अनुपादानः उपादानव्यतिरेकेण अगृह्यमाणत्वात् खपुष्पवत्, इत्यभिप्रायः ॥ ७ ॥ 30

---

[1] The Mss. read this line : उपादानागतिसंगृहीतत्वात् प्रसङ्गात् मृतेन ग्रहणप्रसङ्गात्, उपादानोप्रसङ्गात् मृते ग्रहणप्रसङ्गाच्च which is not quite clear. Our reading is reconstructed from T. [2] Mss. वा for वः. Our reading is based on T. [3] Mss. अथ for यथा which is based on T.

इदानीं यथोपपादितमर्थं निगमयन्नाह—

**एवं नान्य उपादानान्न चोपादानमेव सः ।**
**आत्मा नास्त्यनुपादानः**

अथ स्यात्—यदि आत्मा उपादानस्वरूपो न भवति, उपादानोपादात्रोरेकत्वप्रसङ्गात्, 5 उदयव्ययप्रसङ्गाच्च । स हि अन्योऽपि न भवति उपादानमनपेक्ष्य भेदेन ग्रहणप्रसङ्गात् । न 578 चाप्यनुपादानः, उपादाननिरपेक्षस्य ग्रहणप्रसङ्गात् । एवं तर्हि नास्ति आत्मेत्यस्तु । उच्यते—

**नापि नास्त्येष निश्चयः ॥ ८ ॥**

यो हि नाम स्कन्धानुपादाय प्रज्ञप्यते, स कथं नास्तीति स्यात्? न हि अविद्यमानो वन्ध्यातनयः स्कन्धानुपादाय प्रज्ञप्यते । कथं सति उपादाने उपादाता नास्तीति युज्यते? 10 तस्मान्नास्तित्वमप्यस्य न युज्यते । तस्मान्नास्ति आत्मेति निश्चयोऽप्येष नोपपद्यते । अस्य त्वात्मनो व्यवस्थानं विस्तरेण मध्यमकावतारादवसेयम् । इहापि च पूर्वमेव स्थानस्थानेषु कृता व्यवस्थेति न पुनरिह तद्व्यवस्थाने यत्न आस्थीयते ॥ ८ ॥

एवं तावदभूवमतीतमध्वानमित्येषा कल्पना नोपपद्यते । इदानीं नाभूवमतीतमध्वानमित्येदपि यथा नोपपद्यते तथा प्रतिपादयन्नाह—

15 **नाभूमतीतमध्वानमित्येतन्नोपपद्यते ।**
**यो हि जन्मसु पूर्वेषु ततोऽन्यो न भवत्ययम् ॥ ९ ॥**

यदि पूर्वकादात्मनः अस्य अधुनातनस्य आत्मनोऽन्यत्वं स्यात्, तदानीं नाभूमतीतमध्वानमिति स्यात् । न चैतदेवं संभवति । तस्मान्नाभूवमतीतमध्वानमित्येतन्नोपपद्यते ॥ ९ ॥

B 579 20 यदि पुनः पूर्वकादात्मनः अस्य अन्यत्वं स्यात्, को दोष इति? उच्यते—

**यदि ह्ययं भवेदन्यः प्रत्याख्यायापि तं भवेत् ।**
**तथैव च स संतिष्ठेत्तत्र जायेत वामृतः ॥ १० ॥**

यदि हि अयमधुनातन आत्मा पूर्वकादात्मनः अन्यः स्यात्, तदा तं पूर्वकमात्मानं प्रत्याख्याय परित्यज्य तन्निरपेक्षः अतद्धेतुक एव स्यात् । किं चान्यत् । तथैव च स संतिष्ठेत्तत्र । 25 यदि पूर्वकादात्मनः अस्य अन्यत्वं स्यात्, तदा अन्यत्वाद् घटोत्पादे पटाविनाशवत् पूर्वस्यात्मनः उत्तरस्मिन्नपि आत्मनि समुत्पद्यमानेऽपि अनिरोधः स्यात् । अनिरुद्धत्वाच्च यत्र पूर्वं देवमनुष्यादिजन्मसु उपपन्नः, येन वर्णसंस्थानादिना पूर्वमुपलभ्यमानः, तेनैव प्रकारेण तथैव स तत्रावतिष्ठेत । पूर्वत्र वा अमृत एव इहोत्पद्येत । न चैष संभवोऽस्ति यदस्य मनुष्यभूतस्य पूर्वको देवाद्यात्मा तथैवावतिष्ठेतेति । तस्मान्नाभूवमतीतमध्वानमित्येतन्नोपपद्यते ॥

30 अत्राह—तत्र यदुक्तम्—

यदि ह्ययं भवेदन्यः प्रत्याख्यायापि तं भवेत् । इति,

यदि पुनः पूर्वकमात्मानं प्रत्याख्याय [1] [अयमिह भवेत्, को दोषः स्यात्? तत्र दोषा बहवः स्युः । कथमिति चेत्, यस्मादेवं सति—

**उच्छेदः कर्मणां नाशस्तथान्यकृतकर्मणाम् ।**
**अन्येन परिभोगः स्यादेवमादि प्रसज्यते ।। ११ ।।**

यदि पूर्वकमात्मानं प्रत्याख्याय अयमात्मा भवेत्, तदा] पूर्वकस्य आत्मनः तत्र 5　B 580
नष्टत्वाद्, इह च अन्यस्यैव चोत्पादनात्पूर्वकस्यात्मन उच्छेदः स्यात् । तस्मिंश्च आत्मनि उच्छिन्ने कर्मणामदत्तफलानामेवाश्रयविच्छेदेन विच्छेदात्, भोक्तुश्चाभावान्नाश एव स्यात् । अथ पूर्वकेनात्मना कृतस्य कर्मणः उत्तरेणात्मना फलपरिभोगः परिकल्प्यते, तथापि अन्येन कृतस्य कर्मणः फलस्य अन्येनोपभोगः स्यात् । ततश्च—

अकृताभ्यागमभयं स्यात्कर्माकृतकं यदि । 10

[म० शा०-१७.२३]

इत्येवमादि अनिष्टमापद्यते ।। ११ ।।

अपि च । यदि अयमात्मा पूर्वकादात्मनः अन्य एव अत्रोपपन्नः स्यात्, तदा पूर्वमभूत्वा पश्चादुत्पन्न इति स्यात् । न चैतद्युक्तमिति प्रतिपादयन्नाह—

**नाप्यभूत्वा समुद्भूतो दोषो ह्यत्र प्रसज्यते ।**
**कृतको वा भवेदात्मा संभूतो वाप्यहेतुकः ।। १२ ।।** 15

इति । यदि हि आत्मा पूर्वमभूत्वा पश्चादुत्पन्नः स्यात्, तदा कृतक एव आत्मा स्यात् । न च　B 581
कृतक आत्मेष्यते, अनित्यत्वप्रसङ्गात् । व्यतिरिक्तस्य च तन्निष्पादकस्य कर्तुरभावात् कुतः कृतकत्वमात्मनो योज्येत? कृतके चात्मनि परिकल्प्यमाने आदिमान् संसारः स्यादेव, अपूर्वसत्त्वस्य प्रादुर्भावश्च । न चैतदेवम् । तस्मान्न कृतक आत्मा । अपि च । संभूतो वाप्यहेतुकः । अभूत्वा प्रागात्मा समुत्पद्यमानो निर्हेतुक एवोपपद्यते । पूर्वं हि आत्मा नास्तीति 20
अकृतको निर्हेतुकः स्यात् । वाशब्दो विकल्पे । कृतको वा भवेदात्मा यदि वा नाभूवमतीतमध्वानमित्येतन्नाभ्युपेयम् । संभूतो वाप्यहेतुकः, यदि वा—

नाभूमतीतमध्वानमित्येतन्नोपपद्यते ।

इत्यभ्युपगम्यताम् ।। १२ ।।

इदानीं यथोपवर्णितमेवार्थं निगमयन्नाह— 25

**एवं दृष्टिरतीते या नाभूमहमभूमहम् ।**
**उभयं नोभयं चेति नैषा समुपपद्यते ।। १३ ।।**

एवं यथोपवर्णितेन न्यायेन अभूमतीतमध्वानमिति या दृष्टिः, एषापि नैवोपपद्यते । एतद्द्वयस्याभावाच्च उभयमपि नोपपद्यते । किं कारणम्? यस्माद् द्वयं ह्येतत्समाहतमुभयमिति कल्प्यते । एकैकस्य च पृथक्पृथगभावात् कुतस्तत्समाहार इति उभयमपि न संभवति । 30

[1] The portion in brackets is missing in Mss. It is reconstituted from T.

उभयस्याभावात् कुतस्तत्प्रतिषेधेन नोभयं भविष्यतीति ? तस्मान्नैवाभूवं न नाभूवमित्येतदपि नोपपद्यते ॥ १३ ॥

B 582 तदेवं पूर्वान्तं समाश्रितस्य दृष्टिचतुष्टयस्य असंभवमुद्भाव्य इदानीमपरान्तसमाश्रितस्य प्रतिषेधमाह –

5 **अध्वन्यनागते किं नु भविष्यामीति दर्शनम् ।**
**न भविष्यामि चेत्येतदतीतेनाध्वना समम् ॥ १४ ॥**

यथैव हि अतीतेऽध्वनि दृष्टिचतुष्टयं निषिद्धम्, एवमनागतेऽप्यध्वनि दृष्टिचतुष्टयं निषेधनीयमुक्तपाठपरिवर्तनेन । तद्यथा –

अध्वन्यनागते किं नु भविष्यामीत्यसंगतम् ।
10 ऐष्यजन्मनि यो भावो स एव न भवत्ययम् ॥

इत्येवमादिना सर्वं समं योज्यमेकत्वप्रतिषेधे । एवमन्यत्वप्रतिषेधेऽपि समं योज्यम् –

न स्यामनागते काले इत्येतन्नोपपद्यते ।
ऐष्यजन्मनि यो भावो ततोऽन्यो न भवत्ययम् ॥

इत्येवमादिना पूर्वश्लोकपाठपरिवर्तनेन ॥ १४ ॥

15 इदानीं पूर्वान्तं समाश्रितस्य शाश्वतादिदृष्टिचतुष्टयस्य प्रतिषेधार्थमाह –

B 583 **स देवः स मनुष्यश्चेदेवं भवति शाश्वतम् ।**
**अनुत्पन्नश्च देवः स्याज्जायते न हि शाश्वतम् ॥ १५ ॥**

इह हि कश्चिन्मनुष्यगतिस्थः कुशलं कर्म कृत्वा देवगतिं गच्छति । तत्र यदि स एव देवः स एव मनुष्य इति एवमुभयोरैक्यं स्यात्, तदा शाश्वतं स्यात् । न चैतदेवं यद्देव एव 20 मनुष्यो भवेदिति । अतो नास्ति किंचिच्छाश्वतम् । अपि च । शाश्वतवादे सति असमुत्पन्नश्च देवः स्यात् । किं कारणम् ? यस्माज्जायते न हि शाश्वतम् । यद्धि वस्तु शाश्वतम्, तद्विद्यमानत्वान्नैव जायते । ततश्च अनुत्पन्नो देवः स्यात्, अनुत्पन्नो देवो न युज्यते इति । एवं तावच्छाश्वतं न युज्यते ॥ १५ ॥

इदानीमशाश्वतमपि यथा न संभवति तथा प्रतिपादयन्नाह –

25 **देवादन्यो मनुष्यश्चेदशाश्वतमतो भवेत् ।**
**देवादन्यो मनुष्यश्चेत्संततिर्नोपपद्यते ॥ १६ ॥**

B 584 यदि हि अन्यो देवोऽन्यश्च मनुष्यः स्यात्, तदा पूर्वकस्य मनुष्यात्मनस्तत्र नष्टत्वादिह च अन्यस्यैवोत्पादात् स पूर्वको मनुष्यात्मा तत्र विनष्ट इत्यशाश्वतं स्यात् । तत्संतानानुवृत्त्या नाशाश्वतमिति चेत्, उच्यते–

[1]देवादन्यो मनुष्यश्चेत्संततिर्नोपपद्यते ।

यदि देवादन्यो मनुष्यो भवेत्, तदा यथा निम्बस्य न आम्रतरुसंतानो भवति, एवं 30 मनुष्यस्य देवः एकसंतानपतितो न स्यात् । ततश्च पूर्वकस्य विनाशादशाश्वतमेव भवेत् । अथवा ।

[1] T om. from यदि up to संततिर्नोपपद्यते.

यदि देवादन्यो मनुष्यो भवेत्, तदा संतानानुवृत्तिर्न स्यात्। अस्ति चेयं संतानानुवृत्तिः देवस्य मनुष्यः एकसंतानपतित इति । तस्मात् संतानाभावप्रसङ्गात् देवादन्यो मनुष्यो न भवति। यतश्चैवम्, अतोऽशाश्वतमपि नास्ति ॥ १६ ॥

इदानीं शाश्वताशाश्वतप्रतिषेधार्थमाह –

**दिव्यो यद्येकदेशः स्यादेकदेशश्च मानुषः ।** 5
**अशाश्वतं शाश्वतं च भवेत्तच्च न युज्यते ॥ १७ ॥**

यदि अयं मनुष्यः अंशेन मनुष्यतां विजह्यात्, अंशेन विहाय मनुष्यतां देवात्मभावमुपादद्यात्, तदा एकदेशस्य नाशादशाश्वतं स्यात्, एकदेशस्य च अवस्थानाच्छाश्वतं स्यात्। एतच्च अयुक्तं यदेकस्य दिव्यगतिसंगृहीतः एकदेशः स्यात्, एकदेशश्च मनुष्यः स्यात्। तस्माच्छाश्वतं च अशाश्वतं च एतदुभयं नोपपद्यते ॥ १७ ॥ 10

इदानीं नशाश्वतनैवाशाश्वतदृष्टिप्रतिषेधार्थमाह–

**अशाश्वतं शाश्वतं च प्रसिद्धमुभयं यदि ।** B 585
**सिद्धे न शाश्वतं कामं नैवाशाश्वतमित्यपि ॥ १८ ॥**

यदि शाश्वतं किंचिद्वस्तु स्यात्, तदा पश्चादशाश्वतदर्शनान्नैव शाश्वतमिति स्यात्। एवं यदि किंचिदशाश्वतं स्यात्, तदा तस्य पश्चाच्छाश्वतोपपत्तितो नाशाश्वतमिति स्यात्। यदा तु 15 शाश्वताशाश्वतमेवाप्रसिद्धम्, तदा कुतस्तत्प्रतिषेधेन नैवशाश्वतं नाशाश्वतं स्यादिति ? तस्मादेतदप्ययुक्तम् ॥ १८ ॥

अथ स्यात् – अनादिजन्ममरणपरंपराप्रवृत्तमविच्छिन्नक्रमं संसारप्रबन्धमुपलभ्य शाश्वतमात्मानं परिकल्पयामः । अस्त्यसौ शाश्वतः कश्चित् पदार्थः, यो हि नाम एवमनादिमति संसारे परिभ्रमन्नद्याप्युपलभ्यते इति । उच्यते । एतदपि नोपपद्यते । किं कारणम् ? यो[1] हि नाम – 20

**कुतश्चिदागतः कश्चित्किंचिद्गच्छेत्पुनः क्वचित् ।**
**यदि तस्मादनादिस्तु संसारः स्यान्न चास्ति सः ॥ १९ ॥**

यदि हि संस्काराणामात्मनो वा कुतश्चिद्गत्यन्तराद् गमनं गत्यन्तरमागमनं स्यात्, ततश्च गत्यन्तरात् पुनः क्वचिद् गमनं स्यात्, तदानीमनादिः संसारः स्यात्। न च कुतश्चित् कस्यचिदागमनं संभवति, नित्यस्य वा अनित्यस्य वा आगमनानुपपत्तेः । न चापि इतः पुनः 25 कस्यचित् क्वचिद् गमनं संभवति, नित्यस्य वा अनित्यस्य गमनानुपपत्तेः। यदा चैवं न संभवति, तदा कुतो जन्ममरणपरंपराया अतिदीर्घत्वेन आद्यनुपलम्भादनादिमान् संसारः स्यात्? संसर्तुरभावात् कुतः अनादिमत्त्वमादिमत्वं वा संसारस्य संभवेत् ? यदा च न संभवति, तदा यदुक्तम्–अस्त्यसौ शाश्वतः कश्चित्पदार्थः, यो हि नाम एवमनादिमति संसारे परिभ्रमन्नद्याप्युपलभ्यते इति, तन्न युक्तम् ॥ 30

B 586

[1] T एवं for यो हि नाम.

अतश्च, एवं यथोदितन्यायेन –

**नास्ति चेच्छाश्वतः कश्चित् को भविष्यत्यशाश्वतः ।**
**शाश्वतोऽशाश्वतश्चापि द्वाभ्यामाभ्यां तिरस्कृतः ॥ २० ॥**

B 587 यदा चैवं शाश्वत एव पदार्थो न संभवति, तदा कस्य विगमनादशाश्वतः स्यात् ? 5 शाश्वताशाश्वतानुपलम्भाच्च कुतः उभयं कुतो नोभयमिति ? तस्मादेवं शाश्वतादिदृष्टिचतुष्टयं पूर्वान्ते संसारस्य न संभवति ॥ २० ॥

इदानीमन्तानन्तादिचतुष्टयमपरान्ते यथा न संभवति, तथा प्रतिपादयन्नाह –

**अन्तवान् यदि लोकः स्यात्परलोकः कथं भवेत् ।**
**अथाप्यनन्तवांल्लोकः परलोकः कथं भवेत् ॥ २१ ॥**

10 यदि हिं अन्तवान्, विनाशादूर्ध्वं पूर्वलोको न स्यात्, तदा परलोको न स्यात् । अस्ति च परलोक इति अन्तवांल्लोक इति नोपपद्यते । अथापि अनन्तवांल्लोकः स्यात्, तदानीमपि परलोकः कथं भवेत् ? नैव परलोकः स्यादित्यभिप्रायः । न च परलोको नास्ति । अतः परलोकसद्भावादन्तवानपि लोको न भवति ॥ २१ ॥

इदानीमन्तवत्त्वमनन्तवत्त्वं च उभयमेतल्लोकस्य यथा न संभवति, तथा प्रतिपादयन्नाह –

15 **स्कन्धानामेष संतानो यस्माद्दीपार्चिषामिव ।**
**प्रवर्तते तस्मान्नान्तानन्तवत्त्वं च युज्यते ॥ २२ ॥**

B 588 पूर्वोत्तरहेतुफलभावसंबन्धनैरन्तर्याविच्छिन्नक्रमवर्ती यस्मादयं प्रदीपवत् प्रतिक्षणविनाशी स्कन्धसंतानः प्रवर्तते, तस्माद्धेतुफलप्रवृत्तिदर्शनान्नान्तवत्त्वं नानन्तवत्त्वं च युज्यते ॥ २२ ॥

कथं कृत्वा ?[1]

20 **पूर्वे यदि च भज्येरन्नुत्पद्येरन्न चाप्यमी ।**
**स्कन्धाः स्कन्धान् प्रतीत्येमानथ लोकोऽन्तवान् भवेत् ॥ २३ ॥**

यदि पूर्वे मनुष्यस्कन्धा नश्येयुः, तांश्च प्रतीत्य उत्तरे देवगत्युपपत्तिसंगृहीता नोपपद्येरन्, तदा अन्तवान् लोको भवेत् तैलवर्तिक्षयनिरुद्धप्रदीपवत् । उत्तरात्मभावोत्पादान्नास्ति अन्तवत्त्वम् ॥ २३ ॥

25 **पूर्वे यदि न भज्येरन्नुत्पद्येरन्न चाप्यमी ।**
**स्कन्धाः स्कन्धान् प्रतीत्येमांल्लोकोऽनन्तो भवेदथ ॥ २४ ॥**

अथ यदि पूर्वकाः स्कन्धा न नश्येयुः, तान् प्रतीत्य उत्तरे फलभूताः स्कन्धा नोत्पद्येरन्, तदा अनन्तोऽविनाशी लोकः स्यात् स्वरूपादप्रच्युतत्वात् । यदा तु पूर्वकाः स्कन्धा निरुध्यन्ते, तद्धेतुकाश्चापरे स्कन्धा उत्तरकालं जायन्ते, तदा पूर्वकानामनवस्थानात् कुतोऽनन्तवत्त्वं संसारस्य 30 स्यात् ? ॥ २४ ॥

इदानीं तृतीयमुभयपक्षमभावं प्रतिपादयन्नाह –

**अन्तवानेकदेशश्चेदेकदेशस्त्वनन्तवान् ।**
B 589 **स्यादन्तवाननन्तश्च लोकस्तच्च न युज्यते ॥ २५ ॥**

---

[1] T om. पूर्वे०.

यदि हि कस्यचिदेकदेशस्य विनाशः स्यात्, एकदेशस्य च गत्यन्तरगमनं स्यात्, स्यात्तदानीमन्तवांश्च लोकोऽनन्तवांश्च। न चैतदेवं संभवति यदेकदेशो नश्यति, एकदेशो न नश्यतीति। अतः अन्तवांश्च अनन्तवांश्च लोक इति न युज्यते ॥ २५॥

कस्मात् पुनरेकदेशस्य विनाशः एकदेशस्य चावस्थानं न युज्यते इति प्रतिपादयन्नाह—

**कथं तावदुपादातुरेकदेशो विनङ्क्ष्यते।** 5
**न नङ्क्ष्यते चैकदेश एवं चैतन्न युज्यते ॥ २६॥**

इह एकदेशस्य विनाशे एकदेशस्य चावस्थाने परिकल्प्यमाने यदि वा उपादातुरेकदेशस्य विनाशः अवस्थानं वा परिकल्प्येत, यदि वा उपादानस्य? तत्र यदि तावदुपादातुरेकदेशस्य विनाशः एकदेशस्य चावस्थानं परिकल्प्यते, तन्न युज्यते। किं कारणम्? यस्मात्—

कथं तावदुपादातुरेकदेशो विनङ्क्ष्यते। 10

न नङ्क्ष्यते चैकदेशः

नैव हि अत्र काचिदुपपत्तिरस्ति यया एकदेशस्य विनाशमेकदेशस्य चाविनाशं परिकल्पयिष्यामः। अत एव उपपत्तिमपश्यन्नाचार्य आह—

एवं चैतन्न युज्यते ॥ इति।

अथवा। उपादाता हि नाम आत्मा। स च स्कन्धेषु पञ्चधा मृग्यमाणो न संभवति। 15 B 590
यश्च न संभवति, तस्य कथमेकदेशो विनङ्क्ष्यते, एकदेशश्च न नङ्क्ष्यते? अत एवाह—एवं चैतन्न युज्यते इति। अथवा। यदि उपादातुरेकदेशो नश्येदेकदेशश्च न नश्येत्, तदा एकस्यैव उपादातुर्देवत्वमंशेनान्येन मनुष्यत्वं स्यात्। न चैतदिष्यते इत्याह—एवं चैतन्न युज्यते इति। एवं तावदुपादातुरन्तवत्त्वमनन्तवत्त्वं च न युक्तमिति ॥ २६॥

इदानीमुपादानस्यापि यथा न संभवति तथा प्रतिपादयन्नाह— 20

**उपादानैकदेशश्च कथं नाम विनङ्क्ष्यते।**
**न नङ्क्ष्यते चैकदेशो नैतदप्युपपद्यते ॥ २७॥**

उपादातृवदेतदपि व्याख्येयम् ॥ २७॥

तदेवमुभयदर्शनासंभवं प्रतिपाद्य इदानीं यथा नोभयमपि न संभवति तथा प्रतिपादयन्नाह—

**अन्तवच्चाप्यनन्तं च प्रसिद्धमुभयं यदि।** 25
**सिद्धे नैवान्तवत्कामं नैवानन्तवदित्यपि ॥ २८॥**

प्रतिषेध्यस्य वस्तुनोऽसंभवात् प्रतिषेधस्याप्यसंभव इति। अतः अन्तवत्त्वे च अनन्तवत्त्वे च उभयस्मिन्नप्रतीते कस्य प्रतिषेधेन नैवान्तवान् नानन्तवान् लोकः इति दृष्टिसंभवः स्यादिति ॥ २८॥

एवं तावत् सांवृतं प्रतिबिम्बाकारमुपादातारमुपादानं चाभ्युपेत्यापि शाश्वतादिदृष्ट्यसंभवं 30 B 591
प्रतिपाद्य इदानीं सर्वथा भावस्वभावानुपलम्भेन वन्ध्यापुत्रश्यामगौरतादिवत् शाश्वतादिदृष्टीनामसंभवं प्रतिपिपादयिषुराह—

**अथवा सर्वभावानां शून्यत्वाच्छाश्वतादयः ।**
**क्व कस्य कतमाः कस्मात्संभविष्यन्ति दृष्टयः ॥ २९ ॥**

इह सर्वभावानां प्रतीत्यसमुत्पन्नत्वात् शून्यत्वं सकलेन शास्त्रेण प्रतिपादितम् । ततश्च सर्वभावानां शून्यत्वात् कतमास्ताः सर्वभावबाह्याः शाश्वताद्या दृष्टयो भविष्यन्ति, याः कश्चिद् 5 ग्रहीष्यति यतस्तन्निराकरणमारप्स्यामहे ? तथा किं वा आलम्बनं यत् सर्वभावानन्तर्गतं यत्रैता दृष्टय उत्पत्स्यन्ते यत्रैता दृष्टीर्निवारयिष्यामः ? कतमश्चासौ भावः पुद्गलो वा सर्वभावबाह्यः यस्यैता दृष्टयः उत्पत्स्यन्ते यं दृष्टिभ्यो निवारयिष्यामः ? किं वा दृष्टीनामुत्पत्तिकारणमालम्बन-निमित्तं सर्वभावबाह्यं यस्मान्निमित्तादुत्पद्यमानाः शाश्वतादिकाः दृष्टीः वारयिष्यामः ? सर्वेषामेव हि पदार्थानां सर्वभावान्तर्गतत्वात् शून्यत्वम्, शून्यत्वाच्च सर्वे एव हि ते पदार्था नोपलभ्यन्त इति,

10 क्व कस्य कतमाः कस्मात्संभविष्यन्ति दृष्टयः ।

नैव काश्चित्, नैव क्वचित्, नैव कस्यचित्, नापि केनचिदाकारेण संभविष्यन्तीत्यभिप्रायः । असंभवे च सति आसां परिकल्पनैव नोत्पद्यते इत्ययुक्ता एवैता दृष्टयः ॥ २९ ॥

B 592 तदेवम्—

**सर्वदृष्टिप्रहाणाय यः सद्धर्ममदेशयत् ।**
15 **अनुकम्पामुपादाय तं नमस्यामि गौतमम् ॥ ३० ॥**

तत्र संसारनिर्वाणप्रहाणाधिगमोपलम्भप्रपातपतनसंधारणात् धर्मः। सतामार्याणां कृतकार्याणां धर्मः सद्धर्मः । यदि वा शोभनो धर्मः सद्धर्मः, सकलसंसारदुःखक्षयकरत्वेन प्रशंसनीयत्वात् । यः सद्धर्मम्—

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम् ।
20 अनेकार्थमनानार्थमनागममनिर्गमम् ॥

[ म० शा० – १.१ ]

प्रपञ्चोपशमं शिवं प्रतीत्यसमुत्पादसंज्ञया हि देशितवान् सर्वदृष्टिप्रहाणार्थं जगतामनुकम्पामुपादाय B 593 महाकरुणामेवाश्रित्य प्रियैकपुत्राधिकतरप्रेमपात्रसकलत्रिभुवनजनः[1] न लाभसत्कारप्रत्युपकारादि-लिप्सया, तं नमस्यामि निरुत्तरमद्वितीयं शास्तारम् । किंनामधेयम् ? गौतमम् । परमर्षि-[2]गोत्रसंभूतमित्यर्थः ॥

25 यथोक्तमार्यशालिस्तम्बसूत्रे[3] आर्यमैत्रेयेण महाबोधिसत्त्वेन—

य इमं प्रतीत्यसमुत्पादमेवं यथाभूतं सम्यक्प्रज्ञया सततसमितमजीवं निर्जीवं यथावद-विपरीतमजातमभूतमकृतमसंस्कृतमप्रतिघमनावरणं शिवमभयमनाहार्यमव्ययमव्युपशमस्वभावं पश्यति असतस्तुच्छतःरिक्ततोऽसारतो रोगतो गण्डतः शल्यतोऽघतोऽनित्यतो दुःखतः शून्यतोऽनात्मतः, न स पूर्वान्तं प्रतिसरति । किं न्वहमभूवमतीतेऽध्वनि, आहोस्विन्नाभूवमतीतेऽध्वनि, को न्वहमभूवमतीतेऽ-30 ध्वनि, कथं न्वहमभूवमतीतेऽध्वनि । अपरान्तं वा पुनर्न प्रतिसरति किं न्वहं भविष्याम्यनागतेऽध्वनि,

---

१ T om. प्रियैक...जनः. २ T गौतमर्षि° for परमर्षि°. ३ T यथोक्तं सूत्रे for यथोक्त...सत्त्वेन.

आहोस्विन्न भविष्याम्यनागतेऽध्वनि, को नु भविष्याम्यनागतेऽध्वनि, कथं नु भविष्याम्यनागतेऽध्वनि। प्रत्युत्पन्नं वा पुनर्न प्रतिसरति किं न्विदं कथं न्विदं के सन्तः के भविष्यामः अयं सत्त्वः कुत आगतः, स इतश्च्युतः कुत्र गमिष्यतीति यान्येकेषां श्रमणब्राह्मणानां पृथग्लोके दृष्टिगतानि भविष्यन्ति B 594 तद्यथा—आत्मवादप्रतिसंयुक्तानि जीववादप्रतिसंयुक्तानि कौतुकमङ्गलप्रतिसंयुक्तानि, तान्यस्य तस्मिन् समये प्रहीणानि भवन्ति परिज्ञातानि समुच्छिन्नमूलानि तालमस्तकवदनाभासगतानि 5 आयत्यामनुत्पादानिरोधधर्माणि ॥

अथ खल्वायुष्मान् शारिपुत्रो मैत्रेयस्य बोधिसत्त्वस्य महासत्त्वस्य भाषितमभिनन्द्य अनुप्रमोद्य उत्थायासनात् प्रक्रान्तः, प्रक्रान्तास्ते च भिक्षव इति ॥

इत्याचार्यचन्द्रकीर्तिपादोपरचितायां प्रसन्नपदायां मध्यमकवृत्तौ
दृष्टिपरीक्षा नाम सप्तविंशतितमं प्रकरणं समाप्तम् ॥ 10

॥ समाप्तं चेदं मध्यमकशास्त्रं सकललौकिकलोकोत्तरप्रवचननीतनेयार्थव्याख्याननैपुण्य-विशारदं श्रावकप्रत्येकबुद्धानुत्तरसम्यक्संबुद्धबोधिमण्डासनदायकमिति ॥

# प्रथमं परिशिष्टम् ।

## कारिकासूची ।

# द्वितीयं परिशिष्टम्।

## टीकाकृतोद्धृतानां पद्यांशानां सूची।

[ अङ्कः पत्राङ्कं बोधयति ]

# तृतीयं परिशिष्टम् ।

## टीकाकारोद्धृतानामागमस्थगद्यांशानां सूची ।

[ अङ्कः पत्राङ्कं बोधयति ]

## चतुर्थं परिशिष्टम् ।

### ग्रन्थ-ग्रन्थकृन्नामसूची ।

[ अङ्कः पत्राङ्कं बोधयति ]

## पञ्चमं परिशिष्टम् ।

आर्य-नागार्जुनविरचिता

# विग्रह-व्यावर्तनी

## स्वोपज्ञवृत्तिसमेता ।

[This Appendix contains the text of Nāgārjuna's *Vigraha-vyāvartanī* with his own commentary. The text was first published in the *Journal of the Bihar and Orissa Research Society* (Vol. xiii. iii. Appendix) and was edited by the late Dr. K. P. Jayaswal and Rāhula Sāṁkṛtyāyana from a single Ms. procured from Tibet by the latter. It was also translated from Tibetan by Dr. G. Tucci in GOS.

I have included this text here with slight but obvious improvements for the simple reason that it is a *manual* of the methods of reasoning of the Mādhya mika School of Buddhists, written by Nāgārjuna, the founder and chief master of the system. Candrakīrti refers not only to this text, but also to its commentary by Nāgārjuna (vide pp. 6, 8, 9). Thus the work being a genuine work of the author of *Madhyamaka Śāstra*, and manual of Mādhyamika methodology, I thought that it should be in the hands, of the reader of *Madhyamaka Śāstra*. It should be noted further that, under Stanza 28 of this work, Nāgārjuna quotes his own Kārikā from MŚ., viz., MŚ. 14.10 with words यथोक्तम्, indicating thereby that at least the commentary of *Vigraha Vyāvartanī* was composed by him *after* MŚ., introducing the stanza by the phrase : न हि व्यवहारसत्यमनाश्रित्य शक्या धर्मदेशना कर्तुम्. ]

**सर्वेषां भावानां सर्वत्र न विद्यते स्वभावश्चेत् ।**
**त्वद्वचनमस्वभावं न निवर्तयितुं स्वभावमलम् ॥ १ ॥**

यदि सर्वेषां भावानां हेतौ प्रत्ययेषु च हेतुप्रत्ययसामग्र्यां च पृथक् च यत्र सर्वत्र स्वभावो न विद्यत इति कृत्वा शून्याः सर्वभावा इति । न हि बीजे हि हेतुभूतेऽङ्कुरोऽस्ति । न पृथिव्यप्तेजोवाय्वादीनामेकैकस्मिन् प्रत्ययसंज्ञेति । न प्रत्ययेषु समग्रेषु । न हेतुप्रत्ययेषु समग्रेषु । न हेतुप्रत्ययसामग्र्याम् । न हेतुप्रत्ययविनिर्मुक्तः पृथगेव वा । यस्मादत्र स्वभावो नास्ति, तस्मान्निःस्वभावोऽङ्कुरः । यस्मान्निःस्वभावः, तस्मात् शून्यः । यथा चायमङ्कुरो निःस्वभावो निःस्वभावत्वाच्च शून्यः, तथा सर्वभावा निःस्वभावत्वाच्छून्या इति ।

अत्र वयं ब्रूमः—यद्येवं तवापि वचनं यदेतच्छून्याः सर्वभावा इति, तदपि शून्यम् । किं कारणम्? तदपि हेतौ नास्ति, महाभूतेषु संप्रयुक्तेषु विप्रयुक्तेषु वा प्रत्ययेषु नास्ति । उरःकण्ठौष्ठ-जिह्वादन्तमूलतालुनासिकामूर्धप्रभृतिषु यत्नैवोभयसामग्र्यामस्ति । हेतुप्रत्ययसामग्रीविनिर्मुक्तं पृथगेव वा नास्ति । यस्मादत्र सर्वत्र नास्ति, तस्मान्निःस्वभावम् । यस्मान्निःस्वभावम्, तस्माच्छून्यम् । तस्मादनेन सर्वभावस्वभावव्यावर्तनमशक्यं कर्तुम् । किं कारणम्? न ह्यसदग्निना शक्यं दग्धुम् । न ह्यसता शस्त्रेण शक्यं छेत्तुम् । नासतीभिरद्भिः शक्यं क्लेदयितुम् । एवमसता वचनेन न शक्यः सर्वभावस्वभावप्रतिषेधः कर्तुम् । न शक्यः सर्वभावस्वभावो निवर्तयितुम् ॥

तत्र यदुक्तं सर्वभावस्वभावः प्रतिषिद्धः, सर्वत्र भावस्वभावो विनिवर्तत इति, तन्न ।

**अथ सस्वभावमेतद्वाक्यं श्रुत्वा हता प्रतिज्ञा ते ।**
**वैषमिकत्वं तस्मिन् विशेषहेतुश्च वक्तव्यः ॥ २ ॥**

अथापि मन्यसे–मा भूदेष दोष इति सस्वभावमेतद्वाक्यम् । सस्वभावत्वाच्चाशून्यम् । तस्मादनेन सर्वभावस्वभावः प्रतिषिद्धः सर्वभावस्वभावो विनिवर्तत इति । अत्र ब्रूमः–यदि ते प्रतिज्ञा–शून्याः सर्वभावा इति, हता सा । किं चान्यत् । सर्वभावान्तर्गतं च त्वद्वचनम् । कस्मात्? सर्वभावेषु त्वद्वचनमशून्यम् । येन अशून्यत्वात् सर्वभावस्वभावः स्वभावप्रसिद्धः । एवं षट्कोटिको वादः प्रसक्तः । स पुनः कथमिति? (१) हन्त चेत् पुनः शून्याः सर्वभावाः, तेन त्वद्वचनं शून्यम्, सर्वभावान्तर्गतत्वात् त्वद्वचनस्य, तेन शून्येन प्रतिषेधानुपपत्तिः । तत्र यः प्रतिषेधः शून्यः सर्वभाव इति, [सः] अनुपपन्नः । (२) उपपन्नश्चेत्, पुनः शून्याः सर्वभावा इति प्रतिषेधः, तेन त्वद्वचनशून्यत्वात् अनेन प्रतिषेधोऽनुपपन्नः । (३) अथ शून्याः सर्वभावाः, त्वद्वचनं चाशून्यम्, येन प्रतिषेधस्तेन त्वद्वचनं सर्वत्रासंगृहीतम् । तत्र दृष्टान्तविरोधः । (४) सर्वत्र चेत् पुनर्गृहीतं त्वद्वचनं सर्वभावाश्च शून्याः, तेन तदपि शून्यम् । शून्यत्वादनेन नास्ति प्रतिषेधः । (५) अथ शून्यमस्ति चानेन प्रतिषेधः–शून्याः सर्वभावा इति, तेन शून्या (अ)पि सर्वभावाः कार्यक्रियासमर्था भवेयुः । न चैतदिष्टम् । (६) अथ शून्याः सर्वभावाः न च कार्यक्रियासमर्था भवन्ति, मा भूद् दृष्टान्तविरोध इति कृत्वा शून्येन त्वद्वचनेन सर्वभावस्वभावप्रतिषेधो नोपपन्न इति ॥

किं चान्यत् । एवं तदस्तित्वात् वैषमिकत्वप्रसङ्गः, किंचित् शून्यं किंचिदशून्यमिति । तस्मिंश्च वैषमिकत्वे विशेषहेतुर्वक्तव्यः, येन हि विशेषहेतुना किंचित् शून्यं किंचिदशून्यं स्यात् । स च नोपदिष्टो हेतुः ॥

तत्र यदुक्तं शून्याः सर्वभावा इति, तन्न । किं चान्यत् ।

**मा शब्दवदित्येतत् स्यात्ते बुद्धिर्न चैतदुपपन्नम् ।**
**शब्देनात्र सता भविष्यतो वारणं तस्य ॥ ३ ॥**

स्यात् ते बुद्धिः–यथा नाम कश्चिद् ब्रूयात्–मा शब्दं कार्षीः, मा शब्दं कार्षीरिति । तेन च शब्देन व्यावर्तनं क्रियते । एवमेव शून्याः सर्वभावा इति । शून्येन वचनेन सर्वभावस्वभावस्य व्यावर्तनं क्रियत इति ।

अत्र वयं ब्रूमः–एतदप्यनुपपन्नम् । किं कारणम्? सता ह्यत्र शब्देन भविष्यतः शब्दस्य प्रतिषेधः क्रियते । न पुनरिह भवतः सता वचनेन सर्वभावस्वभावप्रतिषेधः क्रियते । तव हि मतेन वचनमप्यसत् । सर्वभावस्वभावोऽप्यसत् । तस्मादयं मा शब्दवदिति विषमोपन्यासोऽसन्निति ॥

किं च ।

**प्रतिषेधः प्रतिषेद्धव्योऽप्येवमिति मतं भवेत् तदसंदेव ।**
**एवं तव प्रतिज्ञा लक्षणतो दूष्यते न मम ॥ ४ ॥**

स्यात् ते बुद्धिः– प्रतिषेधः प्रतिषेध्योऽप्यनेनैव कल्पेनानुपपन्नः । तत्र यद् भवान् सर्वभावस्वभावप्रतिषेधवचनं प्रतिषेधयति, तदनुपपन्नमिति ।

अत्र वयं ब्रूमः—एतदशब्देन सदेव। कस्मात्? तव हि •प्रतिज्ञालक्षणप्राप्ते मतम्, न मम। भवान् ब्रवीति शून्याः सर्वभावा इति, नाहम्। तस्मात् त्वत्प्रतिज्ञां न पयामि (?) पूर्वकः पक्षो न मम ॥ ४ ॥

तत्र यदुक्तम्—प्रतिषेधः प्रतिषेध्योऽप्येवं मतमुपपन्नमिति? तन्न।

किं चान्यत्।

**प्रत्यक्षेण हि तावत् यद्युपलभ्य विनिवर्तयसि भावान्।**
**तन्नास्ति प्रत्यक्षं भावा येनोपलभ्यन्ते ॥ ५ ॥**

यदि प्रत्यक्षतः सर्वभावानुपलभ्य भवान् निवर्तयति शून्याः सर्वभावा इति, तदनुपपन्नम्। कस्मात्? प्रत्यक्षमपि हि प्रमाणं सर्वभावान्तर्गतत्वात् शून्यम्। योऽपि सर्वभावानुपलभते, सोऽपि शून्यः। तस्मात् प्रत्यक्षेण प्रमाणेन नोपलम्भभावः, अनुपलब्धस्य च प्रतिषेधानुपपत्तिः। तत्र शून्याः सर्वभावा इति यदुक्तम्, तदनुपपन्नम् ॥

स्यात् ते बुद्धिः— अनुमानेन आगमेन उपमानेन वा सर्वभावानुपलभ्य सर्वभावव्यावर्तनं क्रियत इति, अत्र ब्रूमः --

**अनुमानं प्रत्युक्तं प्रत्यक्षेणागमोपमाने च।**
**अनुमानागमसाध्या येऽर्था दृष्टान्तसाध्याश्च ॥ ६ ॥**

अनुमानोपमानागमाश्च प्रत्यक्षेण प्रमाणेन प्रत्युक्ताः। यथा हि प्रत्यक्षं प्रमाणं शून्यम्, सर्वभावानां शून्यत्वात्, एवमनुमानागमोपमाना अपि शून्याः, सर्वभावानां शून्यत्वात्। येऽप्यनुमान-साध्या अर्था आगमसाध्या उपमानसाध्याश्च, तेऽपि शून्याः। सर्वभावानां शून्यत्वात्। अनुमानोप-मानागमैश्च योऽपि भावानुपलभते, सोऽपि शून्यः स्यात्। तस्मात् भावानामुपलम्भाभावोऽनुप-लब्धानां च स्वभावप्रतिषेधानुपपत्तिः ॥

तत्र यदुक्तं शून्याः सर्वभावा इति, तन्न। किं चान्यत्।

**कुशलानां धर्माणां धर्मावस्थाविदश्च मन्यन्ते।**
**कुशलं जनस्वभावं शेषेष्वप्येष विनियोगः ॥ ७ ॥**

इह धर्मावस्थाविदो मन्यन्ते—कुशलानां धर्माणामेकोनविंशं शतम्। तद्यथा—एकदेशो विज्ञानस्य, वेदनायाः, संज्ञायाश्चेतनायाः, स्पर्शस्य, मनसिकारस्य, छन्दस्याधिमोक्षस्य वीर्यस्य स्मृतेः समाधेः प्रज्ञायाः उपेक्षायाः प्रयोगस्य संप्रयोगस्य प्राप्तेरध्याशयस्य प्रतिविरतिः व्यवसाया (?) औत्सुक्यस्य उन्मूरूत्साहस्य अव्यवर्त्यस्य वसितायाः (?) प्रतिपत्तेरविप्रतीसारस्य धृतेरध्यवसायस्य अनौष्येकस्य अननुमूर्ध्न्य(?)नुत्सारस्य। प्रापणायाः प्रणिधेः मदस्य विषयाणां विप्रयोगस्य अनित्याणि (?) कतायाः उत्पादस्य स्थितेरनित्यतायाः समर्थागतस्य जरायाः परित्रास्यतारतेः। वितर्काणां प्रीतेः प्रमादस्य अप्रस्रब्धेः व्यवहारतायाः प्रेष् (?) प्रतिकूलस्य प्रदक्षिणग्राहस्य वैशारद्यगौरवस्य चित्रीकारस्य भक्तेरभक्तेः शुश्रूषायाः सादरस्यानादरस्य प्रस्रब्धेः हासस्य वाचः विष्पन्दनायाः सिद्धस्याप्रसादस्य अप्रस्रब्धेः व्यवहारतायाः दाक्ष्यस्य सौरत्यस्य विप्रतिसारस्य शोकस्य। उपायासायासभी(?)तस्य अप्रदक्षिणग्राहस्य संशयस्य संवराणां

परिशुद्धेरध्याशयस्य रूपस्येति । श्रद्धा ह्रीरार्जवमवञ्चनम् । उपशमः अचापलं सप्रमादमार्दवं प्रतिसंख्यानं निर्वैरपरिदाहः अमदः अलोभः अदोषः अमोहः असद्वत् अप्रतिनिसर्गः विभवः अपत्रप्या अपरिश्रच्छर्दनं माननं कारुण्यं मैत्री अदीनतादिरतम....नं नाहः अलीकचेतसे उत्पादनं क्षान्तिः व्यवसदु (?) असौरत्यमिति भागान्वयम् । पुण्यम् । असंज्ञी समापत्तिः नैर्याणिकता असर्वज्ञता असंस्कृता धर्माः इति एकोनविंशं शतम् । कुशलानां कुशलः स्वभावः । तथा अकुशलानामकुशलः स्वभावः—निवृत्ताव्याकृतः । प्रकृताव्याकृतानां प्रकृताव्याकृतः । कामोक्तानां कामोक्तः । रूपोक्तानां रूपोक्तः । आरूप्योक्तानामारूप्योक्तः । अनास्रवाणामनास्रवः । दुःखोक्तानां दुःखोक्तः । समुदयोक्तानां समुदयोक्तः । निरोधोक्तानां निरोधोक्तः । मार्गोक्तानां मार्गोक्तः । भावनाप्रहातव्यानां भावनाप्रहातव्यः । अप्रहातव्यानामप्रहातव्यः । प्रहातव्यानां प्रहातव्यः ।

यस्मादेवमनेकप्रकारो धर्मस्वभावो दृष्टः, तस्मादिह यदुक्तम्—निःस्वभावाः सर्वभावाः, निःस्वभावत्वात् शून्या इति, तन्न ॥

किं चान्यत् ।

**नैर्याणिकस्वभावो धर्मो नैर्याणिकाश्च ये तेषाम् ।**
**धर्मावस्थोक्तानामेव च नैर्याणिकादीनाम् ॥ ८ ॥**

इह च धर्मोऽवस्थोक्तानां नैर्याणिकानां धर्माणां नैर्याणिकः स्वभावः । अनैर्याणिकानामनैर्याणिकः । बोध्यङ्गिकानां बोध्यङ्गिकः । अबोध्यङ्गिकानामबोध्यङ्गिकः । बोधिपाक्षिकाणां बोधिपाक्षिकः । अबोधिपाक्षिकाणामबोधिपाक्षिकः । एवं शेषाणाम् । तद् यस्मादेवमनेकप्रकारो धर्माणां स्वभावो दृष्टः, तस्मात् यदुक्तम्—निःस्वभावाः सर्वभावाः, निःस्वभावत्वात् शून्या इति, तन्न ।

किं चान्यत् ।

**यदि च न भवेत् स्वभावो धर्माणां निःस्वभाव इत्येवम् ।**
**नामापि भवेन्नैवं नामापि निर्वस्तुकं नास्ति ॥ ९ ॥**

यदि धर्माणां स्वभावो भावानां स्वभावानां सद्भावाच्च अशून्याः सर्वभावाः, तत्र यदुक्तम्—निःस्वभावाः सर्वभावाः, निःस्वभावत्वात् शून्या इति, तन्न । किं चान्यत् ।

**अथ विद्यते स्वभावः स च धर्माणां न विद्यते तस्मात् ।**
**धर्मैर्विना स्वभावः स यस्यास्ति तद् युक्तमुपदेष्टुम् ॥ १० ॥**

अथ मन्यसे——मा भूदवस्तुकं नामेति कृत्वा अस्ति स्वभावः । स पुनर्धर्माणां न संभवति । एवं धर्मशून्यता निःस्वभावत्वं धर्माणां सिद्धं भविष्यति । न च निर्वस्तुकं नामेति ।

अत्र वयं ब्रूमः—एवं कस्येदानीं स स्वभावो धर्मविनिर्मुक्तस्यार्थस्य, तत्र युक्तमुपदेष्टुमर्थः । स च नोपदिष्टः । तस्मात् या कल्पना—अस्ति स्वभावो न पुनर्धर्माणामिति, सा हीना ॥

किं चान्यत् ।

**सत एव प्रतिषेधो नास्ति घटो गेह इत्ययं यस्मात् ।**
**दृष्टः प्रतिषेधोऽयं सतः स्वभावस्य ते तस्मात् ॥ ११ ॥**

इह च सतोऽर्थस्य प्रतिषेधः क्रियते नासतः। तद्यथा—नास्ति घटो गेहे इति सतो घटस्य प्रतिषेधः क्रियते नासतः। एवमेव नास्ति भावो धर्माणामिति सतः स्वभावस्य प्रतिषेधः प्राप्नोति, नासतः॥

तत्र यदुक्तम्—निःस्वभावाः सर्वभावाः, निस्वभावत्वात् शून्या इति, तन्न। प्रतिषेधसंभवादेव सर्वभावस्वभावोऽप्रतिषिद्धः। किं चान्यत्।

**अथ नास्ति स स्वभावः किं नु प्रतिविध्यते त्वयानेन।**
**वचनेनर्ते वचनात् प्रतिषेधः सिध्यते ह्यसतः॥ १२॥**

नास्त्येव स्वभाव इत्यनेन वचनेन निःस्वभावा भावा इति वचनेन किं भवता प्रतिषिध्यते? असतो हि वचनाद् विना सिद्धः प्रतिषेधः। तद्यथा अग्नेः शैत्यस्य, अपामौष्ण्यस्य॥

किं चान्यत्।

**बालानामिव मिथ्या मृगतृष्णायां यथा जलग्राहः।**
**एवं मिथ्याग्राहः स्यात्ते प्रतिषिध्यतो ह्यसतः॥ १३॥**

स्यात् ते बुद्धिः—यथा बालानां मृगतृष्णायां मिथ्या जलमिति ग्राहो भवति। ननु निर्जलं सा मृगतृष्णेति तत्र पण्डितजातीयेन पुरुषेणोच्यते तस्य मिथ्याग्राहस्य विनिवर्तनार्थम्। एवं निःस्वभावेषु यः स्वभावे ग्राहः सत्त्वानाम्, तस्य व्यावर्तनार्थं निःस्वभावाः सर्वभावा इत्युच्यत इति॥

अत्र ब्रूमः।

**नन्वेवं सत्यस्ति ग्राहो ग्राह्यं च तद्गृहीतं च।**
**प्रतिषेधः प्रतिषेध्यं प्रतिषेद्धा चेति षट्कं तत्॥ १४॥**

यद्येवम्, नन्वेवं सति अस्ति तावत् सत्त्वानां मिथ्याग्राहः, अस्ति ग्राह्यः, सन्ति सत्त्वा ग्रहीतारः। अस्ति प्रतिषेधः तस्यापि मिथ्याग्राहस्य, अस्ति प्रतिषेध्यम्—यदिदं मिथ्याग्राह्यं नाम, सन्ति प्रतिषेद्धारो युष्मदादयोऽस्य मिथ्याग्राहस्येति सिद्धं षट्कम्। षट्कस्याप्यप्रसिद्धत्वात्॥

यदुक्तम्—अप्रतिषिद्धत्वात् शून्याः सर्वभावा इति, तन्न।

**अथ नैवास्ति ग्राहो न च ग्राह्यं न च ग्रहीतारः।**
**प्रतिषेधः प्रतिषेध्यं प्रतिषेद्धारोऽस्य तु न सन्ति॥ १५॥**

अथ मा भूदेष दोष इति कृत्वा नैव ग्राहोऽस्ति, नैव ग्राह्यम्, न च ग्रहीतार इति। एवं सति ग्राहस्य यः प्रतिषेधः—निःस्वभावाः सर्वभावाः इति, सोऽपि नास्ति, प्रतिषेध्यमपि नास्ति, प्रतिषेद्धारोऽपि न सन्ति॥

**प्रतिषेधः प्रतिषेध्यं प्रतिषेद्धारश्च यद्युत न सन्ति।**
**सिद्धा हि सर्वभावा येषामेवं स्वभावश्च॥ १६॥**

यदि च न प्रतिषेधो न प्रतिषेध्यं न प्रतिषेद्धारः सन्ति, अप्रतिषिद्धाः सर्वभावाः, अस्ति च सर्वभावानां स्वभावः॥

किं चान्यत् ।

**हेतोस्ततो न सिद्धिर्नैःस्वाभाव्यात् कुतो हि ते हेतुः ।**
**निर्हेतुकस्य सिद्धिर्न चोपपन्नास्य तेऽर्थस्य ॥ १७ ॥**

निःस्वभावाः सर्वभावा इत्येतस्मिन्नर्थे ते हेतोरसिद्धिः । किं कारणम् ? निःस्वभावत्वाद्धि सर्वभावानां शून्यत्वान्न ततो हेतुर्यतः, असति हेतौ निर्हेतुकस्यार्थस्य शून्याः सर्वभावा इति कुत एव प्रसिद्धिः ?

तत्र यदुक्तं शून्याः सर्वभावा इति, तन्न । किं चान्यत् ।

**यदि चाहेतोः सिद्धिः स्वभावविनिवर्तनस्य ते भवति ।**
**स्वाभाव्यस्यास्तित्वं ममापि निर्हेतुकं सिद्धम् ॥ १८ ॥**

अथ मन्यसे—नैर्हेतुकी सिद्धिः, निःस्वभावत्वस्य भावानामिति । यथा तत्र स्वभावनिवर्तनं निर्हेतुकं सिद्धम्, तथा ममापि स्वभावसद्भावोऽपि निर्हेतुकः सिद्धः ॥

**अथ हेतोरस्तित्वं भावनैःस्वाभाव्यमित्यनुपपन्नम् ।**
**लोके नैःस्वाभाव्यान्न हि कश्चन विद्यते भावः ॥ १९ ॥**

इह यदि [ भावानां नैःस्वाभाव्यस्य ] हेतोरस्तित्वं मन्यसे, निःस्वभावाः सर्वभावा इति, तदनुपपन्नम् । किं कारणम् ? न हि लोके निःस्वभावः कश्चिद् भावोऽस्ति ॥

किं चान्यत् ।

**पूर्वं चेत् प्रतिषेधः पश्चात् प्रतिषेध्यमिति च नोपपन्नम् ।**
**पश्चादनुपपन्नो युगपच्च यतः स्वभावोऽसन् ॥ २० ॥**

इह पूर्वं चेत् प्रतिषेधः, पश्चाच्च प्रतिषेध्यम्, निःस्वाभाव्यं नोपपन्नम् । असति हि प्रतिषेध्ये कस्य प्रतिषेधः ? अथ पश्चात् प्रतिषेधः, पूर्वं प्रतिषेध्यमिति च नोपपन्नम् । सिद्धे हि प्रतिषेध्ये किं प्रतिषेधः करोति ? अथ युगपत् प्रतिषेधप्रतिषेध्ये, तथापि न प्रतिषेधः प्रतिषेध्यस्यार्थस्य कारणं प्रति, न प्रतिषेध्यः, न प्रतिषेधस्य च । यथा युगपदुत्पन्नयोः शशविषाणयोः नैव दक्षिणं सव्यस्य कारणम्, सव्यं वा दक्षिणस्य कारणं भवतीति ॥

तत्र यदुक्तं निःस्वभावाः सर्वभावा इति, तन्न । अत्रोच्यते—यत् तावद् भवतोक्तम्—

सर्वेषां भावानां सर्वत्र न विद्यते स्वभावश्चेत् ।
त्वद्वचनमस्वभावं न निवर्तयितुं स्वभावमलम् ॥

इति, अत्र ब्रूमः—

**हेतुप्रत्ययसामग्र्यां पृथग्भावेऽपि मद्वचो न यदि ।**
**ननु शून्यत्वं सिद्धं भावानामस्वभावत्वात् ॥ २१ ॥**

यदि मद्वचो हेतुः नास्ति, महाभूतेषु संप्रयुक्तेषु विप्रयुक्तेषु वा प्रत्ययेषु नास्ति, उरःकण्ठौष्ठजिह्वादन्ततालुनासिकमूर्धप्रभृतिषु प्रयत्नेष्वपि नास्ति, नोभयसामग्र्यामस्ति, हेतुप्रत्ययसामग्रीविनिर्मुक्तं पृथग् ( न ) वास्ति । तस्मान्निःस्वभावाः, निःस्वभावत्वाच्छून्यम् । एवं ननु शून्यत्वं सिद्धं निःस्वभावत्वादस्य मदीयवचसः । यथा चैतन्मद्वचनं निःस्वभावत्वाच्छून्यम्, तथा सर्वभावा निःस्वभावत्वाच्छून्यमिति ॥

यद् भवतोक्तम्—त्वदीयवचसः शून्यत्वात् शून्यता सर्वभावानां नोपपद्यते इति, तन्न। किं चान्यत्।

**यश्च प्रतीत्य भावो भावानां शून्यतेति सा ह्युक्ता।**
**यश्च प्रतीत्य भावो भवति हि तस्यास्वभावत्वम्॥ २२॥**

शून्यतार्थं च भावान् भावानामनवसाय शून्यतार्थमज्ञात्वा प्रवृत्त उपालम्भं वक्तुम्। त्वद्वचनस्य शून्यत्वात् त्वद्वचनस्य निःस्वभावत्वादेवं त्वद्वचनेन निःस्वभावेन भावानां स्वभाव-प्रतिषेधो नोपपद्यत इति। इह हि यः प्रतीत्य भावानां भावः, सा शून्यता। कस्मात्? निःस्वभावत्वात्। ये हि प्रतीत्य समुत्पन्ना भावास्ते न सस्वभावा भवन्ति, स्वभावाभावात्। कस्मात्? हेतुप्रत्ययापेक्षत्वात्। यदि हि स्वभावतो भावा भवेयुः, प्रत्याख्यायापि हेतुं प्रत्ययं च भवेयुः। न चैवं भवन्ति। तस्मान्निःस्वभावाः, निःस्वभावत्वाच्छून्या इत्यभिधीयन्ते। एवं मदीयमपि वचनं प्रतीत्यसमुत्पन्नत्वान्निःस्वभावम्, निःस्वभावत्वात् शून्यमिति उपपन्नम्। यथा च प्रतीत्य-समुत्पन्नत्वात् स्वभावशून्या रथपटघटादयः स्वेषु स्वेषु कार्येषु काष्ठाहरणमृत्तिकाहरणे मधूदकपयसां धारणे शीतवातातपपरित्राणप्रभृतिषु वर्तन्ते, एवमिदं मदीयवचनं प्रत्ययसमुत्पन्नत्वात् निःस्वभावं निःस्वभावत्वप्रसाधनं प्रत्ययभावानां वर्तते॥

तत्र यदुक्तम्—निःस्वभावत्वात् त्वदीयवचनस्य शून्यत्वम्, शून्यत्वात् तस्य च तेन सर्व-भावस्वभावप्रतिषेध उपपन्न इति, तन्न। किं चान्यत्।

**निर्मितको निर्मितकं मायापुरुषः स्वमायया सृष्टम्।**
**प्रतिषेधयसे यद्वत् प्रतिषेधोऽयं तथैव स्यात्॥ २३॥**

यथा निर्मितकः [निर्मितक]पुरुषमभ्यागतस्तु कश्चिदर्थेन वर्तमानं प्रतिषेधयेत्, माया-कारेण वा सृष्टो मायापुरुषोऽन्यं मायापुरुषं कस्मिंश्चिदर्थे वर्तमानं प्रतिषेधयेत्। तत्र यो निर्मितकः पुरुषः प्रतिषिध्यते, स शून्यः, यः प्रतिषेधयति सोऽपि शून्यः। योऽपि मायापुरुषः प्रतिषिध्यते, सोऽपि शून्यः, यः प्रतिषेध्यः, सोऽपि शून्यः। मायापुरुषो यः प्रतिषेध्यः, सोऽपि शून्यः। यः प्रतिषेधः, सोऽपि शून्यः। एवमेव मद्वचनेन शून्येन सर्वभावानां सर्वभावस्वभावशून्येन स्वभाव-प्रतिषेध उपपन्नः॥

तत्र यद् भवतोक्तम्—शून्यत्वात् त्वद्वचनस्य सर्वभावस्वभावप्रतिषेधो नोपपन्न इति, तन्न। तत्र यः षट्कोटिको वाद उक्तः, स एवं प्रतिषिद्धः। नैव ह्येवं सति न सर्व-भावान्तर्गतं मद्वचनं नास्ति शून्यं नापि सर्वभावा अशून्याः।

यत् पुनर्भवतोक्तम्—

अथ सस्वभावमेतद् वाक्यं पूर्वा हता प्रतिज्ञा ते।
वैषमिकत्वं तस्मिन् विशेषहेतुश्च वक्तव्यः॥

इति, अत्रापि ब्रूमः—

**न स्वाभाविकमेतद् वाक्यं तस्मान्न वादहानिर्मे।**
**नास्ति च वैषमिकत्वं विशेषहेतुश्च न निगद्यः॥ २४॥**

न तावन्मम वचनं प्रतीत्यसमुत्पन्नत्वात् स्वभावोपपन्नं यथा पूर्वमुक्तम् । स्वभावानुपपन्नत्वात् शून्यम् । यस्माच्च इदमपि मद्वचनं शून्यम्, शेषा अपि सर्वभावाः शून्याः, तस्मान्नास्ति वैषमिकत्वम् । यदि हि वयं ब्रूमः—इदं वचनमशून्यम्, शेषाः सर्वभावाः पुनः शून्याः इति, ततो वैषमिकत्वं स्यात् । न चैतदेवम् । तस्मान्न वैषमिकत्वम् । यस्माच्च वैषमिकत्वं न संभवति—इदं वचनमशून्यम्, शेषाः पुनः सर्वभावाः शून्या. इति, तस्मादस्माभिर्विशेषहेतुरपि न वक्तव्यः—अनेन हेतुना इदं वचनमशून्यम्, सर्वभावाः पुनः शून्या इति ॥

तत्र यद् भवतोक्तम्—वादहानिस्ते वैषमिकत्वं च विशेषहेतुश्च त्वया वक्तव्य इति, तन्न । यत् पुनर्भवतोक्तम्—

मा शब्दवदित्येतत् स्यात् ते बुद्धिर्न चैतदुपपन्नम् ।
शब्देन ह्यत्र सता भविष्यतो वारणं तस्य ॥

इति, अत्र ब्रूमः—

**मा शब्दवदिति नायं दृष्टान्तो यस्त्वया ममारब्धः ।**
**शब्देन हि तच्च शब्दस्य वारणं नैव मे वचः ॥ २५ ॥**

नाप्ययमस्माकं दृष्टान्तः । यथा कश्चित् मा शब्दं कार्षीरिति ब्रुवन् शब्दमेव करोति शब्दं च प्रतिषेधयति, यद्वा शून्येन वचनेन शून्यतां न प्रतिषेधयति । किं कारणम् ? अत्र हि दृष्टान्ते शब्देन शब्दस्य व्यावर्तनं क्रियते । न चैतदेवम् । वयं ब्रूमः—निःस्वभावाः सर्वभावाः निःस्वभावत्वात् तच्छून्यमिति ॥

किं कारणम् ?

**नैःस्वाभाव्यानां चेन्नैःस्वाभाव्येन वारणं यदि हि ।**
**नैःस्वाभाव्यनिवृत्तौ स्वाभाव्यं हि प्रसिद्धं स्यात् ॥ २६ ॥**

यथा मा शब्दमिति शब्देन शब्दस्य व्यावर्तनं क्रियते, एवं यदि नैःस्वाभाव्येन वचनेन नैःस्वाभाव्यानां व्यावर्तनं क्रियते, ततोऽयं दृष्टान्त उपपन्नः स्यात् । इह तु नैःस्वाभाव्येन वचनेन भावानां स्वभावप्रतिषेधः क्रियते । एवं यदि नैःस्वाभाव्येन वचनेन निःस्वभावानां नैःस्वाभाव्यप्रतिषेधः क्रियते, नैःस्वाभाव्यप्रतिषेधादेव भावाः सस्वभावा भवेयुः, सस्वभावत्वादशून्याः स्युः । शून्यतां च वयं भावानामाचक्ष्महे नाशून्यतामित्यदृष्टान्त एवायमिति ॥

**अथवा निर्मितकायां यथा स्त्रियां स्त्रियमित्यसंग्राहम् ।**
**निर्मितकः प्रतिहन्यात् कस्यचिदेवं भवेदेतत् ॥ २७ ॥**

अथवा । कस्यचित् पुरुषस्य निर्मितकायां स्त्रियां स्वभावशून्यायां परमार्थतः स्त्रियमित्यसंग्राहः स्यात्, एवं तस्यां तेनासंग्राहेण रागमुत्पादयेत् । तद्यथा—तथागतेन वा तच्छ्रावकेण वा निर्मितको निर्मितः स्यात् । तथागताधिष्ठानेन वा तथागतश्रावकाधिष्ठानेन वा तस्य तमसंग्रहं विनिवर्तयेत् । एवमेव निर्मितकोपमेन मदीयेन शून्येन वचनेन निर्मितकस्त्रीसादृश्येषु सर्वभावनिःस्वभावेषु योऽयं स्वभावग्राहः, स निवर्त्यते, स प्रतिषिध्यते । तस्मादयमत्र दृष्टान्तः शून्यताप्रसाधनं प्रत्युपपद्यमानो नेतरः ॥

**अथवा साध्यसमोऽयं हेतुर्न हि विद्यते ध्वनेः सत्ता।**
**संव्यवहारं च वयं नानभ्युपगम्य कथयामः ॥ २८ ॥**

मा शब्दवदिति साध्यसम एवायं हेतुः। कस्मात्? सर्वभावानां नैःस्वाभाव्येनाविशिष्टत्वात्, न हि तस्य ध्वनेः प्रतीत्यसमुत्पन्नत्वात् स्वभावसत्ता विद्यते। तस्याः स्वभावसत्ताया अविद्यमानत्वात्॥

यदुक्तम्—शब्देन ह्यत्र सता भविष्यतो वारणं तस्येति, तद् व्याहन्यते। अपि च। न वयं व्यवहारसत्यं प्रत्याख्याय व्यवहारसत्यमनभ्युपगम्य कथयामः शून्याः सर्वभावा इति। न हि व्यवहारसत्यमनागम्य शक्या धर्मदेशना कर्तुम्। यथोक्तम्—

व्यवहारमनाश्रित्य परमार्थो न देश्यते।
परमार्थमनागम्य निर्वाणं नाधिगम्यते॥ इति

तस्मात् मद्वचनवत् शून्याः सर्वभावाः, सर्वभावानां च निःस्वभावत्वमुभयथोपपद्यमानमिति॥

यत्पुनर्भवतोक्तम्—

प्रतिषेधः प्रतिषेध्योऽप्येवमिति मतं भवेत् तदसदेव।
एवं तव प्रतिज्ञा लक्षणतो दूष्यते न मम॥ इति,

अत्र ब्रूमः—

**यदि काचन प्रतिज्ञा तत्र स्यादेष मे भवेद्दोषः।**
**नास्ति च मम प्रतिज्ञा तस्मान्नैवास्ति मे दोषः॥ २९॥**

यदि च काचित् मम प्रतिज्ञा स्यात्, ततो मम प्रतिज्ञालक्षणप्राप्तत्वात् स पूर्वको दोषः। यथा त्वयोक्तं तथा मम स्यात्। न मम काचिदस्ति प्रतिज्ञा। तस्मात् सर्वभावेषु शून्येष्वत्यन्तोपशान्तेषु प्रकृतिविविक्तेषु कुतः प्रतिज्ञालक्षणप्राप्तिः, कुतः प्रतिज्ञालक्षणताप्राप्तिकृतो दोषः?

तत्र यद् भवतोक्तम्—प्रतिज्ञालक्षणप्राप्तत्वात् तवैव दोष इति, तन्नास्ति। यत्पुनर्भवतोक्तम्—

प्रत्यक्षेण हि तावत् यद्युपलभ्य निवर्तयसि भावान्।
तन्नास्ति प्रत्यक्षं भावा येनोपलभ्यन्ते॥ इति,
अनुमानं प्रत्युक्तं प्रत्यक्षेणागमोपमाने च।
अनुमानागमसाध्या येऽर्था दृष्टान्तसाध्याश्च॥ इति,

अत्र वयं ब्रूमः—

**यदि किंचिदुपलभेयं प्रवर्तयेयं निवर्तयेयं वा।**
**प्रत्यक्षादिभिरर्थैस्तदभावान्मेऽनुपालम्भः॥ ३०॥**

यद्यहं किंचिदर्थमुपलभेयं प्रत्यक्षानुमानोपमानागमैश्चतुर्भिः प्रमाणैः, चतुर्णां वा प्रमाणानामन्यतमान्यतमेन, अत एवं प्रवर्तयेयं वा निवर्तयेयं वा। अर्थमेवाहं किंचिन्नोपलभे। तस्मान्न

प्रवर्तयामि न निवर्तयामि । तत्रैवं सति यो भवतोपालम्भ उक्तः—यदि प्रत्यक्षादीनां प्रमाणाना-मन्यतमेन उपलभ्य भावान् विनिवर्तयसीति, ननु भवतोक्तानि प्रमाणानि न सन्ति तानि, तैश्च प्रमाणैरपि गम्या अर्था इति दोष उक्तः, स मे भवत्येवानुपालम्भः ॥

किं चान्यत् ।

**यदि च प्रमाणतस्तेषां तेषां प्रसिद्धिरर्थानाम् ।**
**तेषां पुनः प्रसिद्धिं ब्रूहि कथं ते प्रमाणानाम् ॥ ३१ ॥**

प्रसिद्धिरिति । यदि च प्रमाणतस्तेषां तेषामर्थानां प्रमेयाणां सिद्धिं मन्यसे यथ मानैर्मेयानाम्, तथा तेषामिदानीं प्रत्यक्षानुमानागमोपमानानां चतुर्णां प्रमाणानां कुतः प्रसिद्धिः ? यदि तावन्निष्प्रमाणानां प्रमाणं स्यात्, नादेः सिद्धिस्तत्रास्ति, नैव मध्यस्य, नान्तस्य । यदि पुनर्मन्यसे प्रमाणैः प्रसिद्धिः, प्रमाणतोऽर्थानां प्रसिद्धिरिति, हीयते प्रतिज्ञा । तथापि—

**अन्यैर्यदि प्रमाणैः प्रमाणसिद्धिर्भवत्यनवस्था ।**
**नादेः सिद्धिस्तत्रास्ति नैव मध्यस्य नान्तस्य ॥ ३२ ॥**

यदि पुनर्मन्यसे—प्रमाणैः प्रमेयाणां प्रसिद्धिः, तेषां प्रमाणानामन्यैः प्रमाणैः प्रसिद्धिः, अनवस्थाप्रसङ्गः । अनवस्थाप्रसङ्गे को दोषः ?

नादेः सिद्धिस्तत्रास्ति नैव मध्यस्य नान्तस्य ।

अस्यानवस्थाप्रसङ्गः आदेः सिद्धिर्नास्ति । किं कारणम् ? तेषामपि हि प्रमाणानामन्यैः प्रमाणैः [ प्र ] सिद्धिः, तेषामन्यैरिति तेषामप्यन्यैरिति नास्त्यादिः । आदेरसद्भावात् कुतो मध्यं कुतोऽन्तः ? तस्मात् तेषां प्रमाणानामन्यैः प्रमाणैः प्रसिद्धिः [ इति यदुक्तम्, तन्नोपपद्यते इति ] ॥

**तेषामथ प्रमाणैर्विना प्रसिद्धिर्विहीयते वादः ।**
**वैषमिकत्वं तस्मिन् विशेषहेतुश्च वक्तव्यः ॥ ३३ ॥**

अथ मन्यसे—तेषां प्रमाणानां विना प्रमाणैः प्रसिद्धिः, प्रमेयाणां पुनरर्थानां प्रमाणैः प्रसिद्धिरिति, एवं सति यस्ते वादः(—)प्रमाणैः प्रसिद्धिरर्थानामिति, [ स ] हीयते । वैषमिकत्वं च भवति — केषांचिदर्थानां प्रमाणैः प्रसिद्धिः, केषांचिन्नेति । विशेषहेतुश्च वक्तव्यः, येन हेतुना केषांचिदर्थानां प्रमाणैः प्रसिद्धिः, केषांचिन्नेति । स च नोपदिष्टः । तस्मादियमपि कल्पना नापपन्नेति ॥

अत्राह— प्रमाणान्येव मम स्वात्मानं परात्मानं च प्रसाधयन्ति । यथोक्तम्—

द्योतयति स्वात्मानं यथा हुताशस्तथा परात्मानम् ।
स्वपरात्मानावेवं प्रसाधयन्ति प्रमाणानि ॥

परमिव स्वात्मानं परात्मानं चेति ॥

अत्रोच्यते—

**विषमोपन्यासोऽयं न ह्यात्मानं प्रकाशयत्यग्निः ।**
**न हि तस्यानुपलब्धिर्दृष्टा तमसीव कुम्भस्य ॥ ३४ ॥**

विषम एवायमुपन्यासः—अग्निवत् प्रमाणानि स्वात्मानं च प्रसाधयन्ति परात्मानं च प्रसाधयन्तीति। न ह्यग्निरात्मानं प्रकाशयति। यदि हि यथा प्रागेव अग्निना अप्रकाशितस्तमसि कुम्भो नोपलभ्यते, अथोत्तरकालमुपलभ्यतेऽग्निना प्रकाशितः सन्, एवमेव यद्यग्निना न प्रकाशितः प्रागग्निः [तमसि] स्यात्, उत्तरकालमग्नेः प्रकाशनं स्यात्। अतः स्वात्मानं प्रकाशयेत्। नैतदेवम्। तस्मादियमपि कल्पना नोपपद्यते इति॥

किं चान्यत्।

**यदि स्वात्मानमयं त्वद्वचनेन प्रकाशयत्यग्निः।**
**परमिव न त्वात्मानं परिधक्ष्यत्यपि हुताशः॥ ३६॥**

यदि च त्वद्वचनेन यथा परात्मानं प्रकाशयत्यग्निः, एवमेव स्वात्मानमपि प्रकाशयत्यग्निरिति, ननु यथा परात्मानं दहति, एवमेव स्वात्मानमपि धक्ष्यतीति। न चैतदेवम्॥

तत्र यदुक्तम्—परात्मानमिव स्वात्मानं प्रकाशयत्यग्निरिति, तन्न। किं चान्यत्।

**यदि च स्वपरात्मानौ त्वद्वचनेन प्रकाशयत्यग्निः।**
**प्रच्छादयिष्यति तमः स्वपरात्मानौ हुताश इव॥ ३७॥**

यदि च भवतो मतेन स्वात्मपरात्मानौ प्रकाशयत्यग्निः, नन्विदानीं प्रतिपक्षभूततमोऽपि स्वात्मपरात्मानौ छादयेत्। नैतदिष्टम्॥

तत्र यदुक्तम्—स्वपरात्मानौ प्रकाशयत्यग्निरिति, तन्न। किं चान्यत्—

**नास्ति तमश्च ज्वलने यत्र च तिष्ठति सदात्मनि ज्वलनः।**
**कुरुते कथं प्रकाशं स हि प्रकाशोऽन्धकारवधः॥ ३८॥**

इह चाग्नौ नास्ति तमः, नापि च यत्राग्निस्तत्रास्ति तमः। प्रकाशश्च नाम तमसः प्रतिघातः। तस्मादग्नावपि नास्ति तमः। यत्राग्निस्तत्रापि नास्ति तमः। तत्र कथमस्य तमसः प्रतिघातमग्निः करोति, यस्य प्रतिघातात् स्वपरात्मानौ प्रकाशयतीति? आह—यत् यस्मादेवं नाग्नौ तमोऽस्ति, नापि यत्राग्निस्तत्र तमोऽस्ति। यस्मादेवं स्वपरात्मानौ न प्रकाशयत्यग्निः। तेन ह्युत्पद्यमाने नैवाग्निना तमसः प्रतिग्रहः। कुतः? तस्मान्नाग्नौ तमोऽस्ति, नापि यत्राग्निः तत्र तमोऽस्ति। यस्मादुत्पद्यमान एवोभयं प्रकाशयत्यग्निः स्वात्मानं परात्मानं चेति॥

अत्रोच्यते—

**उत्पद्यमान एव प्रकाशयत्यग्निरित्यसद्वादः।**
**उत्पद्यमान एव प्राप्नोति तमो न हि हुताशः॥ ३९॥**

अयमग्निरुत्पद्यमान एव प्रकाशयति स्वात्मानं परात्मानं चेति नायमुपपद्यते वादः। कस्मात्? न ह्युत्पद्यमान एवाग्निः तमः प्राप्नोति, अप्राप्तत्वान्नैवोपहन्ति। तमसश्चानुपघातान्नास्ति प्रकाशः॥

किं चान्यत्।

**अप्राप्तोऽपि ज्वलनो यदि वा पुनरन्धकारमुपहन्यात्।**
**सर्वेषु लोकधातुषु तमोऽयमिहसंस्थित उपहन्यात्॥ ४०॥**

अथापि मन्यसे—अप्राप्तोऽप्यग्निरन्धकारमुपहन्तीति, नन्विदानीमिहसंस्थितोऽग्निः सर्वलोकधातुस्थमुपहनिष्यति तमः तुल्यायामप्राप्तौ । न चैतदेवं दृष्टम् । तस्मादप्राप्यैवाग्निरन्धकारमुपहन्तीति यदिष्टम्, तन्न ॥

**यदि च स्वतःप्रमाणसिद्धिरनपेक्ष्य ते प्रमेयाणि ।**
**भवति प्रमाणसिद्धिर्न परापेक्षा हि सिद्धिरिति ॥ ४१ ॥**

यदि च अग्निवत् स्वतःप्रमाणसिद्धिरिति मन्यसे, अनपेक्ष्यापि प्रमेयाणि प्रमाणानां सिद्धिर्भविष्यतीति । किं कारणम् ? न हि स्वतः[ सिद्धिः ] परमपेक्षते । अथापेक्षते, न स्वतःप्रसिद्धिः ॥

अत्राह—यदि नापेक्ष्यन्ते प्रमेयानर्थान् प्रमाणानि, को दोषो भविष्यतीति ? अत्रोच्यते—

**अनपेक्ष्य हि प्रमेयानर्थान् यदि ते प्रमाणसिद्धिः ।**
**भवति न भवति कस्यचिदेवमिमानि प्रमाणानि ॥ ४२ ॥**

यदि प्रमेयानर्थाननपेक्ष्य सिद्धिर्भवति प्रमाणानामिति, एवं हि ते तानीमानि प्रमाणानि न कस्यचित् प्रमाणानि भवन्ति । एवं दोषः । अथ कस्यचिद् भवन्ति प्रमाणानि, नैवेदानीमनपेक्ष्य तान् प्रमेयानर्थान् प्रमाणानि भवन्ति ॥

**अथ मतमपेक्ष्य सिद्धिस्तेषामित्यत्र को दोषः ।**
**सिद्धस्य साधनं स्यान्नासिद्धोऽपेक्षते ह्यन्यत् ॥ ४३ ॥**

अथापि मतम्—अपेक्ष्य प्रमेयानर्थान् प्रमाणानां सिद्धिर्भवतीति, एवं हि सति सिद्धस्य प्रमाणचतुष्टयस्य साधनं भवतीति । किं कारणम् ? न ह्यसिद्धस्यार्थस्य अपेक्षणं भवति । न ह्यसिद्धो देवदत्तः कंचिदर्थमपेक्षते । न च सिद्धस्य साधनमिष्टम् । कृतस्य करणानुपपत्तेरिति ॥

किं चान्यत्—

**सिध्यन्ति हि प्रमेयाण्यपेक्ष्य यदि सर्वथा प्रमाणानि ।**
**भवति प्रमेयसिद्धिरनपेक्ष्यैव प्रमाणानि ॥ ४४ ॥**

यदि प्रमेयाण्यपेक्ष्य प्रमाणानि सिध्यन्ति, नेदानीं प्रमाणान्यपेक्ष्य प्रमेयाणि सिध्यन्ति । किं कारणम् ? न हि साध्यं साधनं साधयति । साधनानि च किल प्रमेयाणां प्रमाणानि ॥

**यदि च प्रमेयसिद्धिरनपेक्ष्यैव भवति प्रमाणानि ।**
**किं ते प्रमाणसिद्धया तानि यदर्थं प्रसिद्धं तत् ॥ ४५ ॥**

यदि च मन्यसे—अनपेक्ष्यैव प्रमाणानि प्रमेयाणां प्रसिद्धिर्भवति । किमिदानीं ते प्रमाणसिद्धया पर्यन्विष्टया ? किं कारणम् ? यदर्थं हि तानि प्रमाणानि पर्यन्विष्येरन्, ते प्रमेया अर्था विना प्रमाणैः सिद्धाः । तत्र किं प्रमाणैः कृत्यम् ?

**अथ तु प्रमाणसिद्धिर्भवत्यपेक्ष्यैव ते प्रमेयाणि ।**
**व्यत्यय एवं सति ते ध्रुवं प्रमाणप्रमेयाणाम् ॥ ४६ ॥**

अथापि मन्यसे—अपेक्ष्यैव प्रमेयानर्थान् प्रमाणानि भवन्ति, एवं हि सति मा भूत् पूर्वोक्तदोष इति कृत्वा, एवं ते सति व्यत्ययः प्रमाणप्रमेयाणां भवति । प्रमाणानि ते प्रमेयाणि भवन्ति, प्रमेयैः साधितत्वात्, प्रमाणानि च प्रमेयाणि भवन्ति, प्रमाणानां साधकत्वात् ॥

अथ ते प्रमाणसिद्ध्या प्रमेयसिद्धिः प्रमेयसिद्ध्या च।
भवति प्रमाणसिद्धिर्नास्त्युभयस्यापि ते सिद्धिः ॥ ४७ ॥

अथ मन्यसे–प्रमाणसिद्ध्या प्रमेयसिद्धिर्भवति प्रमाणापेक्षत्वात्, प्रमेयसिद्ध्या च प्रमाणसिद्धिर्भवति प्रमेयापेक्षत्वादिति, एवं सत्युभयस्यापि सिद्धिर्न ॥

किं कारणम्?

सिध्यन्ति हि प्रमाणैर्यदि प्रमेयाणि तानि तैरेव।
साध्यानि च प्रमेयैस्तानि कथं साधयिष्यन्ति ॥ ४८ ॥

यदि हि प्रमाणैः प्रमेयाणि सिध्यन्ति, तानि प्रमाणानि तैरेव प्रमेयैः साधयितव्यानि। ननु असिद्धेषु प्रमेयेषु कारणस्यासिद्धत्वादसिद्धानि कथं साधयिष्यन्ति प्रमेयाणीति?

सिध्यन्ति च प्रमेयैर्यदि प्रमाणानि तानि तैरेव।
साध्यानि च प्रमेयैस्तानि कथं साधयिष्यन्ति ॥ ४९ ॥

यदि च प्रमेयैः प्रमाणानि सिध्यन्ति, तानि च प्रमेयाणि तैरेव प्रमाणैः साधयितव्यानीति, ननु असिद्धेषु प्रमाणेषु कारणस्यासिद्धत्वादसिद्धानि कथं साधयिष्यन्ति प्रमाणानि?

पित्रा यद्युत्पाद्यः पुत्रो यदि तेन चैव पुत्रेण।
उत्पाद्यः स यदि पिता वद तत्रोत्पादयति कः कम् ॥ ५० ॥

यद् यथापि नाम कश्चित् ब्रूयात्–पित्रा पुत्र उत्पादनीयः, स च पिता पुत्रेणोत्पादनीय इति, तत्रेदानीं ब्रूहि केन क उत्पादयितव्यः? तथैव खलु भवान् ब्रवीति–प्रमाणैः प्रमेयाणि साधयितव्यानि, तान्येव च पुनः प्रमाणानि तैः प्रमेयैः। तत्रेदानीं ते कतमैः कतमानि साधयितव्यानि?

कश्च पिता कः पुत्रस्तत्र त्वं ब्रूहि तावुभावपि च।
पितापुत्रलक्षणधरौ यतो नः पुत्रसंदेहः ॥ ५१ ॥

तयोश्च पूर्वोपदिष्टयोः पितापुत्रयोः वद कतरः पुत्रः, कतरः पिता? उभावपि तावुत्पादकत्वात् पितृलक्षणधरौ, उत्पाद्यत्वाच्च पुत्रलक्षणधरौ। अत्र नः संदेहो भवति–कतरस्तत्र पिता, कतरस्तत्र पुत्र इति। एवमेव यान्येतानि भवतः प्रमाणप्रमेयाणि, तेषु तत्र कतराणि प्रमाणानि, कतराणि प्रमेयाणि? उभयान्यपि ह्येतानि साधनत्वात् प्रमाणानि तानि प्रमेयाणि, साध्यत्वात् प्रमेयाणीति। अत्र नः संदेहो भवति–कतराण्यत्र प्रमाणानि, कतराणि प्रमेयाणीति?

नैव स्वतःप्रसिद्धिर्न परस्परतः प्रमाणैर्वा।
भवति न च प्रमेयैर्न चाप्यकस्मात् प्रमाणानाम् ॥ ५२ ॥

–न स्वतःप्रसिद्धिः प्रत्यक्षस्य तेनैव प्रत्यक्षेण। अनुमानस्य तेनैवानुमानेन। उपमानस्य तेनैवोपमानेन। आगमस्य तेनैवागमेन। नापि परस्परतः। प्रत्यक्षस्यानुमानोपमानागमैः, अनुमानस्य प्रत्यक्षोपमानागमैः, उपमानस्य प्रत्यक्षानुमानागमैः, आगमस्य प्रत्यक्षानुमानोपमानैः। नापि प्रत्यक्षानुमानोपमानागमादन्यैः प्रत्यक्षानुमानोपमानागमैर्यथास्वम्, नापि प्रमेयैः समस्तव्यस्तैः स्वविषय-

परविषयतागृहीतैः, नाप्यकस्मात्, नास्ति समुच्चयेन। एतेषां कारणानां पूर्वोद्दिष्टानां विंशत्त्रिंशच्चत्वारिंशत् षड् विंशतिर्वा॥

तत्र यदुक्तम्—प्रमाणाधिगम्यत्वात् प्रमेयाणां भावानां सन्ति तु प्रमेया भावाः, तानि च प्रमाणानि यैस्तु प्रमाणैः प्रमेया भावाः सन्तश्च भावाः समधिगता इति, तन्न॥

यत् पुनर्भवतोक्तम्—

कुशलानां धर्माणां धर्मावस्थाविदश्च मन्यन्ते।
कुशलं जनस्वभावं शेषेष्वप्येष विनियोगः॥ इति,

अत्र ब्रूमः—

**कुशलानां धर्माणां धर्मावस्थाविदो ब्रुवते यत्।**
**कुशलस्वभावमेवं प्रविभागेनाभिधेयः स्यात्॥ ५३॥**

कुशलानां धर्माणां धर्मावस्थाविदः कुशलं जनस्वभावं मन्यन्ते। स च भवतां प्रविभागेनोपदेष्टव्यः स्यात्—अयं स कुशलः स्वभावः, इमे ते कुशला धर्मा इति। इदं तत् कुशलं विज्ञानम्, अयं कुशलविज्ञानस्वभावः, एवं सर्वेषाम्। न चैतदेवं दृष्टम्। तस्माद् यदुक्तम्—उपदिष्टः स्वभावो धर्माणामिति, तन्न॥

किं चान्यत्—

**यदि च प्रतीत्य कुशलः स्वभाव उत्पद्यते स कुशलानाम्।**
**धर्माणां परभावः स्वभाव एवं कथं भवति॥ ५४॥**

यदि च कुशलानां धर्माणां स्वभावो हेतुप्रत्ययसामग्रीं प्रतीत्योत्पद्यते, स परभावादुत्पन्नः कुशलानां धर्माणां कथं स्वभावो भवति? एवमेवाकुशलप्रभृतीनाम्॥

तत्र यदुक्तम्—कुशलाव्याकृतानां न कुशलानां धर्माणां कुशलः स्वभाव उपदिष्टः, एवमकुशलानामकुशलादिरिति, तन्न। किं चान्यत्—

**अथ न प्रतीत्य किंचित् स्वभाव उत्पद्यते स कुशलानाम्।**
**धर्माणामेवं स्याद् वासो न ब्रह्मचर्यस्य॥ ५५॥**

अथ मन्यसे—न किंचित् प्रतीत्य कुशलानां धर्माणां कुशलस्वभाव उत्पद्यते, एवमकुशलाना धर्माणामकुशलः, अव्याकृतानामव्याकृत इति, एवं सति ब्रह्मचर्यवासो [न] भवति। किं कारणम्? प्रतीत्यसमुत्पादस्य हि एवं सति प्रत्याख्यानं भवति। प्रतीत्यसमुत्पादस्य प्रत्याख्यानात् प्रतीत्यसमुत्पाददर्शनं प्रत्याख्यातं भवति। न ह्यविद्यमानस्य प्रतीत्यसमुत्पादस्य दर्शनमुपपद्यमानं भवति। असति प्रतीत्यसमुत्पाददर्शने धर्मदर्शनं न भवति। उक्तं हि भगवता "यो हि भिक्षवः प्रतीत्यसमुत्पादं पश्यति, स धर्मं पश्यति"। धर्मदर्शनाभावात् ब्रह्मचर्यवासाभावः। अथवा। प्रतीत्यसमुत्पादप्रत्याख्यानात् दुःखसमुदयप्रत्याख्यानं भवति। प्रतीत्यसमुत्पादो हि दुःखस्य समुदयः। दुःखसमुदयस्य प्रत्याख्यानात् दुःखप्रत्याख्यानं भवति। असति हि समुदये तत् कुतो दुःखं समुदेष्यति? दुःखसमुदयप्रत्याख्यानाच्च दुःखनिरोधस्य प्रत्याख्यानम्। असति हि दुःखसमुदये कस्य

प्रहाणात् निरोधो भविष्यति? असति हि दुःखनिरोधे कस्य प्राप्तये मार्गो भविष्यति दुःखनिरोध-गामी? एवं चतुर्णामार्यसत्यानामभावाच्छ्रामण्यफलाभावः। सत्यदर्शनादिश्रामण्यफलानि [न] अधिगम्यन्ते। श्रामण्यफलानामभावादब्रह्मचर्यवास इति॥

किं चान्यत्—

**नाधर्मो धर्मो वा संव्यवहाराश्च लौकिका न स्युः।**
**नित्याश्च सर्वभावाः स्युर्नित्यत्वादहेतुमतः॥ ५६॥**

एवं सति प्रतीत्यसमुत्पादं प्रत्याचक्षाणस्य भवतः को दोषः प्रसज्यते? धर्मो न भवति, अधर्मो न भवति। संव्यवहाराश्च लौकिका न संभवन्ति। किं कारणम्? प्रतीत्यसमुत्पन्नं ह्येतत् सर्वम्, असति प्रतीत्यसमुत्पादे कुतो भविष्यति? अपि च। स स्वभावोऽप्रतीत्यसमुत्पन्नो निर्हेतुको नित्यः स्यात्। किं कारणम? निर्हेतुका हि भावा नित्याः। तत्र स एव च अब्रह्मचर्यवासः प्रसज्येत स्वसिद्धान्तविरोधः। किं कारणम्? अनित्या हि भगवंता सर्वे संस्कारा निर्दिष्टाः। ते स्वभाव-नित्यत्वात् नित्या हि भवन्ति॥

**एष चाकुशलेष्वव्याकृतेषु नैर्याणादिषु च दोषः।**
**तस्मात् सर्वं संस्कृतमसंस्कृतं ते भवत्येवम्॥ ५७॥**

यश्चैव कुशलेषु निर्दिष्टः कल्पः, स एवाकुशलेषु, स एवाव्याकृतेषु, स एव नैर्याणिक-प्रभृतिषु दोषः। तस्मात् ते सर्वमिदं संस्कृतमसंस्कृतं संपद्यते। किं कारणम्? हेतौ ह्यसति उत्पादस्थितिभङ्गा न भवन्ति। उत्पादस्थितिभङ्गेष्वसत्सु संस्कृतलक्षणाभावात् सर्वं संस्कृतमसंस्कृतं संपद्यते॥

तत्र यदुक्तम्—कुशलादीनां भावानां स्वभावसद्भावादशून्याः सर्वभावा इति, तन्न। यत्पुनर्भवतोक्तम्—

यदि च न भवेत् स्वभावो भावानां न स्वभाव इत्येवम्।
नामापि भवेदेवं नाम हि निर्वस्तुकं नास्ति॥ इति,

अत्रोच्यते—

**यः सद्भूतं नाम ब्रूयात् स स्वभाव इत्येवम्।**
**भवता प्रतिवक्तव्यो नाम ब्रूमश्च न वयं सत्॥ ५८॥**

यो नाम सद्भूतं नाम ब्रूयात् स स्वभाव इति, स भवता प्रतिवक्तव्यः स्यात्—यस्य सद्भूतनामस्वभावस्य तस्मात् तेनापि स्वभावेन सद्भूतेन भवितव्यम्। न ह्यसद्भूतस्य स्वभावस्य सद्भूतं नाम भवतीति। न पुनर्वयं नाम सद्भूतं ब्रूमः। तदपि हि स्वभावस्याभावान्नाम निःस्वभाव-त्वात् शून्यम्, शून्यत्वादसद्भूतम्॥

तत्र यद् भवतोक्तम्—नामसद्भावात् सद्भूतः स्वभाव इति, तन्न। किं चान्यत्—

**नामासदिति च यदिदं तत्किं नु सतो भवत्युतासतः।**
**यदि हि सतो यद्यसतो द्विधापि ते हीयते वादः॥ ५९॥**

यच्चैतन्नामासदिति, तत्किं [ नाम ] सतः असतः? यदि हि सतस्तन्नाम, यद्यसतः, उभयथापि प्रतिज्ञा हीयते। तत्र यदि तावत् सत् असदिति नास्तीति प्रतिज्ञा हीयते। न हीदानीं तदसदिदानीं सत्। अथासत् असदिति नाम या प्रतिज्ञा असद्भूतस्य नाम न भवति अस्तित्वस्वभाव इति, तस्मात् सद्भूतः स्वभाव इति, सा हीना॥

किं चान्यत्—

**सर्वेषां भावानां शून्यत्वं चोपपादितं पूर्वम्।**
**स उपालम्भस्तस्माद् भवत्ययं च प्रतिज्ञायाः॥ ६०॥**

इह च अस्माभिः पूर्वमेव सर्वेषां भावानां विस्तरतः शून्यत्वमुपपादितम्। तत्र प्राग् नाम्नोऽपि शून्यत्वमुक्तम्। संभवं अशून्यत्वं परिगृह्य परिवृत्तो वक्तुम्—यदि भावानां स्वभावो न स्यात्, अस्वभाव इति नामापि इदं न स्यादिति। तस्मात् प्रतिज्ञोपलम्भोऽयं भवतः संपद्यते। न हि वयं नाम सद्भूतमिति ब्रूमः॥

यत्पुनर्भवतोक्तम्—

अथ विद्यते स्वभावः स च धर्माणां न विद्यते तस्मात्।
धर्मैर्विना स्वभावः स यस्य तद्युक्तमुपदेष्टुम्॥ इति,

अत्रोच्यते—

**अथ विद्यते स्वभावः स च धर्माणां न विद्यत इति।**
**इदमाशङ्कितं यदुक्तं भवत्यनाशङ्कितं तच्च॥ ६१॥**

न हि वयं धर्माणां स्वभावं प्रतिषेधयामः, धर्मविनिर्मुक्तस्य वा कस्यचिदर्थस्य स्वभावमभ्युपगच्छामः। नन्वेवं सति य उपालम्भो भवतः—यदि धर्मा निःस्वभावाः, कस्य खल्विदानीमन्यस्यार्थस्य धर्मविनिर्मुक्तस्य स्वभावो भवति? सयुक्तमेवोपदिष्टमिति दूरापकृष्टमेवैतद्भवति॥

यत् पुनर्भवतोक्तम्—

सत एव प्रतिषेधो नास्ति घटो गेह इत्ययं यस्मात्।
दृष्टः प्रतिषेधोऽयं सतः स्वभावस्य ते तस्मात्॥ इति,

अत्र ब्रूमः—

**सत एव प्रतिषेधो यदि शून्यत्वं नन्वप्रतिषिद्धमिदम्।**
**प्रतिषेधयते हि भवान् भावानां निःस्वभावत्वम्॥ ६२॥**

यदि सत एव प्रतिषेधो भवति नासतः, सर्वभावानां निःस्वभावत्वं प्रतिषेधयति [ भवान् ]। ननु प्रतिषिद्धं सर्वभावानां निःस्वभावत्वं त्वद्वचनेन। प्रतिषेधयसि त्वं सद्भावान्। निःस्वभावत्वस्य च सर्वभावानां प्रतिषिद्धत्वात् प्रतिषिद्धा शून्यतेति॥

**प्रतिषेधयसेऽथ त्वं शून्यत्वं तच्च नास्ति शून्यत्वम्।**
**प्रतिषेधः सत इति ते नन्वेवं हीयते वादः॥ ६३॥**

अथ शून्यत्वं प्रतिषेधयसि त्वं सर्वभावानाम्, निःस्वभावत्वं शून्यत्वम्, नास्ति तच्च शून्यत्वम्, या तर्हि ते प्रतिज्ञा सतः प्रतिषेधो भवति नासत इति, सा हीना॥

किं चान्यत्—

**प्रतिषेधयामि नाहं किंचित् प्रतिषेध्यमस्ति न च किंचित्।**
**तस्मात् प्रतिषेधयसीत्यधिलय एव त्वया क्रियते ॥ ६४ ॥**

एवमपि तु कृत्वा यद्यहं किंचित् प्रतिषेधयामि, ततो युक्तमेव वक्तुं स्यात्। न चैवाहं किंचित् प्रतिषेधयामि। तस्मान्न किंचित् प्रतिषेद्धव्यमस्ति। तस्मात् शून्येषु सर्वभावेषु अविद्यमाने प्रतिषेध्ये प्रतिषेधे च प्रतिषेधयसीत्येष त्वयात्र सद्भूतोऽधिलयः क्रियत इति ॥

यत् पुनर्भवतोक्तम्—

अथ नास्ति स स्वभाव किं नु प्रतिषिध्यते त्वयानेन।
वचनेनर्ते वचनात् प्रतिषेधः सिध्यते ह्यसतः ॥ इति,

अत्र ब्रूमः—

**यच्चाहं ते वचनादसतः प्रतिषेधवचनसिद्धिरिति।**
**अत्र ज्ञापयते वागसदिति तन्न प्रतिनिहन्ति ॥ ६५ ॥**

यच्च भवान् ब्रवीति—सतोऽपि वचनादसतः प्रतिषेधः प्रतिषिद्धः, तत्र किं निःस्वभावाः सर्वभावा इति, एतद्वचनं करोतीति? अत्र ब्रूमः—निःस्वभावाः सर्वभावा इति एतत् खलु वचनं न निःस्वभावान् सर्वभावान् करोति। किं त्वसत्स्वभावो भावानामसत्स्वभावानामिति ज्ञापयति। तत्र कश्चिद् ब्रूयात्—अविद्यमानगृहे देवदत्तगृहे देवदत्त इति, तत्रैवं कश्चित् प्रतिब्रूयात्—[देवदत्तो गेहे] नास्तीति, न तद्वचनं देवदत्तस्याभावं करोति, न देवदत्तस्य संभवं करोति। किं तु ज्ञापयति केवलमसद्भावं गृहे देवदत्तस्येति। तद्वत् नास्ति स्वभावो भावानामित्येतद्वचनं न स्वभावानां निःस्वभावत्वं करोति, भावेषु स्वभावस्याभावं ज्ञापयति ॥

तत्र यद्भवतोक्तम्—किमसति स्वभावे नास्ति स्वभाव इत्येतद् वचनं करोति, तेऽपि वचनात् प्रसिद्धिः स्वभावस्याभाव इति, तत् ते न युक्तम्।

यदुक्तम्—

बालानामिव मृगतृष्णायां स यथा जलग्राहः।
एवं मिथ्याग्राहः स्यात् ते प्रसिध्यते ह्यसतः॥

यत् पुनर्भवतो मृगतृष्णायामित्यत्र ब्रूमः—

**मृगतृष्णादृष्टान्ते यः पुनरुक्तः त्वया महांश्चचः।**
**तत्रापि निर्णयं शृणु यथा स दृष्टान्त उपपन्नः ॥ ६६ ॥**

य एव त्वया मृगतृष्णादृष्टान्ते महांश्चर्च उक्तः, तत्रापि यो निर्णयः, स श्रूयताम्। उपपन्न एव दृष्टान्तो भवति ॥

**स यदि स्वभावतः स्यात् भावो न स्यात् प्रतीत्यसमुद्भूतः।**
**यश्च प्रतीत्य भवति ग्राहो ननु शून्यता सैव ॥ ६७ ॥**

यदि च मृगतृष्णायां स यथा जलग्राहः स्वभावतः स्यात्, न स्यात् प्रतीत्यसमुत्पन्नः। यतो मृगतृष्णां च प्रतीत्य विपरीतं च दर्शनं प्रतीत्य [अ]योनिशोमनस्कारं च प्रतीत्य स्याद्भूतः।

अतः प्रतीत्यसमुत्पन्नः । यतश्च प्रतीत्यसमुत्पन्नः, अतः स्वभावतः शून्य एव । यथा पूर्वमुक्तं तथा ॥

किं चान्यत्—

**यदि च स्वभावतः स्याद् ग्राहः कस्तं निवर्तयेद् ग्राह्यम् ।**
**शेषेष्वप्येष विधिस्तस्माद् दोषोऽनुपालम्भः ॥ ६८ ॥**

यदि च मृगतृष्णायां जलग्राहः स्वभावतः स्यात्, क एव तं विनिवर्तयेत् ? न हि स्वभावः शक्यो निवर्तयितुम् । तद्यथा अग्नेरुष्णत्वम्, अपां द्रवत्वम्, आकाशस्य निरावरणत्वम् । दृष्टं चास्य विनिवर्तनम् । तस्माच्छून्यस्वभावः ग्राह्यः । यदा चैतदेवम्, शेषेष्वपि धर्मेष्वेवं क्रमः प्रत्यवगन्तव्यो ग्राह्यप्रवृत्तिषु ॥

तत्र यद् भवतोक्तम्—षड्लक्षणभावादशून्याः सर्वभावा इति, तन्न । यत्पुनर्भवतोक्तम्—

हेतोश्च तेन सिद्धिर्नैःस्वाभाव्यात् कुतो हि ते हेतुः ।
निर्हेतुकस्य सिद्धिर्न चोपपन्नास्य तेऽर्थस्य ॥ इति,

अत्र ब्रूमः—

**एतेन हेत्वभावः प्रत्युक्तः पूर्वमेव स समत्वात् ।**
**मृगतृष्णादृष्टान्तव्यावृत्तिविधौ य उक्तः प्राक् ॥ ६९ ॥**

यत्पुनर्भवतोक्तम्—

पूर्वं चेत् प्रतिषेधः पश्चात् प्रतिषेध्यमित्यनुपपन्नम् ।
पश्चाच्चानुपपन्नो युगपच्च यतः स्वभावोऽसन् ॥ इति,

अत्र ब्रूमः—

**यस्त्रैकाल्ये हेतुः प्रत्युक्तः पूर्वमेव स समत्वात् ।**
**त्रैकाल्यप्रतिहेतुश्च शून्यतावादिनां प्राप्तः ॥ ७० ॥**

य एष हेतुः त्रैकाल्ये प्रतिषेधवाची स तु उक्तोत्तरः प्रत्यवमतः । कस्मात् ? साध्यसमत्वात् । यथा हि प्रतिषेधस्त्रैकाल्ये नोपपन्नः, स प्रतिषेधस्त्रैकाल्ये नोपपन्नः, स प्रतिषेधप्रतिषेधेऽपि । तस्मात् प्रतिषेधप्रतिषेध्येंऽसति [ यद् ] भवान् मन्यते—प्रतिषेधः प्रति( षिद्ध ) इति, तन्न । यतश्चैष त्रिकालप्रतिषेधवाची हेतुः, एष एव शून्यतावादिनां प्राप्तः सर्वभावस्वभावप्रतिषेधकत्वान्न भवतः ॥

अथवा कथमेतदुक्तोत्तरम्—

प्रतिषेधयामि नाहं किंचित् प्रतिषेध्यमस्ति न च किंचित् ।
तस्मात् प्रतिषेधयसीत्यधिलय एष त्वया क्रियते ॥ इति,

प्रतिषेधः सिद्धः [ अथ मन्यसे—त्रिष्वपि कालेषु दृष्टः पूर्वकालीनोऽपि हेतुः, उत्तरकालीनोऽपि । युगपत्कालीनोऽपि हेतुः । कथं पूर्वकालीनः ? यथा पिता पुत्रस्य त्वद्वचनेन पश्चात्कालीनः । यथा शिष्य आचार्यस्यायुगपत्कालीनः, यथा प्रदीपः प्रकाशस्येति ॥

अत्र ब्रूमः—न चैतदेव । युक्ता ह्येतस्मिन् त्रयः पूर्वदोषाः । अपि च पुनः यद्येवं क्रमः, प्रतिषेधसद्भावत्वे योऽभ्युपगम्यते, प्रतिज्ञाहानिश्च ते भवति । एतेन क्रमेण स्वभावप्रतिषेधोऽपि सिद्धः ॥

प्रभवति च शून्यतेयं यस्य प्रभवन्ति तस्य सर्वार्थाः।
प्रभवति न तस्य किं न भवति शून्यता यस्येति ॥ ७१ ॥

यस्य शून्यतेयं प्रभवति, तस्य सर्वार्थाः लौकिकलोकोत्तराः प्रभवन्ति। किं कारणम्? यस्य हि शून्यता प्रभवति, तस्य प्रतीत्यसमुत्पादः प्रभवति। यस्य प्रतीयसमुत्पादः प्रभवति, तस्य चत्वार्यार्यसत्यानि प्रभवन्ति। यस्य चत्वार्यार्यसत्यानि, [तस्य] श्रामण्यफलानि भवन्ति। सर्वविशेषाधिगमाः प्रभवन्ति। यस्य सर्वविशेषाधिगमाः प्रभवन्ति, तस्य त्रीणि रत्नानि बुद्धधर्मसंघाः प्रभवन्ति। यस्य प्रतीत्यसमुत्पादः प्रभवति, तस्य धर्मो धर्महेतुर्धर्मफलं च प्रभवति। तस्याधर्मोऽधर्म-हेतुरधर्मफलं च प्रभवति। तस्य क्लेशः क्लेशसमुदयः क्लेशवस्तुनो (वस्तूनि?) च प्रभवन्ति। यस्यैतत् सर्वं भवति पूर्वोक्तम्, तस्य सुगतिदुर्गतिव्यवस्थासु गतिदुर्गतिगमनम्। सुगतिदुर्गतिगामी मार्गः। सुगतिदुर्गतिगमनव्यतिक्रमणम्, सुगतिदुर्गतिव्यतिक्रमोपायः, सर्वसंव्यवहाराश्च लौकिकाः स्वयमधिगन्तव्याः। अनया दिशा किंचित् शक्यं वचनमुपदेष्टुमिति। भवति चात्र—

यः शून्यतां प्रतीत्यसमुत्पादं मध्यमां प्रतिपदमनेकार्थाम्।
निजगाद प्रणमामि तमप्रतिमसंबुद्धम् ॥ ७२ ॥ इति ॥

कृतिरियमाचार्यनागार्जुनपादानाम् ॥

# षष्ठं परिशिष्टम् ।

## आर्य-नागार्जुनविरचिता

# र त्ना व ली ।

[ This Appendix contains the available portion of the text of *Ratnāvalī* or *Ratnamālā* which seems to me a genuine work of Nāgārjuna. The work is attributed to Nāgārjuna by Candrakīrti, who, in his commentary on MŚ. cites as many as 23 stanzas from the available portion of this work. One stanza from this text is identical with MŚ. 3. 7. This available portion was edited by Dr. G. Tucci and published by him in JRAS, London, 1934, 1936. He promised to restore into Sanskrit the missing portion from its Tibetan translation, but so far I have not seen it.

In Tohoku Catalogue No. 4158 the work is called राजपरिकथा-रत्नमाला. It has also a Commentary by Ajitamitra ( T 4159 ).

The *Ratnāvalī* or *Ratnamālā* is a work belonging to the class of *Lekhas* like *Suhṛllekha* attributed to Nāgārjuna or *Śiṣyalekha* of Candragomin. The work is addressed to a king, who, according to Commentator, is Sātavāhana. On the other hand, it is said that *Suhṛllekha* is addresed to king Kaniṣka. Jayaswal thinks him to be Gautamiputra Yajñaśrī who reigned between 166–199 A. D. We find several references, e. g., in 1. 2, to a king to whom the work is addressed. The fourth chapter is called राजवृत्तोपदेश. ]

॥ नमो रत्नत्रयाय ॥

सर्वदोषविनिर्मुक्तं गुणैः सर्वैरलंकृतम् ।
प्रणम्य सर्वज्ञमहं सर्वसत्त्वैकबान्धवम् ॥ १ ॥

धर्ममेकान्तकल्याणं राज[ न् ध ]र्मोदयाय ते ।
वक्ष्यामि धर्मः सिद्धिं हि याति सद्धर्मभाजने ॥ २ ॥

प्राग्धर्माभ्युदयो यत्र पश्चान्नैःश्रेयसोदयः ।
संप्राप्याभ्युदयं यस्मादेति नैःश्रेयसं क्रमात् ॥ ३ ॥

सुखमभ्युदय[ स्तत्र मोक्षो ] नैःश्रेयसो मतः ।
अस्य साधनसंक्षेपः श्रद्धाप्रज्ञे समासतः ॥ ४ ॥

श्राद्धत्वाद्भजते धर्मं प्राज्ञत्वाद्वेत्ति तत्त्वतः ।
प्रज्ञा प्रधानं त्वनयोः श्रद्धा पूर्वंगमास्य तु ॥ ५ ॥

छन्दाद् द्वेषाद्भयान्मोहाद्यो धर्मं नातिवर्तते ।
स श्राद्ध इति विज्ञेयः श्रेयसो भाजनं परम् ॥ ६ ॥

कायवाङ्मानसं कर्म सर्वं सम्यक्परीक्ष्य यः ।
परात्महितमाज्ञाय सदा कुर्यात्स पण्डितः ॥ ७ ॥

अहिंसा चौर्यविरतिः परदारविवर्जनम्।
मिथ्यापैशुन्यपारुष्याबद्धवादेषु संयमः॥ ८॥
लोभव्यापादनास्तिक्यदृष्टीनां परिवर्जनम्।
एते कर्मपथाः शुक्ला दश कृष्णा विपर्ययात्॥ ९॥
अमद्यपानं स्वाजीवोऽविहिंसा दानमादरात्।
पूज्यपूजा च मैत्री च धर्मश्चैष समासतः॥ १०॥
शरीरतापनाद्धर्मः केवला( न्नास्ति तेन हि )।
न परद्रोहविरतिर्न परेषामनुग्रहः॥ ११॥
दानशीलक्षमास्पष्टं यः सद्धर्ममहापथम्।
अनादृत्य व्रजेत् कायक्लेशगो दण्डकोत्पथैः॥ १२॥
स संसाराटवीं घोरामनन्तजनपादपाम्।
क्लेशव्यालवलीढाङ्गः सुदीर्घं प्रतिपद्यते॥ १३॥
हिंसया जायतेऽल्पायुः बह्वाबाधो विहिंसया।
चौर्येण भोगव्यसनी सश( त्रः ) पारदारिकः॥ १४॥
प्रत्याख्यानं मृषावादात् पैशुन्यान्मित्रभेदनम्।
अप्रियश्रवणं रौक्ष्यादबद्धा( दपार्था ? )दुर्भगं वचः॥ १५॥
मनोरथान् हन्त्यभिध्या व्यापादो भयदः स्मृतः।
मिथ्यादृष्टिः कुदृष्टित्वं मद्यपानं मतिभ्रमः॥ १६॥
अप्रदानेन दारिद्र्यं मिथ्याजीवेन वञ्चना।
स्तम्भेन दुष्कुलीनत्वमल्पौजस्कत्वमीर्ष्यया॥ १७॥
क्रोधाद्दुर्वर्णता मौर्ख्यमप्रश्नेन विपश्चिताम्।
फलमेतन्मनुष्यत्वे सर्वेभ्यः प्राक् च दुर्गतिः॥ १८॥
एषामकुशलाख्यानां विपाको यः प्रकीर्तितः।
कुशलानां च सर्वेषां विपरीतः फलोदयः॥ १९॥
लोभो द्वेषश्च मोहश्च तज्जं कर्मेति चाशुभम्।
अलोभामोहाद्वेषाश्च तज्जं कर्मेतरच्छुभम्॥ २०॥
अशुभात्सर्वदुःखानि सर्वदुर्गतयस्तथा।
शुभात्सुगतयः सर्वाः सर्वजन्मसुखानि च॥ २१॥
निवृत्तिरशुभात्कृत्स्नात्प्रवृत्तिस्तु शुभे सदा।
मनसा कर्मणा वाचा धर्मोऽयं द्विविधः स्मृतः॥ २२॥
नरकप्रेततिर्यग्भ्यो धर्मादस्माद्विमुच्यते।
नृषु देवेषु चाप्नोति सुखश्रीराज्यविस्तरान्॥ २३॥

ध्यानाप्रमाणारूप्यैस्तु ब्रह्माद्यसुखमश्नुते ।
इत्यभ्युदयधर्मोऽयं फलं चास्य समासतः ॥ २४ ॥
नैःश्रेयसः पुनर्धर्मः सूक्ष्मो गम्भीरदर्शनः ।
बालानां [ अश्रोत्रवताम् ] उक्तस्त्रासकरो जिनैः ॥ २५ ॥
नास्म्यहं न भविष्यामि न मेऽस्ति न भविष्यति ।
इति बालस्य संत्रासः पण्डितस्य भयक्षयः ॥ २६ ॥
अहंकारप्रसूतेयं ममकारोपसंहिता ।
प्रजा प्रजाहितैकान्तवादिनाभिहिताखिला ॥ २७ ॥
अस्त्यहं मम चास्तीति मिथ्यैतत्परमार्थिभिः ।
यथाभूतपरिज्ञानान्न भवत्युभयं यतः ॥ २८ ॥
अहंकारोद्भवाः स्कन्धाः सोऽहंकारोऽनृतोऽर्थतः ।
बीजं यस्यानृतं तस्य प्ररोहः सत्यतः कुतः ॥ २९ ॥
स्कन्धानसत्यान् दृष्ट्वैवमहंकारः प्रहीयते ।
अहंकारप्रहाणाच्च न पुनः स्कन्धसंभवः ॥ ३० ॥
यथादर्शमुपादाय ( स्वमुखप्रतिबिम्बकम् ।
दृश्य )ते नाम तच्चैवं न किंचिदपि तत्त्वतः ॥ ३१ ॥
अहंकारस्तथा स्कन्धानुपादायोपलभ्यते ।
न च कश्चित्स तत्त्वेन स्वमुखप्रतिबिम्बवत् ॥ ३२ ॥
यथादर्शमनादाय स्वमुखप्रतिबिम्बकम् ।
न दृश्यते तथा स्कन्धाननादायाहमित्यपि ॥ ३३ ॥
एवंविधार्थश्रवणाद्धर्मचक्षुरवाप्तवान् ।
आर्यानन्दः स्वयं चैव भिक्षुभ्योऽभीक्ष्णमुक्तवान् ॥ ३४ ॥
स्कन्धग्राहो यावदस्ति तावदेवाहमित्यपि ।
अहंकारे सति पुनः कर्म जन्म ततः पुनः ॥ ३५ ॥
त्रिवर्त्मैतदनाद्यन्तमध्यं संसारमण्डलम् ।
अलातमण्डलप्रख्यं भ्रमत्यन्योन्यहेतुकम् ॥ ३६ ॥
स्वपरोभयतस्तस्य त्रैकाल्यतोऽप्यप्राप्तितः ।
अहंकारः क्षयं याति ततः कर्म च जन्म च । ॥ ३७ ॥
एवं हेतुफलोत्पादं पश्यंस्तत्क्षयमेव च ।
नास्तितामस्तितां चैव नैति लोकस्य तत्त्वतः ॥ ३८ ॥

१ This stanza is cited in तत्त्वसंग्रहपञ्जिका p. 866 and बोधि. पञ्जिका p. 212. २ Cited in प्रसन्नपदा p. 147 and 200. ३ Stanzas 31–34 cited in प्र. पृ. p. 147.

सर्वदुःखक्षयं धर्म श्रुत्वैवमपरीक्षकः ।
संकम्पत्यपरिज्ञानादभयस्थानकातरः ॥ ३९ ॥
न भविष्यति निर्वाणे सर्वमेतन्न ते भयम् ।
उच्यमान इहाभावस्तस्य ते किं भयंकरः ॥ ४० ॥
मोक्षे नात्मा न च स्कन्धा मोक्षश्चेदीदृशः प्रियः ।
आत्मस्कन्धापनयनं किमिहैव तवाप्रियम् ॥ ४१ ॥
न चाभावोऽपि निर्वाणं कुत एव तस्य[ वास्य ] भावता ।
भावाभावपरामर्शक्षयो निर्वाणमुच्यते ॥ ४२ ॥
समासान्नास्तितादृष्टिः फलं नास्तीति कर्मणः ।
अपुण्यापायिकी चैषा मिथ्यादृष्टिरिति स्मृता ॥ ४३ ॥
समासादस्तितादृष्टिः फलं चास्तीति कर्मणाम् ।
पुण्या सुगतिनिष्यन्दा सम्यग्दृष्टिरिति स्मृता ॥ ४४ ॥
ज्ञाने नास्त्यस्तिताशान्तेः पापपुण्यव्यतिक्रमः ।
दुर्गतेः सुगतेश्चास्मात् स मोक्षः सद्भिरुच्यते ॥ ४५ ॥
सहेतुमुदयं पश्यन् नास्तितामतिवर्तते ।
अस्तितामपि नोपैति निरोधं सह हेतुना ॥ ४६ ॥
प्राग्जातः सहजातश्च हेतुरहेतुकोऽर्थतः ।
प्रज्ञप्तेरप्रतीतत्वादुत्पत्तेश्चैव तत्त्वतः ॥ ४७ ॥
अस्मिन् सतीदं भवति दीर्घे ह्रस्वं यथा सति ।
[ तस्योत्पादादुदेतीदं दीपोत्पादाद्यथा ] प्रभा ॥ ४८ ॥
ह्रस्वेऽसति पुनर्दीर्घं न भवति स्वभावतः ।
प्रदीपस्याप्यनुत्पादात्प्रभाया अप्यसंभवः ॥ ४९ ॥
एवं हेतुफलोत्पादं दृष्ट्वा नोपैति नास्तिक्यम् ( नास्तिताम् ) ।
अभ्युपेत्यास्य लोकस्य याथाभूत्यं प्रपञ्चजम् ॥ ५० ॥
निरोधं च प्रपञ्चोत्थं याथाभूत्यादुपागतः ।
नोपयात्यस्तितां तस्मान्मुच्यतेऽद्वयनिश्रितः ॥ ५१ ॥
दूरादालोकितं रूपमासन्नैर्दृश्यते स्फुटम् ।
मरीचिर्यदि वारि स्यादासन्नैः किं न दृश्यते ॥ ५२ ॥
दूरीभूतैर्यथाभूतो लोकोऽयं दृश्यते तथा ।
न दृश्यते तदासन्नैरनिमित्तो मरीचिवत् ॥ ५३ ॥
[ मरीचिस्तोयसदृशी यथा नाम्बु न ] चार्थतः ।
स्कन्धास्तथात्मसदृशा नात्मानो नापि तेऽर्थतः ॥ ५४ ॥

१ Cited in प्र. प. p. 229. २ Cited in प्र. प. p. 3. ३. Stanzas 52-53 cited in प्र. प. p. 148.

मरीचिं तोयमित्येतदिति मत्वागतोऽत्र सन्।
यदि नास्तीति तत्तोयं [ गृह्णीयान्मूढ एव सः ] ॥ ५५ ॥
मरीचिप्रतिमं लोकमेवमस्तीति गृह्णतः।
नास्तीति चापि मोहोऽयं सति मोहे न मुच्यते ॥ ५६ ॥
नास्तिको दुर्गतिं याति सुगतिं याति चास्तिकः।
यथाभूतपरिज्ञानान्मोक्षमद्वयनिश्रितः ॥ ५७ ॥
अनिच्छन् नास्तितास्तित्वे यथाभूतपरिज्ञया।
नास्तितां लभते मोहात् कस्मान्न लभतेऽस्तिताम् ॥ ५८ ॥
स्यादस्तिदूषणादस्य नास्तिताक्षिप्यतेऽर्थतः।
नास्तितादूषणादेव कस्मान्नाक्षिप्यतेऽस्तिता ॥ ५९ ॥
न प्रतिज्ञा न चरितं न चित्तं बोधिनिश्रयात्।
नास्तिकत्वेऽर्थतो येषां कथं ते नास्तिकाः स्मृताः ॥ ६० ॥
ससांख्यौलूक्यनिर्ग्रन्थपुद्गलस्कन्धवादिनम्।
पृच्छ लोकं यदि वदत्यस्तिनास्तिव्यतिक्रमम् ॥ ६१ ॥
धर्मयौतकमित्यस्मान्नास्त्यस्तित्वव्यतिक्रमम्।
विद्धि गम्भीरमित्युक्तं बुद्धानां शासनामृतम् ॥ ६२ ॥
विभवं नति नायाति न तिष्ठत्यपि च क्षणम्।
त्रैकाल्यव्यतिवृत्तात्मा लोक एवं कुतोऽर्थतः ॥ ६३ ॥
द्वयोरप्यागतिगती प्रस्थितिश्च न तत्त्वतः।
लोकनिर्वाणयोस्तस्माद्विशेषः क इवार्थतः ॥ ६४ ॥
स्थितेरभावादुदयो निरोधश्च न तत्त्वतः।
उदितश्च स्थितश्चेति निरुद्धश्च कुतोऽर्थतः ॥ ६५ ॥
कथमक्षणिको भावः परिणामः सदा यदि।
नास्ति चेत्परिणामः स्यादन्यथात्वं कुतोऽर्थतः ॥ ६६ ॥
एकदेशे क्षयाद्वा स्यात् क्षणिकं सर्वशोऽपि वा।
वैषम्यानुपलब्धेश्च द्विधाप्येतदयुक्तिमत् ॥ ६७ ॥
क्षणिके सर्वथाऽभावे कुतः काचित्पुराणता।
स्थैर्यादक्षणिके चापि कुतः काचित्पुराणता ॥ ६८ ॥
यथान्तोऽस्ति क्षणस्यैवमादिर्मध्यं च कल्प्यताम्।
त्र्यात्मकत्वात् क्षणस्यैवं न लोकस्य क्षणं स्थितिः ॥ ६९ ॥
आदिमध्यावसानानि [ चिन्त्यानि क्षणवत्पुनः।
आदिमध्या ]वसानत्वं न स्वतः परतोऽपि वा ॥ ७० ॥

१. Stanzas 55–56 cited in प्र. प. p. 79. २ Stanzas 61–62 cited in प्र. प. p. 120.
३ Stanzas 68–70 cited in प्र. प. p. 239. ४ Stanzas 68–70 cited in प्र. प. p. 239.

नैकोऽनेकप्रदेशत्वान्नाप्रदेशश्च कश्चन ।
विनैकमपि नानेको नास्तित्वमपि चास्तिताम् ॥ ७१ ॥
विनाशात् प्रतिपक्षाद्वा स्यादस्तित्वस्य नास्तिता ।
विनाशः प्रतिपक्षो वा कथं स्यादस्त्यसंभवात् ॥ ७२ ॥
निर्वृतेस्तेन लोकस्य नोपैत्यूनत्वमर्थतः ।
अन्तवानिति लोकश्च पृष्टस्तूष्णीं जिनोऽभवत् ॥ ७३ ॥
सर्वज्ञ इति सर्वज्ञो बुधैस्तेनैव गम्यते ।
येनैतद्धर्मगाम्भीर्यं नोवाचाभाजने लोके ॥ ७४ ॥
इति नैःश्रेयसो धर्मो गम्भीरो निष्परिग्रहः ।
अनालय इति प्रोक्तः संबुद्धैस्तत्वदर्शिभिः ॥ ७५ ॥
अस्मादनालयाद्धर्मादालयाभिरता जनाः ।
अस्तिनास्त्यव्यतिक्रान्ता भीता नश्यन्त्यमेधसः ॥ ७६ ॥
ते नष्टा नाशयन्त्यन्यानभयस्थानभीरवः ।
तथा कुरु यथा राजन् नष्टैर्न विप्रणाश्यसे ॥ ७७ ॥

* * * * * *

२

कदली पाटिता यद्वन्निःशेषावयवैः सह ।
न किंचित्पुरुषस्तद्वत्पाटितः सह धातुभिः ॥ १ ॥
सर्वधर्मा अनात्मान इत्यतो भाषितं जिनैः ।
धातुषट्कं च तैः सर्वं निर्णीतं तच्च नार्थतः ॥ २ ॥
नैवमात्मा न चानात्मा याथाभूत्येन लभ्यते ।
आत्मानात्मकृते दृष्टी वत्रारास्मान्महामुनिः ॥ ३ ॥
दृष्टश्रुताद्यं मुनिना न सत्यं न मृषोदितम् ।
पक्षाद्धि प्रतिपक्षः स्यादुभयं तच्च नार्थतः ॥ ४ ॥
इति सत्यानृतातीतो लोकोऽयं परमार्थतः ।
अस्मादेव च तत्त्वेन नोपैत्यस्ति च नास्ति च ॥ ५ ॥
यच्चैवं सर्वथा नेति सर्वज्ञस्तत्कथं वदेत् ।
सान्तमित्यथवानन्तं द्वयं वाद्वयमेव वा ॥ ६ ॥
असंख्येया गता बुद्धास्तथैष्यन्त्यथ सांप्रताः ।
कोट्यग्रशश्च सत्त्वान्तस्तेभ्यस्त्रैकाल्यजो मतः ॥ ७ ॥
वृद्धिहेतुर्न लोकस्य क्षयस्त्रैकाल्यसंभवः ।
सर्वज्ञेन कथं तस्य पूर्वान्तोऽव्याकृतः कृतः ॥ ८ ॥

---

१ Cited by Candrakirti in प्र. प. p. 156 with यथाभूतेन for याथाभूत्येन as variant.

एतत्तु धर्मगाम्भीय यत्तदृष्टं पृथग्जने ।
मायोपमत्वं लोकस्य बुद्धानां शासनामृतम् ॥ ९ ॥
मायागजस्य दृश्येत यथा जन्मान्त एव च ।
न च कश्चित्स तत्त्वेन जन्मान्तश्चैव विद्यते ॥ १० ॥
मायोपमस्य लोकस्य तथा जन्मान्त एव च ।
दृश्यते परमार्थेन न च जन्मान्त एव च ॥ ११ ॥
यथा मायागजो नैति कुतश्चिद्याति न क्वचिद् ।
चित्तमोहनमात्रत्वाद्भावत्वेन न तिष्ठति ॥ १२ ॥
तथा मायोपमो लोको नैति याति न कुत्रचित् ।
चित्तमोहनमात्रत्वाद्भावत्वेन न तिष्ठति ॥ १३ ॥
त्रकाल्यव्यतिवृत्तात्मा लोक एवं नु कोऽर्थतः ।
योऽस्ति नास्त्यथवापि स्यादन्यत्र व्यवहारतः ॥ १४ ॥
चतुष्प्रकारमित्यस्मात् शान्तोऽनन्तो द्वयोऽद्वयः ।
बुद्धेन हेतोर्नान्यस्मादयमव्याकृतः कृतः ॥ १५ ॥
शरीराशुचिता तावत् स्थूलाप्रत्यक्षगोचरा ।
सततं दृश्यमानापि यदा चित्त न तिष्ठति ॥ १६ ॥
तदातिसूक्ष्मो गम्भीरः सद्धर्मोऽयमनालयः ।
अप्रत्यक्षः कथं चित्ते सुखेनावतरिष्यति ॥ १७ ॥
संबुध्यांस्मान्निवृत्तोऽभूद्धर्मं देशयितुं मुनिः ।
दुर्ज्ञानमतिगाम्भीर्याद् ज्ञात्वा धर्ममिमं जनैः ॥ १८ ॥
विनाशयति दुर्ज्ञातो धर्मोऽयमविपश्चितम् ।
नास्तितादृष्टिसमले यस्मादस्मिन्निमज्जति ॥ १९ ॥
अपरोऽप्यस्य दुर्ज्ञानान्मूर्खः पण्डितमानिकः ।
प्रतिक्षेपविनष्टात्मा यात्यवीचिमधोमुखः ॥ २० ॥[1]
दुर्भुक्तेन यथान्नेन विनाशमधिगच्छति ।
सुभुक्तेनायुरारोग्यं बलं सौख्यानि चाश्नुते ॥ २१ ॥
दुर्ज्ञातेन तथानेन विनाशमधिगच्छति ।
सम्यग्ज्ञातेनात्र सुखं बोधिं चाप्नोत्यनुत्तराम् ॥ २२ ॥
तस्मादत्र प्रतिक्षेपं दृष्टिं त्यक्त्वा च नास्तिकीम् ।
सम्यग्ज्ञानपरं यत्नं कुरु सर्वार्थसिद्धये ॥ २३ ॥
धर्मस्यास्यापरिज्ञानादहंकारोऽनुवर्तते ।
ततः शुभाशुभं कर्म ततो जन्म शुभाशुभम् ॥ २४ ॥

---

1 Stanzas 19 and 20 are cited in प्र. प. p. 216 with दुर्दृष्टो for दुर्ज्ञातो as variant.

तस्माद्यावदविज्ञातो धर्मोऽहंकारशातनः ।
दानशीलक्षमाधर्मे तावदादरवान् भव ॥ २५ ॥
धर्मपूर्वाणि कार्याणि धर्ममध्यानि पार्थिव ।
साधयन् धर्मनिष्ठानि नेह नामुत्र सीदति ॥ २६ ॥
धर्मात्कीर्तिः सुखं चैव नेह भीर्न मुमूर्षतः ।
परलोकसुखं स्फीतं तस्माद्धर्मं सदा भज ॥ २७ ॥
धर्म एव परा नीतिर्धर्माल्लोकोऽनुरज्यते ।
रञ्जितेन हि लोकेन नेह नामुत्र वञ्च्यते ॥ २८ ॥
अधर्मेण तु या नीतिस्तया लोकोऽपरज्यते ।
लोकापरञ्जनाच्चैव नेह नामुत्र नन्दति ॥ २९ ॥
परातिसंधानपरा कष्टा दुर्गतिपद्धतिः ।
अनर्थविद्या दुष्प्रज्ञैरर्थविद्या कथं कृता ॥ ३० ॥
परातिसंधानपरो नीतिमान् कथमर्थतः ।
येन जन्मसहस्राणि बह्वन्यात्मैव वञ्च्यते ॥ ३१ ॥
रिपोरप्रियमन्विच्छन् दोषांस्त्यक्त्वा गुणान् श्रय ।
स्वहितावाप्तिरेवं तु रिपोश्चाप्यप्रियं भवेत् ॥ ३२ ॥
दानेन प्रियवद्येन हितेनैकार्थचर्यया ।
एभिराचर लोकस्य धर्मस्यैव च संग्रहेम् ॥ ३३ ॥
विश्वासं जनयत्येकं सत्यं राज्ञां यथा दृढम् ।
तथैवाभूतमप्येषामविश्वासकरं परम् ॥ ३४ ॥
नाविसंवादवत्सत्यं [ सत्त्वे ] उद्गतमर्थतः ।
परैकान्तहितं सत्यमहितत्वान्मृषेतरत् ॥ ३५ ॥
दोषान् प्रच्छादयत्येकस्त्यागो राज्ञां यथोज्ज्वलः ।
तथा कार्पण्यमप्येषां गुणसर्वस्वघातकम् ॥ ३६ ॥
उपशान्तस्य गाम्भीर्यं गाम्भीर्याद्गौरवं परम् ।
गौरवाद्दीप्तिराज्ञा च तस्मादुपशमं भज ॥ ३७ ॥
अहार्यबुद्धिः प्राज्ञत्वादपरप्रत्ययः स्थिरः ।
नातिसंधीयते राजा तस्मात्प्रज्ञापरो भव ॥ ३८ ॥
सत्यत्यागशमप्रज्ञो चतुर्भद्रो नराधिपः ।
धर्मश्चतुर्भद्र इव स्तूयते देवमानुषैः ॥ ३९ ॥
निगृह्यवादिभिः शुद्धैः प्रज्ञाकारुण्यनिर्मलैः ।
सहासीनस्य सततं प्रज्ञा धर्मश्च वर्धते ॥ ४० ॥

दुर्लभाः पथ्यवक्तारः श्रोतारस्त्वतिदुर्लभाः ।
तेभ्योऽतिदुर्लभतमा ये पथ्यस्याशुकारिणः ॥ ४१ ॥
पथ्यमप्यप्रियं तस्माज्ज्ञात्वा शीघ्रं समाचर ।
पिबेदौषधमप्युग्रमारोग्यायात्मवानिव ॥ ४२ ॥
जीवितारोग्यराज्यानां चिन्तयानित्यतां सदा ।
ततः संवेगवान् धर्ममेकान्तेन प्रयास्यसे ॥ ४३ ॥
अवश्यं मरणं पश्यन् पापाद्दुःखं मृतस्य च ।
ऐहिकेन सुखेनापि न पापं क्षातुमर्हसि ॥ ४४ ॥
कस्मिंश्चेदभयं दृष्टं भयं दृष्टं क्वचित्क्षणे ।
यद्येकस्मिन् समाश्वासः किमेकस्मिन्न ते भयम् ॥ ४५ ॥
मद्यात्परिभवो लोके कार्यहानिर्धनक्षयः ।
अकार्यकारणं मोहात् [ मद्यं त्यज ततः सदा ] ॥ ४६ ॥

* * * * *

[ रत्नावल्यां द्वितीयः परिच्छेदः । ]

४

अधर्ममन्वाय्यमपि प्रायो राजानुजीविभिः ।
आचरन् स्तूयते तस्मात् कृच्छ्राद्वेत्ति क्षमाक्षमम् ॥ १ ॥
अन्योऽपि तावद्यः कश्चिद्दुर्वचः क्षममप्रियम् ।
किमु राजा महाभौमस्त्वं मया भिक्षुणा सता ॥ २ ॥
त्वत्कृतादेव तु स्नेहाज्जगतामनुकम्पया ।
अहमेको वदामि त्वां पथ्यमप्यप्रियं भृशम् ॥ ३ ॥
सत्यं श्लक्ष्णार्थवत्पथ्यं शिष्यः कालेऽनुकम्पया ।
वाच्य इत्याह भगवांस्तदेवमभिधीयसे ॥ ४ ॥
अक्रोधे सत्यवाक्ये च श्लाघ्यमानो यदि स्थितः ।
श्रव्यं संपरिगृह्णीयात् सत्तोयं स्नाप्यमानवत् ॥ ५ ॥
तस्य मे वदतो वाक्यं त्वमिहामुत्र च क्षमम् ।
ज्ञात्वा कुरु हितायेदमात्मनो जगतोऽपि च ॥ ६ ॥
याचकेभ्यः पुरा दानात् प्राप्यार्थांश्चेन्न दास्यसि ।
अकृतज्ञत्वलोभाभ्यां नार्थान् पुनरवाप्स्यसि ॥ ७ ॥
इह पथ्यदनं लोके न वहत्यभृतो भृतः ।
याचकस्त्वभृतोऽमुत्र हीनः शतगुणोद्वहः ॥ ८ ॥
उदारचित्तः सततं भवोदारक्रियारतः ।
उदारकर्मणः सर्वमुदारं जायते फलम् ॥ ९ ॥

मनोरथैरपि क्लीबैरनालीढं नराधिपैः ।
कुरु धर्मास्पदं श्रीमत्ख्यातं रत्नत्रयास्पदम् ॥ १० ॥
सामन्तराजरोमाञ्चकरं धर्मास्पदं न यत् ।
मृतस्याप्यप्रशस्यत्वाद् राजंस्तदकृतं वरम् ॥ ११ ॥
अत्यौदार्यादुदाराणां विस्मयोत्साहवर्धनम् ।
उत्साहघ्नं च मन्दानां सर्वस्वेनापि कारय ॥ १२ ॥
उत्सृज्यामुत्र गन्तव्यं सर्वस्वमवशेन ते ।
धर्मे नियुक्तं यात्येव पुरस्तात्सर्वमेव तत् ॥ १३ ॥
सर्वस्वं पूर्वनृपतेर्नृपस्य वशमागतम् ।
किं पूर्वकस्य धर्माय सुखाय यशसेऽपि वा ॥ १४ ॥
भुक्तादर्थादिह सुखं दत्तात्पारत्रिकं सुखम् ।
अभुक्तादत्तनष्टत्वाद्दुःखमेव कुतः सुखम् ॥ १५ ॥
विनश्यन् सचिवैर्दातुमस्वातन्त्र्यान्न शक्ष्यसि ।
आपतिच्छेदनिःस्नेहैर्नवराजप्रियैषिभिः ॥ १६ ॥
सर्वस्वेनाप्यतः स्वस्थः शीघ्रं धर्मास्पदं कुरु ।
मृत्युप्रत्ययमध्यस्थः प्रवातस्थप्रदीपवत् ॥ १७ ॥
धर्माधिकारा ये चान्ये पूर्वराजप्रवर्तिताः ।
देवद्रोण्यादयस्तेऽपि प्रवर्त्यन्तां यथास्थिताः ॥ १८ ॥
अहिंसकैः शुभाचारैर्व्रतस्थैरतिथिप्रियैः ।
सर्वक्षमैरकलहैर्भज्येरंस्तैः सदो( द्य )तैः ॥ १९ ॥
अन्धव्याधितहीनाङ्गदीनानाथवनीपकाः ।
तेऽप्यन्नपानं साम्येन लभेरन्नविघट्टिताः ॥ २० ॥
अनर्थानामपि सतां धार्मिकाणामनुग्रहान् ।
अप्यन्यराज्यसंस्थानामनुरूपान् प्रवर्तय ॥ २१ ॥
सर्वधर्माधिकारेषु धर्माधिकृतमुत्थितम् ।
अलुब्धं पण्डितं धर्म्यं कुरु तेषामबाधकम् ॥ २२ ॥
नीतिज्ञान् धार्मिकान् स्निग्धान् शुचीन् भक्तानकातरान् ।
कुलीनान् शीलसंपन्नान् कृतज्ञान् सचिवान् कुरु ॥ २३ ॥
अक्षुद्रांस्त्यागिनः शूरान् स्निग्धान् संभोगिनः स्थिरान् ।
कुरु नित्याप्रमत्तांश्च धार्मिकान् दण्डनायकान् ॥ २४ ॥
धर्मशीलान् शुचीन् दक्षान् कार्यज्ञान् शास्त्रकोविदान् ।
कृतवृत्तीन् समान् स्निग्धान् वृद्धानधिकृतान् कुरु ॥ २५ ॥

प्रतिमासं च तेभ्यस्त्वं सर्वमायव्ययं शृणु ।
श्रुत्वा धर्माधिकाराद्यं कार्यं सर्वं स्वयं वद ॥ २६ ॥
धर्मार्थं यदि ते राज्यं न कीर्त्यर्थं न कामतः ।
ततः सफलमत्यर्थमनर्थार्थमतोऽन्यथा ॥ २७ ॥
परस्परामिषीभूते लोकेऽस्मिन् प्रायशो नृप ।
यथा राज्यं च धर्मश्च भवेत्तव तथा शृणु ॥ २८ ॥
ज्ञानवृद्धाः कुले जाता न्यायज्ञाः पापभीरवः ।
समेता बहवो नित्यं सन्तु ते कार्यदर्शिनः ॥ २९ ॥
दण्डबन्धप्रहारादीन् कुर्युस्ते न्यायतोऽपि चेत् ।
कारुण्यार्द्रः सदा भूत्वा त्वमनुग्रहवान् भव ॥ ३० ॥
हितायैव त्वया चित्तमुत्नाम्यं सर्वदेहिनाम् ।
कारुण्यात्सततं राजंस्तीव्रपापकृतामपि ॥ ३१ ॥
तीव्रपापेषु हिंस्रेषु कृपा कार्या विशेषतः ।
त एव हि कृपास्थानं हतात्मानो महात्मनाम् ॥ ३२ ॥
प्रत्यहं पञ्चरात्रं वा बद्धान् क्षीणान् विमोचय ।
शेषानपि यथायोगं मा कांश्चित् नैव मोचय ॥ ३३ ॥
येष्वमोक्षणचित्तं ते जायते तेष्वसंवरः ।
तस्मादसंवरात् पापमजस्रमुपचीयते ॥ ३४ ॥
यावच्च न विमुच्येरंस्तावत्स्युः सुखबन्धनाः ।
नापितस्नानपानान्नभैषज्यवसनान्विताः ॥ ३५ ॥
अपात्रेष्विव पुत्रेषु पात्रीकरणकाङ्क्षया ।
कारुण्या[ त्ताडनं कार्यं न द्वेषान् ]नार्थलिप्सया ॥ ३६ ॥
विमृश्य सम्यग्विज्ञाय प्रदुष्टान् घातकानपि ।
अहत्वा पीडयित्वा च कुरु निर्विषयान् नरान् ॥ ३७ ॥
स्वतन्त्रः पश्य सर्वं च विषयं चारचक्षुषा ।
नित्याप्रमत्तः स्मृतिमान् कुरु कार्यं च धार्मिकम् ॥ ३८ ॥
प्रदानमानसत्कारैर्गुणस्थान् सततं भज ।
उदारैरनुरूपैस्तु शेषानपि यथाविधि ॥ ३९ ॥
संमानस्फीतकुसुमः संप्रदानमहाफलः ।
राजवृक्षः क्षमाच्छायः सेव्यते भृत्यपक्षिभिः ॥ ४० ॥
त्यागशीलमयो राजा तेजस्वी भवति प्रियः ।
शर्करामोदको यद्वदेलामरिचकर्कशः ॥ ४१ ॥

मात्स्यन्यायश्च ते नैवं न्यायाद्राज्यं भविष्यति।
न चान्यायो न वाधर्मो धर्मश्चैवं भविष्यति॥ ४२॥
परलोकात्त्वया राज्यं नानीतं नापि नेष्यसि।
धर्मात् प्राप्तमतोऽस्यार्थे नाधर्मं कर्तुमर्हसि॥ ४३॥
राज्येन भाण्डमूल्येन दुःखभाण्डपरंपराम्।
राजन् यथा नार्जयसि प्रयत्नः क्रियतां तथा॥ ४४॥
राज्येन भाण्डमूल्येन राज्यभाण्डपरंपराम्।
राजन् यथा निर्विशसि प्रयत्नः क्रियतां तथा॥ ४५॥
चतुर्द्वीपमपि प्राप्य पृथिवीं चक्रवर्तिनः।
शारीरं मानसं चैव सुखद्वयमिदं मतम्॥ ४६॥
दुःखप्रतिक्रियामात्रं शारीरं वेदनासुखम्।
संज्ञामयं मानसं तु केवलं कल्पनाकृतम्॥ ४७॥
दुःखप्रतिक्रियामात्रं कल्पनामात्रमेव च।
लोकस्य सुखसर्वस्वं व्यर्थमेतदतोऽर्थतः॥ ४८॥
द्वीपदेशपुरावासप्रदेशस्थानवाससाम्।
शय्यान्नपानहस्त्यश्वस्त्रीणां चैकैकभोग्यता॥ ४९॥
यदा च यत्र चित्तं स्यात् तदानेन सुखं किल।
शेषाणाममनस्कारात्तेषां व्यर्थत्वमर्थतः॥ ५०॥
विषयान् पञ्चभिः पञ्च चक्षुरादिभिरिन्द्रियैः।
न कल्पयति चेद्ब्रह्मन् नास्मात्तेषु तदा सुखम्॥ ५१॥
जानीते विषयं यं यं येन येनेन्द्रियेण च।
तदा न शेषैः शेषाणि व्यर्थान्येव यतस्तदा॥ ५२॥
इन्द्रियैरुपलब्धस्य विषयस्याकृतिं मनः।
उपलभ्य व्यतीतस्य कल्पयन् मन्यते सुखम्॥ ५३॥
एकमर्थं विजानाति यद्यप्येकमिहेन्द्रियम्।
तदप्यर्थं विना व्यर्थं व्यर्थोऽर्थोऽपि च तद्विना॥ ५४॥
प्रतीत्य मातापितरौ यथोक्तः पुत्रसंभवः।
चक्षूरूपे प्रतीत्यैवमुक्तो विज्ञानसंभवः॥ ५५॥
अतीतानागता व्यर्था विषयाः सार्धमिन्द्रियैः।
तद्द्वयानतिरिक्तत्वाद् व्यर्था येऽपि च सांप्रताः॥ ५६॥
अलातचक्रं गृह्णाति यथा चक्षुर्विपर्ययात्।
तथेन्द्रियाणि गृह्णन्ति विषयान् सांप्रतानिव॥ ५७॥

---

१ = MS. III, 7.

इन्द्रियाणीन्द्रियार्थाश्च पञ्चभूतमया मताः ।
प्रतिस्वं भूतवैयर्थ्यादेषां व्यर्थत्वमर्थतः ॥ ५८ ॥
निरिन्धनोऽग्निर्भूतानां विनिर्भागे प्रसज्यते ।
संपर्के लक्षणाभावः शेषेष्वप्येष निर्णयः ॥ ५९ ॥
एवं द्विधापि भूतानां व्यर्थत्वात्संगतिर्वृथा ।
व्यर्थत्वात्संगतेश्चैवं रूपं व्यर्थमतोऽर्थतः ॥ ६० ॥
विज्ञानवेदनासंज्ञासंस्काराणां च सर्वशः ।
प्रत्येकमात्मवैयर्थ्याद्वैयर्थ्यं परमार्थतः ॥ ६१ ॥
सुखाभिमानो दुःखस्य प्रतीकारे यथार्थतः ।
तथा सुखाभिमानोऽपि सुखस्य प्रतिघातजः ॥ ६२ ॥
सुखे संयोगतृष्णैवं नैःस्वाभाव्यात्प्रहीयते ।
दुःखे वियोगतृष्णा च पश्यतां मुक्तिरित्यतः ॥ ६३ ॥
कः पश्यतीति चेच्चित्तं व्यवहारेण कथ्यते ।
न हि चैत्तं विना चित्तं व्यर्थत्वान्न सहेष्यते ॥ ६४ ॥
व्यर्थमेवं जगन्मत्वा याथाभूत्यान्निरास्पदः ।
निर्वाति निरुपादानो निरुपादानवह्निवत् ॥ ६५ ॥
बोधिसत्त्वोऽपि दृष्ट्वैवं संबोधौ नियतो मतः ।
केवलं त्वस्य कारुण्यादा बोधेर्भवसंततिः ॥ ६६ ॥
बोधिसत्त्वस्य संभारो महायाने तथागतैः ।
निर्दिष्टः स तु संमूढैः प्रद्विष्टैश्चैव निन्द्यते ॥ ६७ ॥
गुणदोषानभिज्ञो वा दोषसंज्ञी गुणेषु वा ।
अथवापि गुणद्वेषी महायानस्य निन्दकः ॥ ६८ ॥
परोपघातिनो दोषान् परानुग्राहिणो गुणान् ।
ज्ञात्वोच्यते गुणद्वेषी महायानस्य निन्दकः ॥ ६९ ॥
यत्स्वार्थनिरपेक्षत्वात् परार्थैकरसप्रियम् ।
गुणाकरं महायानं तद्द्वेषी तेन दह्यते ॥ ७० ॥
श्राद्धोऽपि दुर्गृहीतेन द्विष्यात् क्रुद्धोऽथवेतरः ।
श्राद्धोऽपि दग्ध इत्युक्तः का चिन्ता द्वेषबन्धुरे ॥ ७१ ॥
विषेणापि विषं हन्याद्यथैवोक्तं चिकित्सकैः ।
दुःखेनाप्यहितं हन्यादित्युक्ते किं विरुध्यते ॥ ७२ ॥
मनःपूर्वंगमा धर्मा मनःश्रेष्ठा इति श्रुतेः ।
हितं हितमनाः कुर्वन् दुःखेनाप्यहितं कथम् ॥ ७३ ॥

1 Compare Dhammapada, I. 1–2

दुःखमप्यायतीपथ्यं कार्यं किमु सुखं हितम् ।
आत्मनश्च परेषां च धर्म एष सनातनः ॥ ७४ ॥
मात्रासुखपरित्यागात् पश्चाच्चेद्विपुलं सुखम् ।
त्यजेन्मात्रासुखं धीरः संपश्यन् विपुलं सुखम् ॥ ७५ ॥
न मृष्यते च यद्येतत् कटुभैषज्यदायिनः ।
ततश्चिकित्सकाद्याश्च हता नैवं च युज्यते ॥ ७६ ॥
अपथ्यमपि यद्दृष्टं तत्पथ्यं पण्डितैः क्वचित् ।
उत्सर्गश्चापवादश्च सर्वशास्त्रेषु शस्यते ॥ ७७ ॥
करुणापूर्वकाः सर्वे निष्यन्दा ज्ञाननिर्मलाः ।
उक्ता यत्र महायाने कस्तन्निन्देत्सचेतनः ॥ ७८ ॥
अत्यौदार्यातिगाम्भीर्याद्विषण्णैरकृतात्मभिः ।
निन्द्यतेऽद्य महायानं मोहात् स्वपरवैरिभिः ॥ ७९ ॥
दानशीलक्षमावीर्यध्यानप्रज्ञाकृपात्मकम् ।
महायानमतस्तस्मिन् कस्माद्दुर्भाषितं वचः ॥ ८० ॥
परार्थो दानशीलाभ्यां क्षान्त्या वीर्येण चात्मनः ।
ध्यानं प्रज्ञा च मोक्षाय महायानार्थसंग्रहः ॥ ८१ ॥
परा[त्महित]मोक्षार्थाः संक्षेपाद्बुद्धशासनम् ।
ते षट्पारमितागर्भास्तस्माद् बौद्धमिदं वचः ॥ ८२ ॥
पुण्यज्ञानमयो यत्र बुद्धैर्बोधेर्महापथः ।
देशितस्तन्महायानमज्ञानाद्दै न दृश्यते ॥ ८३ ॥
खमिवाचिन्त्यगुणत्वादुक्तोऽचिन्त्यगुणो जिनः ।
महायाने यतो बुद्धमाहात्म्यं क्षम्यतामिदम् ॥ ८४ ॥
आर्यशारद्वतस्यापि शीलमात्रेऽप्यगोचरः ।
यस्मात् तद्बुद्धमाहात्म्यमचिन्त्यं किं न मृष्यते ॥ ८५ ॥
अनुत्पादो महायाने परेषां शून्यता क्षयः ।
क्षयानुत्पादयोश्चैक्यमर्थतः क्षम्यतां यतः ॥ ८६ ॥
शून्यता बुद्धमाहात्म्यमेवं युक्त्यानुपश्यताम् ।
महायानेतरोक्तानि न समेयुः कथं सताम् ॥ ८७ ॥
तथागताभिसंध्योक्तान्यसुखं ज्ञातुमित्यतः ।
एकयानत्रियानोक्तादात्मा रक्ष्य उपेक्षया ॥ ८८ ॥
उपेक्षया हि नापुण्यं द्वेषात्पापं कुतः शुभम् ।
महायाने यतो द्वेषो नात्मकामैः कृतोऽर्हति ॥ ८९ ॥

न बोधिसत्त्वप्रणिधिर्न चर्यापरिणामना ।
उक्ताः श्रावकयानेऽस्माद्बोधिसत्त्वः कुतस्ततः ॥ ९० ॥
अधिष्ठानानि नोक्तानि बोधिसत्त्वस्य बोधये ।
बुद्धैरन्यत्प्रमाणं च कोऽस्मिन्नर्थे जिनाधिकः ॥ ९१ ॥
अधिष्ठानार्यसत्यार्थबोधिपक्षोपसंहितात् ।
मार्गाच्छ्रावकसामान्याद्बौद्धं केनाधिकं फलम् ॥ ९२ ॥
बोधिचर्याप्रतिष्ठार्थं न सूत्रे भाषितं वचः ।
भाषितं च महायाने ग्राह्यमस्माद्विचक्षणैः ॥ ९३ ॥
यथैव वैयाकरणो मातृकामपि पाठयेत् ।
बुद्धोऽवदत्तथा धर्मं विनेयानां यथाक्षमम् ॥ ९४ ॥
केषांचिदवदद्धर्मं पापेभ्यो विनिवृत्तये ।
केषांचित्पुण्यसिद्ध्यर्थं केषांचिद् द्वयनिश्रितम् ॥ ९५ ॥
द्वयानिश्रितमेकेषां गम्भीरं भीरुभीषणम् ।
शून्यताकरुणागर्भमेकेषां बोधिसाधनम् ॥ ९६ ॥
इति सद्भिर्महायाने कर्तव्यः प्रतिघक्षयः ।
प्रसादश्चाधिकः कार्यः सम्यक्संबोधिसिद्धये ॥ ९७ ॥
महायानप्रसादेन तदुक्ताचरणेन च ।
प्राप्यतेऽनुत्तरा बोधिः सर्वसौख्यानि चान्तरा ॥ ९८ ॥
दानं शीलं क्षमा सत्यं गृहस्थस्य विशेषतः ।
धर्म उक्तः कृपागर्भः स सात्मीक्रियतां दृढम् ॥ ९९ ॥
अथ लोकस्य वैधर्म्याद्राज्यं धर्मेण दुष्करम् ।
ततो धर्मयशोर्थं ते प्रव्रज्याधिगमः क्षमः ॥ १०० ॥

रत्नावल्यां राजवृत्तोपदेशो नाम चतुर्थः परिच्छेदः ॥

---

[1] Stanzas 94–96 cited in प्र. प. p. 153.

# CRITICAL NOTES

**Page 1.** The correct TITLE of this work of Nāgārjuna is मध्यमक, or मध्यमक-शास्त्र. It consists of over 400 kārikās divided into 27 chapters. The present edition includes also the Commentary called *Prasannapadā* by Candrakīrti. Poussin uses the title माध्यमिकवृत्ति which later he corrected to मध्यमकवृत्ति. Even now scholars loosely cite this work as माध्यमिकवृत्ति. As explained in the Introduction the name of the work is मध्यमक or मध्यमकशास्त्र, and name of the Commentary on it is प्रसन्नपदा.

Page 1, Line 2—योऽन्तद्वयावासविधूतवासः is an epithet of नागार्जुन who has thrown to winds the stand of resorting to two extreme views. These antas are अस्ति and नास्ति; शाश्वत and उच्छेद; संसार and निर्वाण etc. We find the mention of these antas in numerous places in almost identical terms as for instance in Saṁyutta Nikāya, III. 135 : सब्ब अत्थीति...अयं एको अन्तो । सब्बं नत्थीति अयं दुतियो अन्तो । एते ते कच्चान उभो अन्ते अनुपगम्म मज्झेन धम्मं देसेति—अविज्जापच्चया संखारा, etc. Compare also the Com. on MŚ. 15.7 as given on page 118. The reading योऽन्तर्दयावासविधूतवासः, found in Mss. but not confirmed by T, may be interpreted as अन्तर्दयाया वासेन विधूतः वासः गृहं येन.

Page 1. l. 3—सद्धर्मतोयस्य गभीरभावं...जगाद, who preached the depth of the ocean-waters of true law. The reading सद्धर्मकोषस्य found in T is equally good.

Page I, l. 9–उत्तानसत्प्रक्रियवाक्यनद्धां, equipped with phrases which are उत्तान, clear or easy to understand, सत्प्रक्रियवाक्य, with phrases based on right etymological sense. तर्कानिलाव्याकुलितां, not overwhelmed by breeze of तर्क, reasoning. Note that the name of Bhāvaviveka's Commentary on MŚ. is तर्कज्वाला, flame of the fire of reasoning. प्रसन्नां, characterised by clarity of word and sense. Compare प्रसादिस्तु स्वच्छता शब्दार्थयोः.

Page 1. l, 10 शास्त्रम् i. e., मध्यमकम् or मध्यमकशास्त्रम्; Cf. p 13, l; p. 240, l. 16; also मध्यमकदर्शन on p. 120, l. 17.

Page 1, l. 11 मध्यमकावतारविहितविधिना, according to the procedure described in मध्यमकावतार which is the work of the commentator Candrakīrti.

Page 1, 1. 11–अद्वयज्ञानालंकृतं etc. Nāgārjuna composed his मध्यमकशास्त्र for the benefit of persons in order to teach them the अद्वयज्ञान, the doctrine of identity of प्रतीत्यसमुत्पाद, शून्यता, प्रज्ञप्ति and मध्यमा प्रतिपत्. Compare :

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे ।
सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा ॥ [ म० शा० – २४.१८ ]

Page 1, l. 12–प्रथमचित्तोत्पादं तथागतज्ञानोत्पत्तिहेतुम्, the cause of obtaining the knowledge 'बोधि' of तथागत, is the first चित्तोत्पाद. There are ten cittotpādas corresponding to ten bhūmis of तथागत. For details, see शिक्षासमुच्चय and गण्डव्यूहसूत्र ( मैत्रेयविमोक्ष ).

Page 1, l. 13–विदिताविपरीतप्रज्ञापारमितानीतिः, Nāgārjuna, who knew the correct interpretation of the class of works going under the name of प्रज्ञापारमिता. This epithet clearly shows that Nāgārjuna, in his मध्यमकशास्त्र, wants to codify the teaching of प्रज्ञापारमिता.

Page 1. l. 15 The term शास्त्र is to be derived from two roots, viz., शास् to rule, and त्रै to protect. This stanza is also cited on page 4 by स्थिरमति in his मध्यान्त-विभागसूत्रभाष्यटीका, with reading च for वः.

Page 2, l. 1–अनिरोधमनुत्पादम् etc. These two Kārikās, which, according to Candrakīrti, constitute the मङ्गल composed to salute the तथागत at the beginning of his work by नागार्जुन. Poussin does not count these stanzas as forming part of मध्यमकशास्त्र and hence does not number them, while I take them to be a part of the work and have numbered them as on page 4.

*Page* 2, 1. 4—This work aims at explaining the doctrine of प्रतीत्यसमुत्पाद characterised by the eight epithets, viz., अनिरोध, अनुत्पाद, अनुच्छेद, अशाश्वत, अनेकार्थ, अनानार्थ, अनागम and अनिर्गम, all negative terms meaning devoid of निरोध, destruction etc.

Page 2, l. 10—स्थाणुः, eternal. स्थास्नु also means the same. L. 12—उपसर्गवशेन धात्वर्थविपरिणामात्, the meanings of roots undergo changes on account of prefixes. The following stanza is also cited by स्थिरमति in his Commentary on मध्यान्तविभाग, p. 5. Note Particularly the second line which in Pāṇinian school is प्रहाराहारसंहारविहारपरिहारवत्.

Page 2, l. 16—The term प्रतीत्यसमुत्पाद is here derived from प्रति + इ and सम्+उद्+पद्. The part प्रतीत्य is a Gerund and means प्राप्ति and अपेक्षा, and समुत्पाद means birth, production; so the meaning of the entire expression is production or origination dependent on certain conditions, or in short, dependent origination.

Page 2, l. 18. Another explanation of the term प्रतीत्यसमुत्पाद is cited here which is : प्रति प्रति इत्यानां विनाशिनां समुत्पादः, production of objects which perish again and again, which explanation suits certain passages cited here. In अभिधर्मकोशव्याख्या this explanation is attributed to भदन्त श्रीलाभ. Here it is : अन्ये पुनरिति भदन्तश्रीलाभः । प्रतिर्वीप्सार्थ इति । नानावाचिनामधिकरणानां सर्वेषां क्रियागुणाभ्यां व्याप्तुमिच्छा वीप्सा, तामयं प्रतिर्द्योतयति । इतौ गतौ साधवः इत्याः । तत्र साधुः [पा. ४. ४. ९८] इति यत्प्रत्ययः । इतौ विनष्टौ साधवः, अनवस्थायिन इत्यर्थः । सम् उपसर्गः समवायार्थं द्योतयति । उत्पूर्वः पदिः प्रादुर्भावार्थम् । धात्वर्थपरिणामात् तां तां सामग्रीं प्रतीति प्रतेर्वीप्सार्थतां दर्शयति । इत्यानां विनश्वराणां समवायेनोत्पादः प्रतीत्यसमुत्पादः । न कश्चिद्धर्म एक उत्पद्यते, सहोत्पादनियमात्.

Candrakīrti, however, does not like this method of deriving the term, particularly in passages like चक्षुः प्रतीत्य रूपाणि च उत्पद्यते चक्षुर्विज्ञानम्, as this explanation does not convey the sense of वीप्सा. Further, if we take the word इत्य as ending in a तद्धितप्रत्यय यत्, which then is not an indeclinable, and hence cannot form a compound with समुत्पाद. Hence, the commentator holds that his explanation, viz. हेतुप्रत्ययापेक्षो भावानामुत्पादः प्रतीत्यसमुत्पादार्थः, is the right one.

Page 2, l. 2– प्रतीत्यसमुत्पादं वो भिक्षवो देशयिष्यामि, cf. S. N. II. 1. 5. 2. 13.

Page 2, l. 20—यः प्रतीत्यसमुत्पादं पश्यति, स धर्मं पश्यति is found in शालिस्तम्बसूत्र.

Page 2, l. 21—इह तु etc. The passage contains the same argument as is found in अभिधर्मकोशव्याख्या–प्रतिर्वीप्सार्थं इत्येवमादिका कल्पना अत्रैव प्रतीत्यसमुत्पादसूत्रे युज्यते । इह कथं भविष्यति ? चक्षुः प्रतीत्य रूपाणि च उत्पद्यते चक्षुर्विज्ञानमिति ? न हि प्रतीत्यानां चक्षूंषि प्रतीत्य चक्षूंषीति समासः संभवति, अर्थायोगात् । चक्षुर्हि प्रतीत्य रूपाणि प्राप्य च उत्पद्यते चक्षुर्विज्ञानमित्ययमर्थो गम्यते.

Page 3, l. 1– यत्तु etc. This seems to be the view of भावविवेक who is now charged hat he does not possess skill to reproduce correctly the views of the opponents before attempting their refutation, परपक्षानुवादाकौशल. Ultimately, Candrakīrti says that the term प्राप्य means अपेक्ष्य, and cites in support the authority of Nāgārjuna. The whole page 3 is devoted to refute the interpretation of प्रतीत्यसमुत्पाद given by भावविवेक.

Page 3, l. 18– यच्चापि स्वमतं व्यवस्थापितम्, i. e., the view of भावविवेक, viz., इदं प्रत्ययतार्थः प्रतीत्यसमुत्पादार्थः is not approved by Candrakīrti, because it does not explain the term by correct derivation.

Page 4, l. 2– सांवृतानां पदार्थानाम् etc. All objects, according to Mādhyamikas, are valid only from the point of view of संवृति, i. e., व्यवहार. संवृति is so called because it obscures the true nature of things.

Page 4, l. 4—आर्यज्ञानापेक्षया, from the view-point of an ārya, i.e., Buddhist. In other words, from the point of view of परमार्थ, as opposed to संवृति.